(२) तत्रैव कुम्भीभिः स्रुचो निवृत्तिः, प्रदानं कुम्भीभिरेवेति प्राप्ते ।

(३) मध्ये चिन्ता—किं दोहे अन्याः कुम्भ्यः प्रदानेऽन्याः इति संशये "सह कुम्भीभिः" इत्युक्तेः प्रदाने बहुत्वं दोहे तु द्वित्वमेवेति पूर्वपक्षे दोहेपि कुम्भीबहुत्वमेवेति। स्थितादुत्तरं—कुम्भीभिः दारुपात्रैर्वेति विकल्पः तथाश्रवणात् ।

(४) तत्रैव शेषकार्याणि न कर्तव्यानि तेषां कालातिक्रमात् ।

(५) तत्रैव उपस्तरणाभिघारणादीनि कर्तव्यानि न वेति सन्देहे सहकुम्भीभिरभिक्रामन्नाहेत्युक्तेः न कार्याणि तत्कालस्यातिक्रमात् ।

(६) अभिक्रामन्नाहेन्द्रायानुब्रूहि आश्रावयेन्द्रं यजेति प्रैषत्रयं अभिक्रमणकाल एव कर्तव्यं सान्तत्येनेति प्राप्ते, लिङ्गादेते यथाकालमेव क्रियेरन् ।

(७) दाक्षायणयज्ञस्य आवृत्तिविशिष्टत्वात् दर्शस्येव पौर्णमास्या अप्यावृत्तिरिति प्राप्ते उत्तरस्यैव पौर्णमासीप्रयोगस्याभ्यासः विशेषश्रवणात् ।

(८) अर्धमासं सोमं पिबति इति श्रवणात् अर्धमासमभ्यास इति प्राप्ते पर्वणि सकृदेव पञ्चदशवर्षाणि अभ्यासेन द्विः प्रयोगः कर्तव्यः, कर्मविधावभ्यासाश्रवणात् ।

(९) 'तस्यैतद्व्रतं नानृतं वदेत्' इत्युक्तदाक्षायणयज्ञव्रतं प्राकृतमेवेति पूर्वपक्षे स एतमर्धमासं यज्ञो वितत इत्युक्तेः चातुर्मास्यव्रतवत् व्रतान्तरमिदं अपरपक्षे इष्टिद्वयान्तराले कार्यमिति

(१०) दर्शपूर्णमासनिष्ठयावज्जीविकत्वस्य विकारेष्वपि प्रवृत्तिरिति प्राप्ते कर्त्रङ्गस्य यावजीविकत्वादेः अप्रवृत्तिरिति ॥

(११) यूपविरोहणनिमित्तं प्रायश्चित्तं न दीर्घकालविकृतावेव किन्तु प्रकृतावपि भवत्येव प्रकृतौ दीक्षादिन एव यूपच्छेदनात् यागसमाप्तेः पूर्वं तत्सम्भवात् ।

(१२) यदीष्ट्या यदि पशुना यदि सोमेन यजेत यत्रैवास्य पूर्वोऽभिश्रितः स्यात् तमपरमन्ववसाय यजेत इत्यत्र किं सामीप्यवादः उत द्रव्योपदेश इति विशये सामीप्यवाद इति प्राप्ते लक्षणापत्तेः पुराणाभिद्रव्योपदेश एवायम् । मध्ये चिन्ता ।

द्रव्योपदेशश्चेदविशेषेणेष्टिपशुसोमानामिति प्राप्ते, सोमे प्रतिषेधः तस्य सोमद्रव्योपदेशात् अतः इष्टिपशुबन्धयोरेवायं गुणविधिरिति ।

स्थितादुत्तरं—अग्निचित्कर्तृकसोमे लोकंपृणारूपगुणविधिरयं इतरत्सर्वमर्थवादः ।

(१३) लोकंपृणाः साग्निचित्येषु सोमेषु स्युः उत अग्निचित्कर्तृककेवलसोमे इति संशये प्रकरणात् साग्निचित्यक्रतुषु इति प्राप्ते अनग्निचितः केवलसोमे स्यात् अग्निचित्सोमेन इति व्यपदेशात् ।

(१४) दर्शपूर्णमासप्रकृतिकानां कर्मणां सौमिकमेव बर्हिः प्रसङ्गादुपकरोतीति प्राप्ते आतिथ्यायामुपयुक्तस्य बर्हिषः सौमिकबर्हिरुपरि स्तरणम् ।

(१५) अग्नीषोमीयपशौ प्लाक्षं बर्हिर्भवति इत्युक्तं प्लक्षशाखामयं बर्हिः सवनीये स्यात् अग्नीषोमीये आतिथ्याबर्हिषः सत्त्वादिति चेन्न, अस्य समेधस्यैव पशोरवद्यति इति अवदानार्थत्वात् पूर्वस्य स्तरणार्थत्वात न बाध्यबाधकभावः । अग्नीषोमीय एवेदम् ।

(१६) सवनीयपशुक्रमे उक्तं 'बर्हिः स्तृणीहि' इति । तत् पशोः पुरोडाशानां च उत पुरोडाशानामेव उत सौमिकस्य पृष्ठ्यबर्हिषः वाद इति संशये ऐष्टिकेषु प्रत्यक्षबर्हिषोऽभावात् सौमिकस्य पृष्ठ्यबर्हिषो वाद इति ।

(१७) यथाभागं व्यावर्तेतामिति देवतामुद्दिश्य वाद इति प्राप्ते पिण्डावेवात्र संबोध्यौ अन्तरङ्गत्वात् ।

(१८) विभागलिङ्गास्तु 'इदमग्नेः' इत्यादयः तेषां विभागार्थत्वमिति प्राप्ते विभक्तयोर्देवतानिर्देशोऽयम् ।

(१९) 'अग्नये' अग्नीषोमाभ्यामिति मन्त्रयोरपि पूर्ववदेव निर्णयः ।

(२०) पुरोडाशगणे बहूनां पुरोडाशानामेकपिण्डे व्यावर्तेथां इति मन्त्रः अविकारेण प्रयोक्तव्य इति प्राप्ते यद्यपि द्वौ पिण्डौ तथापि हविषां बहुत्वात व्यावर्तध्वमित्यूहः ।

(२१) उत्तमयोः पिण्डयोस्तु व्यावर्तेथामित्येव प्रयोगः अन्विताथर्त्वात् न तु व्यावर्तध्वमित्यूहः ।

(२२) निभक्तानां सर्वेषां पिण्डानां देवतोपलक्षणं कार्यमिति प्राप्ते उत्तमयोरेव तत युगपदवच्छिन्नयोः तयोरेव सन्देहात् ।

(२३) चरुपुरोडाशीयद्रव्याणां प्रागधिवापनात् विभागे विभागमन्त्रः प्रयोक्तव्यो न वेति संशये प्रयोक्तव्यः अर्थाद्विभागापकर्षे मन्त्रोऽपि अपकष्टव्यः इति सिद्धान्तः ।

(२४) चरुपुरोडाशगणे द्वौराशी कृत्वा एकैकस्या राशेः पृथक् मन्त्रप्रयोगः कार्यः न तु प्रत्येकं हविषां विभागेन ।

(२५) अव्यतिषक्ते चरुपुरोडाशगणे तण्डुलविभागे देवतोपलक्षणं न कर्तव्यमिति प्राप्ते एतासां देवतानामयं राशिरिति विभज्य कर्तव्यमेवेति सिद्धान्तः ।

(२६) व्यतिषक्तेषु चरुपुरोडाशेष्वपि तन्त्रत्वात् क्रमाभावात् कर्तव्यमेव ।

(२७) सर्वपृष्ठेष्टावपि विभागमन्त्रः यथाप्रकृति प्रयोक्तव्य इति प्राप्ते नात्र हवींषि विभज्यन्ते । अतो विभागाभावान्न मन्त्र इति ।

## चतुर्थः पादः । ( यूपपादः )

(1) वाजिनयागः कर्मान्तरं वाजिनं चाप्रयोजकम् इति सिद्धानुवादः ।

(१) चातुर्मास्येषु आमिक्षाहविषः वाजिनेनोपसेचनं विहितं तत् शेषशब्दाद्य-भावात् स्वतन्त्रवाजिनान्तरस्य प्रयोजकं इति चेन्न, परार्थामिक्षानुनिष्पन्नस्य विनियोगाकाङ्क्षायां यागोपसेचनयोः समकालप्रवृत्तेः ध्रौवाज्यवत् उभयत्र विनियोगात् न वाजिनान्तरमुत्पाद्यम् ।

(२) आमिक्षायागे स्विष्टकृन्न कर्तव्यः वाजिनयागीयानुवषट्कारयागस्य तत्कार्यकारि-त्वादिति चेन्न, अस्य वाजिनयागशेषप्रतिपत्तिरूपत्वात् आमिक्षायागस्य प्रतिपत्त्यपेक्षायां स्विष्टकृत्कर्तव्यैव ।

(३) वाजिनयागस्यानुवषट्कारयागः स्विष्टकृत्स्थानापन्नत्वात् पुनरवदाय कर्तव्यः इति चेन्न, अनुशब्दस्वारस्यात् वाजिनयागशेषादेव कर्तव्य इति ।

(४) 'विशाखो यूपो भवति' इति श्रुतं नानाशाखावत्त्वं यूपस्यादृष्टार्थमिति चेन्न, कार्यार्थित्वसम्भवात् नादृष्टार्थत्वम् ।

(५) विशाखासु यूपधर्माः अञ्जनादयो भवन्त्येव, खलेवाल्यामिव ।

(६) विशाखत्वं यूपस्य नाभेरूर्ध्वं स्यात् अधस्तात्परिव्याणात् ।

(७) विशाखे "दिवमग्रेण मा लेखीरन्तरीक्षं मध्येन मा हिंसी' रीति मन्त्रे अग्रमध्यशब्दौ समवेतार्थौ अतः अग्राभ्यां मध्याभ्यां इत्यूहः कार्यः ।

(८) पञ्चारत्निं यूपं वृश्चति यजमानसम्मितौदुम्बरी भवति इत्यादौ पञ्चारत्नित्वादिकं मूलादारभ्येति चेन्न, दृश्यमानस्य पौरुषता, नियोजने नियुक्तस्य पञ्चारत्नितेति निखातादूर्ध्वमेव पञ्चारत्नित्वादि ।

(९) नाभिदघ्ने परिव्ययतीत्यपि निखातादूर्ध्वमेवेति सिद्धान्तः ।

(१०) पञ्चारत्नित्वं यूपे यस्य कस्यचिद्धस्तेन ग्राह्यमिति चेन्न, औदुम्बरीसम्मानवत् यजमानेन स्वारत्निभिः मातव्यो यूपः ।

(११) 'व्याममात्राणि पक्षपुच्छानि भवन्ति' इत्यत्र व्याममात्रत्वं लौकिकमेव ग्राह्यं नाध्वर्योरिति नियमः, तस्याचोदितत्वात् ।

(१२) चतुरो मुष्टीन्निर्वपति इत्यत्र तु न यस्य कस्यचिन्मुष्टिः ग्राह्यः, किन्तु अध्वर्योरेव निर्वापस्याध्वर्यवत्वात् मुष्टेश्च कर्माङ्गत्वात् ।

(१३) यूपैकादशिन्यां "अग्निष्ठे ऐकादशिना रशनाः परिवीय वासयति" इति किं रशनासंस्कारः उत यूपसंस्कार इति विशये नायं रशनासंस्कारः किन्तु यूपसंस्कारोऽयं त्रिवृतायूपं परिवीयेतिवत् ।

(१४) मध्ये चिन्ता —

तासां रशनानां मध्ये नाभिदघ्ने एकां परिवीय अन्याः यथावकाशं परिव्ययतीति प्राप्ते अग्निष्ठेपि नाभिदघ्नदेशमन्तर्भाव्य सर्वासां युगपत्परिव्याणम् । पुनर्मध्ये चिन्ता-विकृतौ द्वैरशन्यस्थलेपि युगपदुभाभ्यां परिव्याणम् ।

(१५) स्थितादुत्तरं 'अग्निष्ठात् द्वे द्वे आदाय' इति रशनानां अग्निष्ठात् पृथगुपादानश्रुतेः युगपत् परिव्याणे युगपद्विमोकप्रसङ्गः ततश्च पृथगेव परिव्याणम् ।

(१६) 'युवा सुवासाः' इति क्रियमाणानुवादी हौत्रमन्त्रः क्रियाणां पृथक्त्वात् पृथक् प्रयोक्तव्य इति प्राप्ते तन्त्रमेव, यूपाभिधानत्वात् यूपस्य चैकत्वात् ।

(१७) आद्यस्थितादुत्तरं--न यूपसंस्कारः, परिवीयवासयतीति श्रवणात् रशनासंस्कार एवेति ।

(१८) साग्निचित्ये विकृतौ प्राकृतान् एकादशिनान् प्रतिषिध्य 'एकयूपं मिनोति' इति विधिः अप्राकृतयूपविधानात् यूपधर्मान् व्यावर्तयतीति प्राप्ते 'एकां सामिधेनीमाह' इतिवत् प्राकृतयूपे सङ्ख्याविधिः । अतः प्राकृतधर्माः ।

(१९) एकादशापि यूपाः पूर्वेद्युरेव सम्मातव्याः प्रकृतिवदिति प्राप्ते अग्निष्ठस्यैव पूर्वेद्युरुच्छ्रयणं इतरेषां तु प्रधानकालत्वादङ्गानां सुत्याकालीनपश्वैकादशिन्यङ्गानां सुत्याकाल एव सम्मानम् ।

(२०) सद्यस्सम्मानपक्षे एकादशयूपानां सम्मानं आवृत्त्यैवेति प्राप्ते,

**मध्येचिन्ता**—अग्नीषोमीयरशनावत् अग्निष्ठरशनायाः भिन्नकालत्वात् तन्त्रत्वेपि सुत्याकालीनपरिव्याणस्याहर्गणे आवृत्तिरेवेति ।

**स्थितादुत्तरं**—अहर्गणे सुत्याकालीनसम्मानादि तन्त्रमेवेति ।

(२१) एकादशिन्यां अग्निष्ठादन्ये यूपाः यथासम्भवं निखेया इति प्राप्ते तिरश्चीर्मिनोति इति श्रुतेः अग्निष्ठादुदग्दक्षिणपार्श्वयोर्निखेयाः ।

(२२) यूपैकादशिन्यां यूपान्तरालं 'रथाक्षेण विमिमीते' इति श्रुतेः रथाक्षमात्रं स्यात् ।

(२३) वेदिसम्मितां मिनोति इत्युक्तवेदिसम्मानस्य न रथाक्षेण विकल्पः वेदिविवृद्धेः उभयोरेकवाक्यत्वात् ।

(२४) अग्निष्ठादितरेषां यूपानां प्रधानदेशलाभाय तदुदग्दक्षिणपार्श्वयोर्मानं इति चेन्न "उदगपवर्गा यूपा भवन्ति दक्षिणापवर्गाः पशवः" इति वचनात् पशुक्रमेण नव यूपान् मीत्वा दशमस्य स्थानमतिक्रम्य वेद्याग्नेयकोणे दशमं मीत्वा तदुदग्भागे एकादशं मिनुयात् । एवं सति पश्वङ्गत्वेन तत्क्रमानुरोधः उदगपवर्गत्वं च सिद्ध्यति ।

(२५) उपरसम्मितां इत्यादयः काम्या विधयः उपरः निखातो यूपभागः तत्साम्यं यूपस्य । एवमन्येपि ।

(२६) पश्वैकादशिन्यां व्यत्यस्तपशून् विधाय 'तामेतां कापेया विदुः' इत्याम्नानात् उभयोः अहीने उत्कर्ष इति प्राप्ते तामेतां कापेया इत्युक्तव्यत्यस्तपशोरेवोत्कर्षः । अन्यस्य प्रकृतौ निवेशः ।

## द्वितीयाध्यायः

### प्रथमः पादः ( इष्टकापादः )

(१) चयने-इष्टकाशब्दस्य आकृतिवचनत्वात् इष्टकाभिरग्निं चिनुते इत्यत्र अनियमेन लोहमय्यो मृन्मय्यो वा इष्टका ग्राह्या इति प्राप्ते मृन्मय्य एव ग्राह्याः तथैव लोकप्रसिद्धेः ।

(२) तासां संस्थानं अनियतमिति प्राप्ते अश्रिमत्त्वं नियतं तथैव चितिनिर्वृत्तिरूपकार्यसामर्थ्यात् ।

(३) ताश्च समचतुरश्रा भवेयुः समं स्यादश्रुतत्वात् इति न्यायात् ।

(४) पशुशीर्षाद्युपधाने यदन्तरालमुत्पद्यते तत्पूरणार्थं कतिपये इष्टका निर्मातव्या इति चेन्न किञ्चिदन्तरालसत्त्वेपि ' चितः प्रासाद ' इतिवद्व्यपदेशसम्भवात् नान्या इष्टकाः निर्मातव्याः ।

(५) सर्वान् वर्णानिष्टकानां कुर्यादिति श्वेतादिवर्णपरमिति चेन्न, लोके वर्णपदस्य तदर्थत्वेपि अत्र नानारेखावतीनामिष्टकानां देशविशेषं विधाय सर्वान् वर्णानिति श्रुतेः रेखापरत्वमेव ।

(६) इष्टकानां पाकः कार्यो न वेति संशये नैर्ऋतीः तुषपक्वा उपदधातीति केषाञ्चित् पाकविशेषोक्तेः सर्वासां पाकः कार्यः ।

(७) इष्टकापाकार्थोऽग्निः वैहारिक एवेति चेन्न, विना वचनं विहारदेशादग्नेः बहिर्नयनायोगात् सः लौकिक एव । तत्रापि निर्मन्थ्येनेष्टकाः पचन्तीत्युक्तेः निर्मन्थ्यः ।

(८) अमृन्मयीषु दूर्वेष्टका उपदधातीत्यादिविहितेष्टकासु इष्टकाधर्माः न कार्याः इष्टकात्वजातेरभावादिति चेन्न, तास्वपि इष्टकाशब्दप्रयोगस्य प्रयोजनान्तराभावात् इष्टकाधर्मप्राप्त्यर्थत्वमेवेति ।

(९) सिकतानामपि चयननिर्वर्तकत्वात् तदुपधानेपि तयादेवतयेति मन्त्रः प्राप्नोति इति चेन्न ' सहस्रेष्टकं ' इति इष्टकासु सहस्रसङ्ख्यत्वं श्रूयते । सिकतासु तु अपरिमिताभिः पूरयतीत्युक्तेः सहस्रसङ्ख्याबहिर्भावात् न तयादेवतम् ।

(१०) चरोः सर्वौषधस्य च इष्टकाधर्मा भवेयुरिति चेन्न अनिष्पन्ने स्थण्डिले सर्वौषधवपनं निष्पन्ने स्थण्डिले चरुनिधानं इति इष्टकाकार्यापत्त्यभावात् न तद्धर्माः ।

(११) नैर्ऋतीरक्ता उपदधाति इत्युक्तोपधाने इष्टकाधर्मा भवेयुरिति चेन्न उरव्यशिक्यप्रतिपत्त्यर्थत्वेन तत्प्रतिपत्तित्वान्न भवेयुरिति ।

(१२) 'सहस्रं चिन्वीत प्रथमं चिन्वान' इत्यादौ सहस्रपदं सहस्रदक्षिणक्रतुपरमिति चेन्न, लक्षणापत्तेः चयनपर एव ।

(१३) 'साहस्रं चिन्वीत' इत्यत्र साहस्रपदं दक्षिणापरमिति चेन्न, इष्टकाभिरेव साहस्रत्वं साहस्रः प्रसाद इतिवत् ।

(१४) 'सहस्रस्य प्रमाअसि' इति मन्त्रः 'सहस्रचित्यङ्गमेवेति चेन्न, सर्वचितिषु मन्त्रः प्रयोक्तव्यः सहस्रशब्दस्य स्तावकत्वात् ।

(१५) किं लोकंपृणमन्त्रोपधेया एव सहस्रं उत नानामन्त्रोपधेया इति संशये सैर्वैरेव मन्त्रैरुपधेयाः सहस्रं स्युः ।

(१६) इष्टकाविवृद्धौ सन्निहितमन्त्रा एव आवर्तनीया इति प्राप्ते लोकंपृणायाः अयातयामत्वश्रुतेः तयैवावशिष्टा उपधेयाः ।

(१७) चितिशब्दः लोकप्रयोगात् प्रस्तारपर इति प्राप्ते पुरीषव्यवहिते इष्टकासञ्चिते चितिशब्दः । ततश्च तत्कृतव्यवधानभेदेन पञ्चचितयः इत्युपपन्नम् ।

(१८) प्राचीरुपदधातीत्यादौ पुरुषस्यैव प्राङ्मुखत्ववादः इति प्राप्ते एकैकस्या इष्टकाया मुखाद्यभावेपि बह्वीनामिष्टकानामुपधाने प्रागपवर्गत्वसम्भवात् रीतिवादोऽयम् ।

(१९) 'पश्चात्प्रतीचीमुत्तमामुपदधाति' इत्यपि रीतिवाद इति चेन्न 'तस्मात् पश्चात्प्रतीची पत्न्यन्वास्ते' इति वाक्यशेषात् कर्तृमुखवादोऽयम् ।

(२०) कूर्मं प्राञ्चमुपदधातीति पुरस्तात्प्रत्यञ्चमुपदधाति इति च कूर्ममुखवादः न तु कर्तृमुखवादः ।

(२१) पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः प्राचीरित्यपि कर्तृमुखवाद इति चेन्न, बहुत्वादिष्टकानां अपवर्गनियमार्थौ विधी प्रागपवर्गाः पश्चादपवर्गाश्चेत्यर्थः ।

(२२) चित्यां चित्यामृषभमुपदधाति इति श्रुतः वृषभः पशुरिति चेन्न "त्वामग्ने वृषभं चेकितानं" इति सन्निहितमन्त्रोपधेयेष्टकापरः ऋषभशब्दः सन्निधानात ।

(२३) 'प्राणभृत उपदधाति' इति श्रुताः प्राणभृतः पूर्ववत् न जीवाः अपितु तल्लिङ्गकमन्त्रोपधेयेष्टकाः, सन्निधानात् ।

(२४) 'घृतेष्टका उपदधाति' इत्युक्तेष्टका अपि घृतपदघटितमन्त्रोपधेयाः धाधात्वर्थसंयोगात् इति चेन्न घटे पूरणेन घृतादीन्येव द्रव्याण्युपधेयानि ।

(२५) विकर्णीमुपदधाति पञ्चचोडा उपदधाति इत्यत्र नानियताकारा इष्टका उपधेयाः चयनार्थविरोधात्, अपितु तत्तन्नामधेयेष्टका एव ।

(२६) साग्निचयनक्रतौ उत्तरवेदिधर्माः प्रकृतिवत् चयनादधोभागे भूमौ कार्या इति चेन्न, उत्तरवेदेः कार्यापन्नायां वेद्यामेव ते कार्याः ।

(२७) दीक्षोत्तरमेव चयनपाठात् उपसद्भ्यः पूर्वमग्निश्चेतव्य इति चेन्न, यदहरग्निं चेष्यमाणस्तदहरुभयं समस्येत् इति चयनोपसदोरेकस्मिन् दिने कर्तव्यत्वमुक्तम् ।

(२८) इष्टकानां निर्माणे कालविशेषनियमो नास्तीति चेन्न दीक्षितस्य उख्यभस्मनः मृत्संयोगविधानात् दीक्षोत्तरं इष्टकाकर्मेति ।

(२९) एकादिदीक्षाकल्पेषु इष्टकानिर्माणपर्याप्तकालालाभात् मासादिदीक्षाकल्पेष्वेव साग्निचित्यक्रतुरिति प्राप्ते अदीक्षितस्यापि प्राजापत्येष्ट्यनन्तरं इष्टकाकरणविधानात एकादिदीक्षाकल्पेष्वपि साग्निचित्यः क्रतुः ।

(३०) त्रीन्वारानाहृत्य न चतुर्थोऽग्निश्चेतव्यः अनाम्नानात् इति प्राप्ते योऽग्निं चिनुत इत्यारभ्य तस्माद्यावदिच्छमभ्यस्येत इत्युक्तेः सन्ति चतुर्थाद्याहाराः ।

(३१) चतुर्थाद्याहारेषु एतान्येवोर्ध्वपरिमाणानि नाधिकानीति प्राप्ते उत्तरमुत्तरं ज्यायांस इति श्रुतेः अभ्यस्यमानेषु महत्त्वं विधीयते ।

(३२) चतुर्थाद्याहाराणां एकद्वित्रिसाहस्रा एवेष्टकाःस्युः इति प्राप्ते तेषां नैमित्तिकत्वात अन्या एव सङ्ख्याः स्युः ।

(३३) यदृषीणामाग्नेयं तेन संवत्सरमग्निं चिन्वीत इत्यनेन प्रक्रान्तैः याज्ञसेनीमन्त्रैः चयनं कर्तव्यमिति प्राप्ते ऋषिसम्बन्धकीर्तनात् ऋषिसम्बद्धैः दाशतयैः सूक्तैरुपधानं विधीयते ।

(३४) पूर्वाधिकरणपूर्वपक्षे याज्ञसेनीनामल्पत्वात् दण्डकलितवदावृत्त्या सङ्ख्यापूरणं इति चेन्न, स्वस्थाना एव विवर्धेरन् 'भूयांसि कर्माणि' इति न्यायात् ।

(३५) यावन्ति मन्त्राभ्युपधानानि तावतामेव मन्त्राणामुपादानं दाशतयीभ्यः इति प्राप्ते सर्वे मन्त्राः अग्निलिङ्गा उपादेयाः ।

(३६) सर्वेषां मन्त्राणामागमे इष्टकानामभिवृद्धिः स्यादिति चेन्न, प्रतिसूक्तमुपधानं कर्तव्यं वचनात् । ततः इष्टकानामवशेषे तेषां लोकंपृणाभिरुपधानम् ।

(३७) पूर्वाधिकरणप्रयोजनमेतत् मन्त्राणां चयनसंयोगात् तत्रैवोपयोगो नोपस्थानादौ ।

(३८) आगम्यमानासु ऋक्षु गायत्रादिछन्दस्कानां ब्रह्मवर्चसादिफलसंयोगेन चोदनात् अकामानां तदितरछन्दस्का ऋच इति ।

(३९) सशिरस्कोऽग्निश्चेतव्यः 'वयसां वा एष प्रतिमया चीयते' इति श्रुतेः इति प्राप्ते इष्टकाविशेष एवात्र शिरश्शब्देनोच्यते सारूप्यस्य किञ्चित्सारूप्येनाप्युपपत्तेः ।

(४०) शिरसि स्तुवते इत्यपि लाक्षणिकमेव ।

(४१) सुपर्णाकृतिः चयनस्य नित्या इति प्राप्ते, न नित्या, वयसां वा एष प्रतिमया चीयते इति पक्षिसामान्यसादृश्योक्तेः ।

(४२) श्येनचितिः नित्यकाम्या काम्या वेति सन्देहे न नित्यकाम्या कामसंयोगेन श्रवणात् काम्यैव । वयसां वा एष प्रतिमया चीयते इत्यत्र लेट्त्वकल्पनेन विधिकल्पनागौरवात् ।

(४३) लोकं पृणसूददोहाभ्यां प्रतिमन्त्र उपधानं कर्तव्यमिति पूर्वपक्षे 'अनुचरवती भवती'त्युक्तेः पूर्वेणोपधानं अन्तिमेनाभिमर्शनम् ।

## द्वितीयः पादः

(अवदानपादः)

(१) 'तं नाग्नीषोमीये करोति' इति श्रुतेः अनीषोमीयसवनीययोः हृदयशूलाभाव इति प्राप्ते उद्वासनाधिकारात् अग्नीषोमीयसवनीययोः हृदयशूलोद्वासनप्रतिषेधोऽयम् । तन्त्रत्वात् तस्य सर्वान्ते उद्वासनमिति ।

(२) वनस्पतियागे यूप एव देवता अन्यस्याश्रवणादिति प्राप्ते, वनस्पत्यादिशब्दवाच्या अन्या देवता: यूपादीनां देवतानां च शब्दमात्रं सामान्यमिति।

(३) स्रुवेण पार्वणौ होमौ जुहोतीत्यत्र पर्वशब्द: कालपर: मुख्यत्वात्, न तु कर्मपर इति प्राप्ते पर्वशब्द: कर्मपर एव, कर्मप्रकरणात्। नावमिकाधिकरणप्रयोजकथनमिदम्।

(४) सोमाङ्गभूतेष्टिषु 'यज्ञो बभूव' इति मन्त्रस्य प्राकृतस्य पुनर्विधानात् तदतिरिक्ताङ्गपरिसङ्ख्येति प्राप्ते, यज्ञो बभूवेति स्तुतशस्त्रानुमन्त्रणमिदं न प्राकृताङ्गपुन: श्रवणं अतो न परिसङ्ख्येति।

(५) चतुरवत्तं जुहोतीति वाक्ये विशेषाश्रवणात् दर्विहोमेषु तदतिरिक्तसवषट्कारादिहोमेषु च चतुरवत्तं इति प्राप्ते छन्दांसि वै देवेभ्योऽपाक्रामन् इति समभिव्याहृतश्रुतौ पुरोनुवाक्यादियुक्तहोमानामेव प्रतीते: तेषामेव चतुरवत्तम्।

(६) जामदग्न्यानां पञ्चावत्तविधौ तत्सम्बन्धिनां सर्वेषां होमानां पञ्चावत्तमिति प्राप्ते चतुरवत्तविकारत्वात् पञ्चावत्तस्य यस्मिन् होमे चतुरवत्तं तत्रैव पञ्चावत्तमिति सिद्धान्त:।

(७) पञ्चावत्तिन: पञ्चमावदानं औषधादेव कार्यं नाज्यात्।

(८) पञ्चममवदानं अभिधारणात् उत्तरकालमिति चेन्न औषधात् द्वितीयमवदायानुपदं तृतीयावदानं अभिधारणस्य संस्कारार्थत्वात्।

(९) पञ्चावत्तिन: तृतीयमवदानं पुरोडाशस्य पश्चार्धादिति चेन्न मध्यात्पूर्वमवदाय स्विष्टकृदावापस्थानादेव द्वितीयं तृतीयं च ग्राह्यमिति।

(१०) सकृदुपहतेन वनस्पतिं यजतीति तु नोपस्तरणाभिघारणनिवृत्तिपरम्, अपि तु पञ्चावत्तिनां यत् द्वितीयमवदानं तन्निवृत्तिपरम्।

(११) 'यदपरमवदानं तत्पूर्वमवदाय पूर्वार्धे स्रुचो निदध्यात्' इत्यत्र अपरत्वं न देशत: कालतो वा। अपि तु कर्मत: अवदानकर्मसमभिव्याहारात्।

(१२) अस्य न्यायस्यान्यत्रातिदेश:।

(१३) दर्शपूर्णमासयो: षोडशान्याज्यानि भवन्तीति जुहूपभृतध्रुवासु यानि चतुर्गृहीतानि तेषां समस्यवाद: न विधि:।

(१४) अग्निहोत्रे 'सप्तदशानि पशुकामस्य गृह्णीयात' इति तु अग्निहोत्रप्रकरणादुत्कृष्य दर्शपूर्णमासयोः निविशते । पशुकामस्य पञ्चगृहीतमेव ध्रुवायाम् । ततश्च समस्यवादः ।

(१५) इन्द्राय राज्ञे पुरोडाशमेकादशकपालं इन्द्रायाधिराजाय इन्द्राय स्वराजे इति त्रिपुरोडाशिन्यामिष्टौ 'सर्वेषामभिगमयन्नवद्यत्यछंबट्कारं' इति श्रुत्या सर्वेषां सहैवावदानम् ।

(१६) तेषां सहावत्तानां न सहप्रदानं अपितु पृथगेव प्रदानं देवतापृथक्त्वात याज्यानुवाक्याभेदाच्च ।

(१७) एककपालायां अवदानं न कार्यं तत्प्रतिषेधात ।

(१८) पशौ अनिज्याशेषेषु अङ्गेषु न हविः प्रत्यभिघारणं स्वत एवायातयामत्वादिति चेन्न प्रत्यभिघारणस्य स्नेहनार्थत्वात् तस्य चेहापि सम्भवात् कर्तव्यमेव ।

(१९) पशौ अवदानस्य न प्रदानान्तेनानुसमयः अपि तु सर्वेषामवदानं कृत्वा ततः प्रदानमिति ।

### तृतीयः पादः ( प्रैषपादः )

(१) यज येयजामहे इति प्रैषौ न अदृष्टार्थौ, अपि तु दृष्टार्थावेव प्रैषप्रैषार्थप्रतिपत्तेः ।

(२) यजेत्यादौ देवतानाम आदेष्टव्यं अग्निं यजेत्यादिवत् न तु केवलं यजेति प्रयोगः तथाऽन्यार्थदर्शनात् ।

(३) देवान् यजेति प्रैषः न सर्वानूयाजविषयः अपि तु प्रथमानूयाजमात्रविषयः ।

(४) एकादश प्रयाजान् यजति इत्यादिवचनैः सङ्ख्याभिवृद्धौ स्वस्थानाभिवृद्धिः न तु दण्डकलितवदावृत्तिः ।

(५) दशमानूयाजस्य प्रथमविकारत्वम् ।

(६) पशौ एकादशप्रयाजानुष्ठाने अन्त्याः षट्प्रयाजाः चतुर्थोत्तमयोः विकाराः ।

(७) पशौ मैत्रावरुणप्रैषाः सर्वे प्रथमस्य प्रैषस्य विकाराः किञ्चित्साम्येपि सादृश्यसम्भवात् ।

(८) उपप्रेष्य हव्याहोतर्देवेभ्यः इत्ययं प्रैष एव न प्रैषस्य प्रैषः ।

(९) सचायं अध्वर्युणा मैत्रावरुणं प्रति न होतारं प्रति कार्यः ।

(१०) उक्थशा यजेति सम्प्रैषः स्तोत्रशस्त्रवतां तद्रहितानां च समानः ।

(११) अत्रैव सोमानामिति बहुवचनात् गणेष्वेव निवेश इति ।

(१२) तां पुरोऽध्वर्युर्विभजति इति देशवादः न कालवादः ।

(१३) ऋतुग्रहे मैत्रावरुण एव विभजेत् असौ यज असौ यजेति ।

(१४) पुनरभ्युन्नीतेषु होतर्यजेति सम्प्रैषः होतारमेव निर्दिशति न मैत्रावरुणम् ।

(१५) अनुवषट्कारयागे आश्रावणप्रत्याश्रावणादयो न भवेयुः ।

चतुर्थः पादः (होमपादः)

(१) आग्नेयोऽष्टाकपाल इत्यादौ न केवलं सङ्कल्पमात्रं किन्तु प्रदानान्तो यागः ।

(२) यत्र यागे देवतासंयोगो न श्रूयते उपांशुयाजादौ तत्रापि अर्थात् देवता गृह्यत एव ।

(३) सामिधेनीभिः इध्मप्रक्षेपस्य न यागत्वं किन्तु दृष्टार्थत्वाय अग्निप्रज्वालन-प्रयोजनकत्वमेव ।

(४) एतेषां मन्त्राणां तुल्यसन्निधानादनेकत्र विनियोगः ।

(५) चित्रेष्टिप्रकरणे अथैता आहुतीर्जुहोतीत्यत्र न प्राकरणिकानां मन्त्राणामनिय-मेनोपादानं अपितु पुष्टिलिङ्गानामेव ।

(६) दर्विहोमेषु चतुर्गृहीतादिनियमाभावात् सकृद्वा असकृद्वा गृहीतेन होम इति चेन्न, सकृद्गृहीतमेवाज्यं भवेत् अर्थापत्तेः ।

(७) आहुतिगणेषु आदावेव सर्वहोमार्थमाज्यग्रहणं यथाध्रुवायां इति चेन्न, गृहीतदेवतोद्देशेन प्रदायैवान्यत् ग्राह्यं अतः न तन्त्रमाज्यग्रहणम् ।

(८) दर्विहोमेषु प्रतिहोमं समिदाधानं कर्तव्यं, अत एवाग्निहोत्रे यदेकां समिधमा-धाय द्वे आहुती जुहोति अथ कस्यांद्वितीयामाहुतिं जुहोति " इति लिङ्ग-मुपपद्यते ।

(९) पाकयज्ञशब्दः न सर्वयज्ञवाची अपितु "मनुर्वै पाकयज्ञिय आसीत् स इमं इतरं यज्ञमपश्यत्" इत्युक्तेः केषांचिदेव यज्ञानां नामधेयम् ।

(१०) पाकयज्ञशब्दः दर्विहोममात्रपरः नेष्ट्यादिपरः ।

(११) दर्विहोमेष्वपि लौकिकानामेव दर्विहोमानां एषा संज्ञा न वैदिकानाम् ।

(१२) पाकयज्ञानां द्विर्जुहोति द्विर्निमार्ष्टि इत्यादि श्रुत्या अङ्गान्युपदिश्यन्ते अनया धर्माणां प्रापणं पाकयज्ञाङ्गताबोधनं इत्युभयं क्रियते ।

(१३) "प्राचीनप्रवणे वैश्वदेवेन यजेत" इति अग्निविकारः । ततश्चाहवनीयनिवृत्तिरिति चेन्न, देशविकारोऽयम् तादृशदेशे आहवनीये यजेतेत्यर्थः, देशोपदेशसरूपत्वात् ।

(१४) पदे जुहोति वर्त्मनि जुहोति इत्यादयः अग्निविकारा एव न देशविकाराः उत्तरार्धे जुहोति इत्यादिवत् अधिकरणनिर्देशात् ।

अथवा चतुष्पथे एकोल्मुकमुपनिधाय जुहोति इत्यत्र चतुष्पथस्य एकोल्मुकेन विकल्प इति चेन्न, अग्निवत्येवेत्यत्र मतुपः प्रशंसार्थत्वात् नोल्मुकस्य विकल्पः ।

(१५) प्रत्यञ्चोऽवभृथेन चरन्ति इति प्रत्यङ्मुखत्वं विहारस्यैव न कर्तॄणामिति चेन्न कर्तृसहितस्य विहारस्य प्रत्यङ्मुखत्वे कर्तॄणामपि तथात्वात् तेषामपि प्रत्यङ्मुखतासिद्धिः ।

(१६) "पृथिव्यै स्वाहा' इत्यादौ स्वाहाकाराणां प्रदानार्थता ।

(१७) स्वाहा वाचे इत्यादौ स्वाहाकाराणां मन्त्रेभ्यः पुरस्तात् स्थितानामपि प्रदानार्थत्वमेव न तेषु स्वाहान्तरपाठावश्यकता देहि ब्राह्मणाय ब्राह्मणाय देहीतिवत् यत्र क्वापि स्थितानामपि स्वाहादीनां कार्यकारित्वात् ।

(१८) "स्वाहाकृत्य ब्रह्मणा ते जुहोमि" इत्यादौ तु न स्वाहाकारः प्रदानार्थः निष्ठाप्रत्ययार्थे विशेषणत्वात् ।

(१९) 'वषट् ते विष्णवास आकृणोमि' इत्यत्रापि पूर्वन्यायेन कृत्यर्थविशेषणत्वात् न प्रदानार्थता ।

(२०) पशौ स्विष्टकृद्विकारभूते वनस्पतियागे याज्यायां इष्टदेवताः नोपलक्षणीयाः ।

(२१) जयाख्येषु होमेषु चित्ताय स्वाहेति चतुर्थ्यन्तो मन्त्रः प्रयोक्तव्य इति चेन्न, यथासमाम्नानमेव मन्त्राः प्रयोज्याः ।

(२२) तत्रैव चित्ताय स्वाहेति शाखान्तरीयेण मन्त्रेण चित्तं च स्वाहेत्यस्य विकल्पः होमनिर्वृत्तिरूपदृष्टप्रयोजनस्यैकत्वात् ।

(२३) भूतेष्टका उपदधाति इति विहितेष्टकोपधाने नामधेयसाम्येपि पृथिव्यै स्वाहेत्यादयः राजसूयपठितमन्त्रा न विनियोक्तव्याः । 'पृथिव्यसि जन्मना' इत्यादयः प्रकृताः विनियोगान्तररहिता एव विनियोक्तव्याः ।

(२४) यदि राजसूयगता मन्त्रा विनियोज्यन्ते तदा स्वाहाकारं त्यक्त्वैव इतरभागो विनियोज्यः तस्य प्रदाने सावकाशत्वात् ।

मध्ये चिन्ता

(२५) ऋतुग्रहमन्त्रेषु पूर्ववत् वषट्कारं त्यक्त्वैव मन्त्रविनियोगः । स्थितादुत्तरं - अत्र सर्वत्र स्वाहाकारस्य प्रदानार्थत्वाभावेन सस्वाहाकाराणामेव मन्त्राणां प्रयोगः ।

(२६) ऋताषाडृतधामेति मन्त्रे स्त्रीपुंलिङ्गकपदानां यथार्थं विनिष्कृष्य मन्त्रद्वयं कृत्वा पाठो न कर्तव्यः । अपितु ताभ्यः स्वाहेत्येव द्वितीयहोममन्त्र इति ।

(२७) 'षड्जुहोति' इति नाहुतिसङ्ख्यावादः अपितु 'आकूत्यै प्रयुजेऽग्नये स्वाहा' 'आकूतिमग्निं प्रयुजं स्वाहा' इति मन्त्रसाध्ययोः द्वयोरेव षट्कयोः अनेन सङ्ग्रहः ।

(२८) भुवनस्य पत इति सप्तमीमाहुतिं जुहोतीत्यपि पूर्ववत् पर्यायवादः ।

(२९) भुवनस्य पत इति पञ्चाहुतीर्जुहोतीति दशाहुतीर्जुहोतीति न विकल्पः अपि तु पूर्वः अवयुत्यवादः ।

(३०) "भूतं भव्यं भविष्यद्वषट्स्वाहा नम" इत्यत्र स्वाहाकारवषट्कारनमस्काराः न प्रदानार्थाः । अपितु स्तुत्यर्थाः वाक्यावयवत्वात् ।

## तृतीयाध्यायः

### प्रथमः पादः ( कालपादः )

(१) दर्शपूर्णमासौ यस्मिन् दिने सूर्याचन्द्रमसौ अत्यन्तविप्रकृष्टौ सन्निकृष्टौ च तस्मिन्नेव दिने कर्तव्यौ तेन खण्डपर्वणि तयोःकरणं सिद्धयति ।

(२) अमावास्यायां पौर्णमास्यां च दिनद्वये यागः न त्वेकस्मिन्नहनि ।

(३) तत्रैव दिवा यागः कार्यः न रात्रौ, पुण्याहेषु कार्याणीत्युक्तेः ।

(४) सूर्योदयात्पूर्वं अमावास्यायां यागः प्रारब्धव्यः उदिते पौर्णमासी ।

(५) सोमयागेपि सन्धिदिन एव सुत्या सर्वा स्यात् दर्शपूर्णमासवत् ।

(६) अन्वाधानेष्ट्योर्मध्ये इष्ट्यन्तरनिषेधः न सर्वासामिष्टीनां, अपितु नैमित्तिकानामेव ।

(७) यवानामपि पृथगाग्रयणं विद्यते न व्रीह्याग्रयणेनास्य गतार्थता ।

(८) श्यामाकव्रीहियवाग्रयणेषु सर्वभक्षेषु मन्त्रा भवेयुरिति चेन्न; ये भक्षाः प्रकृतौ मन्त्रवन्तः तेष्वेव विशेषमन्त्रा भवेयुः हिरण्यगर्भमन्त्रलिङ्गन्यायात् ।

(९) 'अनिष्टाग्रयणेन न नवस्याशितव्यं' इति निषेधः सर्वेषां ग्राम्याणामपि भवेत् ।

(१०) अनिष्टाग्रयणस्य सस्याद्यशनस्यापि प्रतिषेधः इति चेन्न, शाकादीनां प्राशने यथाकामी स्यात् तेषां यागयोग्यत्वाभावात् यागयोग्यानामेव च भक्षणप्रतिषेधात् ।

(११) शमीधान्ये मुद्गादौ अनिष्टाग्रयणेन न भोक्तव्यमिति प्रतिषेधो नावतरति तेषां केवलं व्यञ्जनरूपत्वात् ।

(१२) यः प्राशितयवः अग्नीनादधीत तेन यवाग्रयणं न कर्तव्यं तेनाग्रपाकस्य कृतत्वात् ।

(१३) अविद्यमानद्रव्येण बुभुक्षारहितेन च आग्रयणं कर्तव्यमेव अग्रपाकरूपनिमित्तसद्भावात् ।

(१४) 'व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत न यवैः' इत्यत्र व्रीहिकालयवकालान्तराले व्रीह्याग्रयणमेवावर्तनीयं इति चेन्न, अन्तरालकाले नित्यप्राप्तयोः दर्शपूर्णमासयोः द्रव्यनियमविधिरयम् ।

(१५) आग्रयणकर्मणि श्यामाकव्रीहियवानां अग्निहोत्रद्रव्यवत् विकल्प इति चेन्न वसन्तादिकालद्रव्योभयविधानाद्वाक्यभेदापत्तेः विशिष्टकर्मान्तरविधानानि श्यामाकादिवाक्यानि अतो न विकल्पः ।

(१६) 'संवत्सरादेतदधि भवति' इत्यत्र न पार्वणः संवत्सरो गृह्यते "अपि संवत्सरे सस्यानि पच्यन्ते" इत्यत्र सस्यपाककालस्यापि संवत्सरशब्देनाभिधानात् स एवाग्रयणकालः ।

(१७) फाल्गुन्यां पौर्णमास्यां चातुर्मास्यमारभ्य चतुर्षु चतुर्षु मासेषु अन्येषु पर्वस्वनुष्ठेयेषु कीदृशो मासो ग्राह्य इति जिज्ञासायां चान्द्र एव ग्राह्यः तथैव वाक्यशेषेणावगमात् ।

(१८) त्रीनिष्ट्वा चतुर्थमुत्सृजेत् इत्यत्र चतुर्थमिति मासोऽभिप्रेतः न संवत्सरः एष वै त्रयोदशो मास इति मासशब्देनापदेशात् ।

(१९) पञ्चभिर्वर्षैः कर्मापवर्गात् "त्रीनृतून् संवत्सरमिष्ट्वा विरमेत् द्वौ पराविष्ट्वा विरमति" इत्यत्र षष्ठस्य कर्मणः आरम्भप्रतिषेध इति चेन्न, यावज्जीवपक्षस्य वाक्यशेषोऽयम् ।

(२०) पञ्चसांवत्सरिकप्रयोगारम्भे कृतानां वैश्वानरपार्जन्यपञ्चहोमानां षष्ठवत्सरे प्रयोगान्तरारम्भात् पुनः प्रयोग इति चेन्न; आरम्भणीयावत् सकृदेवैते होमाः ।

(२१) यदि प्रावृषि यजेत सकृदुपस्तृणीयात् इत्यत्र पूर्वप्रकृतः वैश्वदेवयाग एवोच्यत इति चेन्न, अप्रकृतत्वेपि वरुणप्रघासानां प्रावृट्कालत्वात् त एवोच्येरन् ।

(२२) "वैश्वदेवेन पशुकामो यजेत यस्मिन् ऋतौ प्रभूतं गोषु पयः स्यात्" अत्र न वसन्तानादरेण ऋत्वन्तरेपि प्रयोगः अपितु यस्मिन् वर्षे वसन्ते गोषु प्रभूतं पयः इत्येव नियमः ।

(२३) वैश्वदेवेन यजेत पशुकामो न वरुणप्रघासैः न साकमेधैः न शुनासीरीयेण इत्यत्र इतरेषां न फलार्थता अपितु वैश्वदेवाङ्गतेति चेन्न, आपशुलाभात् वैश्वदेवाभ्यासः इतरेषां च उत्कर्षः अत्र प्रतिपाद्यः ।

(२४) मासं दर्शपूर्णमासाभ्यां इत्यत्र प्राकृतपर्वकालानुग्रहाय त्रिंशन्मासेषु प्रतिपर्व दर्शपूर्णमासौ इति चेन्न, अत्र मासशब्दः त्रिंशद्दिनपरः त्रिवृता मासं इत्यादौ त्रिंशद्दिनानि त्रिवृन्ति इत्यत्र यथा । अतः प्रत्यहं प्रयोगः ।

तृतीयः पादः

(अग्निपादः)

(१) आधाने ब्राह्मौदनिकेऽग्नौ अरणी सन्ताप्य मन्थति । ततः जातोऽग्निः न सर्वाग्नीनां योनिः अपि तु गार्हपत्यस्यैव ।

(२) इतरे अग्नयः न लोकतः आधीयेरन् अपि तु गार्हपत्यादेव ।

(३) सभ्यावसथ्यौ नाहवनीयात् प्रकल्प्यौ अपि तु लोकत एवाधीयेरन् ।

(४) दक्षिणाग्निः न लोकतः कल्प्यः अपि तु सर्वाग्नियोनिभूतात् गार्हपत्यादेव ।

(५) सर्वे एवाग्नयो न धार्याः अपि तु गार्हपत्य एव धार्यः कर्मापवर्गे आहवनीयो गार्हपत्यं गच्छेत् । कर्मादौ उद्धरणम् ।

(६) सम्मार्जनवत् प्रतिकर्म आधानं कर्तव्यं इति चेन्न, अजस्रपक्षे सर्वेषामग्नीनां धारणमस्त्येव । अगतश्रियां तु प्रतिकर्म प्रादुष्करणम् ।

(७) दक्षिणाग्नेरपि सकृदेवाधानं प्रतिकर्म प्रादुष्करणं च ।

(८) प्रतिकर्म प्रादुष्करणमग्नीनां गार्हपत्यादेव कर्तव्यं नारणीतः मन्थनेन, 'गार्हपत्याज्ज्वलन्तमाहवनीयमुद्धरति' इति श्रुतेः ।

(९) आहवनीयोपस्थानं स्वायतनस्थ एवाहनीये कार्यं, न तु गार्हपत्ये अन्तर्निलीनः आहवनीयोऽस्ति इति कृत्वा गार्हपत्ये ।

(१०) कर्मापवर्गोत्तरं धार्यमाणः आहवनीयादिः वैदिक एव इति चेन्न, बाह्यज्योतिषः सत्वेपि संस्काराणां अलौकिकत्वात् कर्मसमाप्तौ तेषां गार्हपत्यं प्रति गमनमेव । अतः तदा आहवनीयादिः लौकिक एव ।

(११) सोमेपि दीक्षणीयादौ प्रतिकर्म उद्धरणं कार्यमिति चेन्न, देवतापरिग्रहात् आसोमसमाप्तेराहवनीयो धार्येत ।

(१२) सोमे उत्तरवेदिं प्रति प्रणीयमानः आहवनीयः कृत्स्नः प्रणीयेत इति चेन्न, एकदेश एव प्रणीयेत पूर्वो यस्सन्नपरो भवासि इति मन्त्रलिङ्गात् ।

(१३) शालामुखीयः अग्निप्रणयनादूर्ध्वं नाहवनीयः अपि तु गार्हपत्य एव, सम्मार्ष्टि गार्हपत्यौ इत्यादिलिङ्गात् ।

(१४) वर्णकान्तरम् - एक एवाहवनीयः प्रहृतशालामुखीयभेदेन द्विधा इति न वक्तव्यम्। शालामुखीयः गार्हपत्य एव। सम्मार्ष्टि गार्हपत्यौ इति श्रवणात्।

(१५) न सर्वाणि ऐष्टिकसौमिकानि शालामुखीये गार्हपत्ये कार्याणि; अपितु प्राजहिते पशुश्रपणोक्तेः तदितराण्येव तत्र कार्याणि।

(१६) आग्नीध्रीयाग्निः शालामुखीयादेवोद्धियेत न प्रहृतात्। अग्निप्रथमाः प्राञ्चोऽभिप्रव्रजन्तीति प्राग्गमनविधानात्।

(१७) धिष्णियानां नाहवनीयाद्विहरणं अपि तु आग्नीध्रीयादेव; तस्याप्याहवनीयैकदेशत्वेन होमसंयोगाविरोधात्।

(१८) अङ्गारैर्द्वे सवने विहरति शलाकाभिस्तृतीयसवनं इत्युक्तेः न चतुर्थविहरणमिति चेन्न, अग्निष्टोमसाम प्रकृत्य ज्योतिष्मतीः कृत्वेत्युक्तेः चतुर्थमपि विहरणमस्त्येव।

(१९) त्रिष्ण्याग्नीनां प्रतिसवनं व्याघारणं कर्तव्यं न तु तृतीयमात्रे तस्योपसंहारो युक्तः।

(२०) व्याघारणं च सोमेन आज्येन वेति विकल्पः। तृतीयसवने तु आज्यनियमः।

(२१) धिष्णियाग्नीनां व्याघारणं न ग्रहचमसादिना अपि तु पारिप्लवया।

(२२) सोमे वैसर्जनादिदर्विहोमानां न सोमद्रव्येण करणं तस्य प्रधानमात्रान्वयात्। अङ्गभूतहोमेषु तु अनादिष्टद्रव्यकेषु होमेषु आज्यप्राप्तेः।

(२३) पशुश्रपणार्थोऽग्निः 'सर्वत्र स्यात्' इत्यादिना आहवनीय एवेति नियम्यत इति चेन्न, प्राजहितस्यायं वादः निर्मन्थ्यं वा कुर्यादिति निर्मन्थ्येन विकल्पाभिधानात्।

(२४) निरूढपशावपि शालामुखीयः सम्पादनीय एव प्रकृतावग्नीषोमीये तत्सद्भावात्।

(२५) पशौ उभयत इष्टिपक्षे इष्ट्यर्थं विहृताग्नेः आहवनीयस्य आन्तं धारणं न तु इष्ट्यपवर्गे अपवर्गः।

(२६) पशौ पूर्वेद्युरेव प्रणयनं कृत्वाचिन्तया अङ्गीकृत्योच्यते पूर्वेद्युः प्रणयने सायमग्निहोत्रादिकं विहृताहवनीय एव स्यात् ।

मध्ये चिन्ता—

(२७) अग्निहोत्रहविषः न शालामुखीये श्रपणं तस्य गौणगार्हपत्यत्वात् मुख्य-गार्हपत्ये प्राजहित एव तु श्रपणं कार्यम् , मुख्यत्वादेव ।

(२८) पशुपुरोडाशे पुरोडाशश्रपणं न शामित्राग्नौ अपि तु शालामुखीय एव तस्य गार्हपत्यकार्यकारित्वात् ।

(२७) निरूढपशौ द्व्यहे त्र्यहे वा उत्तरवेदिः कार्या प्रकृतिवदिति चेन्न "अपि वा" इत्यादिवचनात् प्राकृतबाधः । सद्य एव सर्वम् ।

(३०) पशौ वरुणप्रघासेषु च शालामुखीयोऽग्निः बोधायनमतेन स्यादेव ।

(३१) सोमयागसमाप्तौ न सर्वेषामग्नीनां समारोपणं अपि तु गार्हपत्यस्यैव, इतरेषां तु लौकिकत्वापत्तिरेव ।

(३२) अजस्रपक्षे तु शालामुखीयस्यापि समारोपणम् , नित्यत्वात् ।

(३३) दीक्षितस्य दीक्षाविमोकात्पूर्वं प्रयाणप्रसक्तौ अग्नेः समारोपणमेव न सह-नयनम् समारोपणस्य नयनोपायत्वात् ।

(३४) समारोपणे अग्निभेदेन अरणिभेद आवश्यकः संसर्गपरिहाराय इति चेन्न; न संसर्गप्रसक्तिः अपूर्वरूपत्वादग्नेः । द्विवचनादिकं उत्तराधरारणि-भेदकृतं अजस्रपक्षाभिप्रायं वा ।

(३५) समारोप्य नयनेपि, चयने उख्याग्नेः न समारोपः किन्तु सहैव नयनम् ।

(३६) साग्निचित्ये अपराग्न्योः समारोपणमेव न प्रत्यक्षनयनम् ।

(३७) आत्मसमारोपणारणिसमारोपणयोः विकल्पः न समुच्चयः ।

(३८) आत्मसमारोपणपक्षेपि प्रत्यवरोहणं न लौकिकाग्नौ; अपि तु अविशेषेण मन्थनविधानात् अरण्योरेव ।

तृतीयः पादः

(ग्रहपादः)

(१) सोमे अप्राकरणिकाः अतिग्राह्याः । ते प्रकरणस्थैः ग्रहैः समानविधाना इति पूर्वग्रन्थस्थस्यानुवादः ।

(२) ते चातिग्राह्याः प्रकृत्यग्निष्टोम एव ग्राह्याः अनारभ्याधीतत्वात् न विश्वजिति ।

(३) अतिग्राह्यनिषेधः पार्ष्ठिकोक्थ्य एव न प्रकृतिगामी ।

(४) स च विकल्प्यते ।

(५) ते चातिग्राह्याः नानापृष्ठ्ये बृहद्रथन्तरपृष्ठ्येपि च तुल्यवद्विकल्प्यन्ते, न तु व्यवस्थितविकल्पः ।

(६) वैराजस्य स्तोत्रायाग्नेयो गृह्यत इत्यत्र न वैराजादिस्तोत्राणि ग्रहणं प्रति देवताः किन्तु आग्नेय इत्युक्तेः तद्धितसमर्पिताग्नयादय एव ग्रहणदेवताः स्तोत्रायेति चतुर्थी षष्ठ्यर्थे ।

(७) एते अतिग्राह्याः माहेन्द्रमनु हूयन्ते माहेन्द्रेण सहैव एकयाज्यावषट्काराः ।

(८) दधिग्रहो नित्यः । स च ज्येष्ठशब्दोक्तोपि उपांश्वादिग्रहानन्तरमेव गृह्यते न सर्वादौ ।

(९), १०, 'उपयाम गृहीतोसि' इति मन्त्रः दधिग्रहणे, 'अपेन्द्रद्विषतः इति तद्धरणे, 'प्राणाय त्वा' इति होमे विनियुज्यन्ते ।

(११) दधिग्रहः न फलाय गुणविधिः अपि तु फलाय दधिविशिष्टहोमविधिरेव इति कर्मान्तरम् ।

(१२) स च दधिग्रहो नित्यः तत्रैव ऐन्द्रवायवादिवत् फलविधिः ।

(१३) सोमग्रहं गृह्णीयात ब्रह्मवर्चसकामस्येत्यत्रोक्तः सोमग्रहः । तत्र सोमधर्माः न भवेयुः अस्य दधिग्रहविकारत्वात् ।

(१४) तत्र अधर्मकोऽर्थप्राप्तोऽभिषवः कर्तव्य एव ।

(१५) तिस्रो बह्वस्य समिध इत्येतया सोमं करोति इत्यत्र मन्त्रस्य न सोमकरणे विधिः, सोमस्य सिद्धत्वात् । अपि तु अभिषवे ।

(१६) अंश्वदाभ्ययोः अवभृथात्परतः पाठः, मन्त्रौ तु उपांश्वादिभ्यः पूर्वं पठ्येते । तयोः प्रचारस्तु मन्त्रपाठक्रमानुसारेण कर्तव्य इति ।

(१७) अनयोः फलश्रवणात् इमौ संयोगपृथक्त्वन्यायेन उभयार्थौ ।

(१८) रात्रिपर्यायेषु अनाम्नातानि स्तोत्रशस्त्राणि । तत्र सोमाकाङ्क्षायां ग्रहचमसौ चमस एव वा इति चेन्न । तत्र ग्रहचमससमुच्चय एव ।

(१९) पृश्निग्रहाः प्राणग्रहाश्च तत्र तत्रोपदिष्टाः ग्रहा एव भवेयुः ।

(२०) प्राणग्रहाः अन्यत्र पठितैरपि प्राणभृन्मन्त्रैः गृह्येरन्, न तु समीपपठितैः त्वे क्रतुं इत्यादिमन्त्रैः ।

(२१) द्वादशाहे पृश्निप्राणग्रहान् व्यतिषजति इति श्रुतः व्यतिषङ्गः मानकाल एव कार्यः न ग्रहणकाले ।

(२२) अनारभ्याधीतानां पृश्निप्राणग्रहाणां न प्रकृतौ निवेशः । अपितु 'प्रायणीयोदयनीययोः दशमेऽहनि गृह्यन्ते' इति वचनात् द्वादशाहे उत्कृष्यन्ते ।

## चतुर्थः पादः

(आर्षेयपादः, वरणपादो वा)

(१) आर्षेयं वृणीते इति यजमानस्य पूर्वपुरुषकीर्तनं न तु ऋत्विजामभिजनसङ्कीर्तनम् ।

(२) प्रवरर्षीणां न नामधेयमात्रकीर्तनं अपि तु यजमानसम्बन्धित्वेन अपत्यप्रत्ययान्तपदप्रयोगेण भार्गवच्यावनेत्यादिरूपेण ।

(३) त्रीन् वृणीते मन्त्रकृतो वृणीते इति परस्परैकवाक्यत्वात् त्रीन् मन्त्रकृतो वृणीते इत्यर्थाः त्रीनित्यस्य वाक्यान्तरविहितपञ्चत्वोपलक्षणत्वं च ।

(४) ऋषीणां वरणे च नानियमः अपि तु "इत ऊर्ध्वानध्वर्युः अमुतोर्वाच इति होता" इति विशेषवचनात् अध्वर्योः प्रातिलोम्येन वरणं, आनुलोम्येन होतुः ।

(५) प्रवरवरणे मनुवत्कल्पः प्रवरप्रतिषेधपूर्वकं विधानात् ब्राह्मणानां च प्रवरवत्त्वात् ब्राह्मणविषयः । राजन्यवैश्ययोः पुरोहितप्रवरेण वरणमिति ।

(६) निषादानां रथकाराणां च ते यमृषिं ब्रुवते तेन तेषां प्रवरवरणं स्यात् ।

(७) ब्राह्मणानां राजवृत्त्या जीवतां राज्ञां ब्राह्मणवृत्त्या जीवतां च स्वस्वजातिसन्निवेशविशिष्टमेव वरणं स्यात् । न तु स्वपरिगृहीतजातिप्रयुक्तम् ।

(८) द्विगोत्राणां एकतो द्वौ अन्यतः एकं इति व्यवस्थयैवार्षेयवरणं न तु विकल्पः ।

(९) दैक्षे कर्ममध्ये विहितं ऋत्विग्ववरणं वषट्कर्तॄणामेव तेषामेवानुक्रमणात् न सर्वेषामपि ।

(१०) इदं च वरणं सर्वेषामपि लौकिक्या वाचा कार्यम् । न तु प्राकृतमन्त्रः होतृमैत्रावरुणयोः प्राप्नोति, सर्वेषामेव एकवाक्योपदेशात् ।

(११) एकेषां शाखिनां ऋतुप्रैषादिभिर्वृणीते इति वाक्यमस्ति । तेषां न लौकिक्या वाचा वरणम् । अपि तु इन्द्रं होत्रादित्यादिना वरणम् ।

(१२) सप्त वृणीते इत्यत्र न वरणे सप्तत्वान्वयेन सर्वेषामेव वरणं अपितु सप्तपुरुषाणामेव सप्तत्वम् ।

(१३) 'द्वितीयमाश्रावयति द्वौ ह्यत्र होतारौ' इत्येतत् दैक्षे तृतीयहोत्रभावस्य अनन्वयात् निरूढपशुबन्धे उत्कृष्यते ।

(१४) तदेतन्मैत्रावरुणस्य वरणं यथासमाम्नानं पूर्वेद्युरेव, न तु सोमार्थत्वेन सुत्याकाले । सदोहविर्धानादीनां सोमार्थानामपि पूर्वेद्युः करणात् ।

## अथ चतुर्थोऽध्यायः

### प्रथमः पादः

(सामिधेनीपादः)

(१) दशहोतृमन्त्रहिङ्कारसामिधेनीनां नियतः क्रमो भवति यथा - दशहोता व्याहृतयः हिङ्कारः सामिधेन्यः इत्ययं क्रमः ।

(२) तारमन्द्रोभयमध्यवर्तिस्वरेण सामिधेन्यो वक्तव्याः

(३) होतुरन्तर्वेद्येकः पादो भवति बर्हिर्वेद्यन्य इति स्थानविशेषलक्षकम् न तु सामिधेनीपादेषु एकः अन्तर्वेदि अन्यः बर्हिर्वेदि इत्यर्थः ।

(४) सामिधेनीनां पञ्चदशत्वसम्पादनाय त्रिःप्रथमामन्वाह त्रिरुत्तमां इति रीत्या आवृत्तिः न तु अन्यासामानयनम् ।

(५) सन्ततमुत्तरमर्धर्चमालभेत इत्यत्र सान्तत्यविधिः त्रिष्वप्यनुवचनेषु भवति न तु उत्तमस्यैव ।

(६) यः कामयेत सर्वमायुरियादिति त्रिरनवानमनूच्य सहोपक्रमेत इत्येतदपि पूर्वन्यायेन व्याख्येयम् ।

(७) ता एकश्रुति सन्ततमनुब्रूयात् इत्यत्र सान्तत्यविधिः न प्रथमोत्तमऋगुद्देशेन अपि तु ऋङ्मात्रोद्देशेन ।

(८) 'एकैकामेव सन्तन्वन्' इत्यत्र ऋचामेव परस्परं सन्तानविधिः नार्धर्चयोः ।

(९) राथन्तरीं प्रथमामन्वाह बार्हतीमुत्तमां इत्यत्र न रथन्तरस्य बृहतश्च योनि-ऋचोरागमनं अपि तु प्रथमोत्तमयोरेव रथन्तरबृहत्त्वेन स्तुतिरित्यङ्गीकार्यम् ।

(१०) त्रिर्विगृह्णातीति विग्रहविधिः न सर्वासां सामिधेनीनां, अपितु मध्यमायाः तन्त्वासमिद्भिरङ्गिर इति ऋच एव, क्रमात् ।

(११) समिद्वतीघृतवती चानूच्येते इत्यत्र न समिद्घृतवत्यो ऋचोर्विधिः अपितु समिद्घृतवत्पदयोरेव तन्त्वा समिद्भिरङ्गिरः घृतेन वर्धयामसि इत्यनयोः ।

(१२) 'ऋचि प्रणवं दधाति' —इत्यत्र न प्रत्यृचमन्ते प्रणवनिधानम् किन्तु सामिधेन्यक्षरविकारोपदेशोऽयम्, देवान् जिगाति सुम्नयों इति विकारः ।

(१३) स च प्रणवः ऋचः अन्ते प्रयोक्तव्यः न त्वादौ ।

(१४) तत्र च न प्रणवपदस्य विधिः अपि तु ओंकारस्यैव ।

## द्वितीयः पादः

(निगदपादः)

(१) त्रींस्तृचाननुब्रूयाद्राजन्यस्य इत्यत्र राजन्यादीनां स्वस्वच्छन्दसामानयनं इत्याश्मरथ्यः । आलेखनस्य तु गायत्राः एव तृचाः प्राकृता ग्राह्य इत्यभिप्रायः ।

(२) सर्वाणि छन्दांस्यनुब्रूयाद्बहुयाजिनः इत्यत्र न गायत्र्यादीनां अविशेषवादः । अपि तु प्रकृतिप्राप्ताः गायत्री त्रिष्टुबनुष्टुबिति त्रय एव ।

(३) तत्रैव बहुयाजीति सोमयाज्युच्यते न सहस्रयाजी ।

(४) सन्तानविधिः सामिधेनीनामेव न तु तदन्तःप्रविष्टानां निविदामपि ।

(५) आसीनमूर्ध्वज्ञुं होतारं वृणीते इत्यत्रोक्तं ऊर्ध्वजान्वासनं न प्रकरणधर्मः अपि तु होतृवरणधर्मः ।

(६) होतृप्रवर एव पूर्वं प्रयोक्तव्यः मन्त्रपाठानुसारात् नाध्वर्युप्रवरः ।

(७) आवह देवान् यजमानाय इति न सर्वासां देवतानामावाहनं नापि प्रयाजदेवानां अपि तु याः आवाहिताः प्रत्यक्षश्रुत्या तासामेव ।

(८) अग्निमग्न आवह इत्यत्र आवाह्यत्वमावाहकत्वं च एकस्यैव देवतापदार्थस्येति चेन्न आहवनीय आवोढा इत्युक्तेः प्रत्यक्षोऽग्निरावोढा आवाह्यस्तु देवतारूपोऽग्निः ।

(९) अग्निं होतारमावह इत्यत्र अग्निः स्विष्टकृदाहवनीय इति चेन्न; आत्मनि आत्मन आवाहनं विरुद्धं भवेत् तस्मादन्यः ।

(१०) आहवनीयादन्यः स्विष्टकृदग्निः गार्हपत्य एव । सन्निधानात् ।

(११) स चोह्यमानो गार्हपत्यः होतृकर्मणे ओह्येत होतृकर्म च हव्यवहनम् ।

(१२) 'आचाग्ने देवान् वह' इत्यादिषु आहवनीयो गुणसंयोगादभिधीयते ।

(१३) स्वाहाग्निं होत्राजुषाणा इत्यत्र अग्निशब्देन स्विष्टकृत अभिधानम् । तस्य यक्ष्यमाणदेवतार्थत्वात् ।

(१४) अग्निं होत्रेणेदं हविरजुषतेति गार्हपत्याभिधानं 'त्वं सूक्तवागसि' इति ससूक्तवचनसम्बन्धात् ।

(१५) आयडग्निरग्नेः इत्याहवनीयाभिधानम् ।

(१६) 'अग्निर्देवो दैव्यो होता' इत्यत्र आहवनीयः प्रत्येतव्यः ब्रह्मण्वदा च वक्षत् इति आवहनलिङ्गात् ।

(१७) अग्निर्होता वेत्त्वग्निः इत्यप्याहवनीयाभिधानमेव ।

## तृतीयः पादः

### (वषट्कारपादः)

(१) कस्यांचिच्छाखायां इमे वयं स्मो वयं इति च विनिन्द्य वेतु प्रावित्रमित्येव ब्रूयादिति । तथा नमस्याम नमस्यान् इत्यंशस्य शाखाभेदेन आदौ मध्ये

अन्ते वा प्रयोगः । यथाश्रुतपाठः प्रकृतौ प्रयोक्तव्यः निन्दितपाठस्तु विकृतौ प्रयोज्यः ।

(२) वौषडिति वषट्करोति वषडित्येके वौक्षाडित्येके षडित्येके इत्यादीनां वषडिति ब्राह्मणस्य वषट्कुर्यात् इत्यादिना वर्णविशेषे उपसंहारः । ततश्च राजसूयादिषु वषट्कारनियमः । नित्यस्य वषट्कारस्य अवशिष्टवषट्काराणां च अन्यत्र कर्मणि विकल्पः ।

(३) सन्ततमृचा वषट्करोतीति याज्यावषट्कारयोः तुल्यस्वरत्वोपदेशः ।

(४) अवगूर्य वषट्करोति इति उच्चैर्वषट्करोतीत्यर्थः। न तु अत्र येयजामहानन्तर्यविधिः ।

(५) वषट्कारं प्रकृत्याम्नाताः यं कामयेत प्रमायुकः स्यादिति नीचैस्तरां तस्य वषट्कुर्यात् इत्यादयः सर्वे विधयः न तु एकस्य विधित्वं इतरेषामर्थवादत्वमिति ।

(६) यं कामयेत पशुमान् स्यात् बहुपर्णां तस्मै शालां कुर्यात् इत्यादयोऽपि विधय एव।

(७) "यस्यै देवतायै वषट्कुर्यात् तां मनसा ध्यायेत्" अत्र देवताध्यानं वषट्कारात् पूर्वमेव कार्यं दृष्टार्थत्वात् ।

(८) अथवा "यस्यै देवतायै"—इत्यत्रैव वाक्ये देवताशब्दस्यैव ध्यानविधिः न त्वर्थस्य ।

(९) वषट्कृत्य प्राण्यात् अथापान्यात् अथ निमिषेत् इत्यत्र प्राणनमात्रविधिः इतरयोः क्रमार्थोऽनुवादः ।

(१०) याज्यानुवाक्ययोरन्तरा 'न व्यवदेत्' इति वाग्यमविधिः पुरोऽनूच्यं इति नित्यानुवादः विधिस्थैर्यार्थः ।

(११) 'स्वाहा देवा आज्यपा जुषाणा' इति उत्तमप्रयाजयाज्यायां श्रुतं, तत्र देवा आज्यपा इति अनुयाजदेवताकीर्तनम् ।

(१२) आज्यभागयोः जुषाणयाज्यौ एके समामनन्ति ऋग्याज्यावेके सहविषावेके अहविषावेके—अत्र जुषाणऋग्याज्ययोः विकल्पः पूर्वस्मिन्नाज्यभागे अहविश्शब्दः उत्तरस्मिन् सहविश्शब्दः इति व्यवस्था ।

(१३) गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग्याज्या इत्यादीनां विकृतिगामित्वं न तु प्रकृतौ विकल्पेन निवेशः ।

(१४) "गायत्र्यौ संयाज्ये ब्रह्मवर्चसकामस्य त्रिष्टुभौ वीर्यकामस्य" इत्यत्र त्रिष्टुभोः नित्ययोरेव संयोगपृथक्त्वेन काम्यता ।

(१५) स्विष्टकृन्निगदे श्रुतं—अयाड्देवानामाज्यपानां प्रियाधामानीति । तत् न केवलं प्रयाजादेवतानां अपितु प्रयाजानूयाजदेवतानामिति ।

(१६) अनूयाजान् प्रकृत्य अनवानं यजतीत्युक्तम् । पुनः उत्तमे नावान्यात् इत्युक्तम् । अत्र नोत्तम एवानवाननियम इति चेन्न, सर्वानूयाजेषु अनवानविधिः उत्तमे तदनुवादः स्तुत्यर्थः ।

(१७) उपांशु यजतीति उपांशुयाजादौ विहितमुपांशुत्वं आश्रुतप्रत्याश्रुतादिव्यतिरिक्तविषये, आश्रुतादौ तु उपांशुत्वे कर्मलोपःस्यात् ।

(१८) पत्नीसंयाजेषु विहितमुपांशुत्वमपि पूर्ववदेव ।

(१९) आज्येडा न सर्वेषां दर्शपूर्णमासप्रकरणस्थानां यागानामङ्गं, अपि तु पत्नीसंयाजाङ्गमेव ।

(२०) "यं कामयेत पशुमान् स्यादिति प्रतीचीं तस्येडामुपह्वयेत यं कामयेतापशुः स्यादिति पराचीं तस्येडामुपह्वयेत" अत्र 'परा' इति अनभ्यासविषयः न तु कर्तुः पराङ्मुखत्ववादः ।

(२१) 'चतुरुपह्वयते' इति नेडानिगदमात्रस्य चतुर्वारमभ्यासः । अपि तु पदाभ्यास एवायम् ।

(२२) सूपावसाना च स्वध्यवसानाचेत्येकेषां, तद्विनिन्द्य सूपचरणा च स्वधिचरणा च इत्येकेषां—अत्र तुल्यबलत्वात् द्वयोरपि प्रकृतौ विकल्पः ।

(१३) आशास्तेयं यजमानोऽसौ इत्यत्र यजमाननामनिर्देशानिर्देशयोः विकल्प इति न मन्तव्यं अपि तु निर्देशनियम एव ।

(१४) नाम गृह्णातीति विकल्पेन न यत्किञ्चिन्नामग्रहणं । अपि तु नामनी इत्यसोमयाजिनां, नामानीति सोमयाजिनामिति व्यवस्था ।

## चतुर्थः पादः

(सामिधेनीपादः)

(१) पृथुपाजवत्यौ धाय्ये इत्यादयः अनारभ्यवादाः न प्रकृतौ निविशेरन् अपि तु विकृतौ ।

(२) "अनुपदावाज्यभागौ" इत्यत्र पदं स्वस्थानमनुगतौ इति व्युत्पत्त्या प्राकृतावुच्येते । सर्वासु विकृतिषु सद्वन्तौ आज्यभागौ इति विधिभिरपोदितानां प्राकृतमन्त्राणां प्रतिप्रसवार्थोऽयं विधिः ।

(३) वामदेवस्यार्षं पञ्चदशर्चं सूक्तं प्रकृत्य ताः सामिधेन्यः स्युः याज्यानुवाक्याश्चेत्याम्नातं तत्र एकादश सामिधेन्यः चतस्रः याज्यानूवाक्या इति विभज्य विनियोगः न सर्वासां सामिधेन्यर्थत्वम् ।

(४) अगस्त्यस्यकयाशुभीयसंज्ञाया ऋचोप्येवमेव विनियुज्येरन् ।

(५) सर्वपृष्ठायां व्यत्यासमन्वाह इत्यादिना देवताव्यतिषङ्गविधिः । नात्र पूर्वपक्षविशेषः

(६) महापितृयज्ञे तिस्रः ऋचः याज्यानुवाक्यात्वेनाम्नाताः तत्र द्वयोः पुरोनुबाक्यात्वं तृतीयस्य तु याज्यात्वेन प्रदानार्थत्वमेव ।

(७) द्वे अपि पुरोनुवाक्ये पृथक् सप्रणवे स्याताम् ।

(८) गृहमेधीये सामिधेन्यः प्रतिषिद्धाः तथापि देवतावाहनं स्यादेव तस्य सामिधेन्यानन्तर्येपि तदनङ्गत्वात् । तस्य यागाङ्गत्वात् ।

(९) चातुर्मास्येषु वैश्वदेवे पर्वणि वाजिनामावाहनं न विद्यते वाजियागस्याप्रयोजकत्वेन अनियतत्वात् । कदाचित्प्रतिपाद्याभावे यागाभावात् ।

(१०) यत्र एकदेवताकौ द्वाविष्टी मध्ये तु अन्यदेवताका अन्या इष्टिः तत्र पृथगेवावाहनं कर्तव्यं कर्मणोः भेदेनैवानुष्ठानात् न तु तन्त्रेण ।

(११) पशौ उत्तमप्रयाजस्य कालतः उत्कर्षात् तत्र घृतवतीमध्वर्यो स्रुचमास्यस्वेति स्रुगादापनमन्त्रोऽऽप्यावर्तनीयः ।

---

श्रीः

अथ श्रीजैमिनिमुनिप्रणीतः

# सङ्कर्षकाण्डः ।

श्रीदेवस्वामिविरचितभाष्यसमेतः ।

## ॥ प्रथमाध्याये प्रथमः पादः ॥

अथ सङ्कर्षकाण्डः प्रस्तूयते । तदनुपपन्नं, व्यतिरिक्ताव्यतिरिक्तविकल्पासम्भवात् । व्यतिरेके तस्य प्रागेव तन्त्रप्रसङ्गाभ्यामेव[सिद्धे]रिति चेन्न । असाकल्यात् । तथा चाहुः—

सिद्धैरेतैः[1] प्रसङ्गान्तैः श्रुतियोगं प्रदर्शयन् ।
लक्षणानि श्रुतीश्चैव सङ्गृह्याथ जगे मुनिः ॥

भेदादीनि चत्वारि प्रकृतिविषयाणि । सामान्यातिदेशादीनि चत्वारि विकृतिविषयाणि ॥ उभयत्र व्यभिचार इति चेन्न, प्रायिकत्वात् । प्रमाणतन्त्रावापप्रसङ्गानि लक्षणानि प्रकृतिविकृत्योः साधारणत्वात् तच्छेषाणीति । यथा तानि एवं सङ्कर्षोऽपीति । तन्त्रेण चास्य संबन्धो हेतुहेतुमद्भावलक्षणः असति सामान्ये विशेषस्यासम्भवात पारिशेष्यलक्षणेष्वपरिसमाप्तेषु अस्यारब्धुमशक्यत्वात् प्रकीर्णयुक्तत्वाच्च न्यायस्य । तदधुना विचिन्त्यते ।

॥ १ ॥ अनुयजतीत्यनुवषट्कारश्चोद्यते ॥ १ - १ - १ ॥ (सि)

ज्योतिष्टोमे श्रूयते—"सोमस्याग्ने वीहीत्यनुयजति" इति । किं ऐन्द्रवायवादियाग एवायं मन्त्रो गुणो विधीयते, किं वा प्रयाजानुमन्त्रणवत् कर्मणामनुमन्त्रणम्, उत कर्मान्तरविधानं इति । पूर्वाधिकरणेन सम्बन्धं[2] केचिदाहुः ।

---

1. A. R. सिद्धस्तुतैः
2. R. संबद्धं

"आर्त्विज्यं ब्राह्मणानां" इति कर्तारः समधिगताः। स्विष्टकृदपि हव्यं भवन्नेव कर्तृत्वं प्रतिपद्यते(?)। अतः कर्तृसामान्यादिदमधिकरणं प्रस्ताव्यत इति।

नैतत्; अनवस्थानात्। एवं न किञ्चिदसिद्धमभविष्यत्। सर्वस्य क्रियाकारकसङ्गत्यन्तर्भूतत्वात्। प्रसङ्गसादृश्येन सम्बन्धकथनमयुक्तम्। परार्थद्रव्यसाध्यत्वेन प्रसङ्गसाधर्म्यस्य च वैशेषिकत्वात्। शूद्रेषु ब्राह्मण्यं स्मर्यत इत्यर्थवादजनिता भ्रान्तिः। तेषां विधिशेषत्वात् सकलतन्त्रविरोधाच्च (?)। प्रत्यधिकरणं सम्बन्धकथनमयुक्तम्। लक्षणे च लक्षणान्तर्गत एव सम्बन्धो वक्तव्यः। सङ्क्षेपे च प्रकीर्ण एवानुवक्तव्यः। वक्तव्यस्य चावश्यं वक्तव्यत्वात् क्रमसम्बन्धयोरविवक्षेति।

किं युक्तम्? सोमयाग एव मन्त्रविधानम्, कर्मणः प्रक्रमात्। [1]कल्प्यविधेयत्वात्। कर्मणो मन्त्रान्तरावरोधादयुक्तमिति चेत्, न, उत्पत्तिवाक्याशिष्टत्वात् अनेकार्थविधानात् विकल्प इति। 'सोमस्याग्ने वीहि' इत्यनेन प्रधानमनुनिर्वर्तनीयत्वमिति प्राप्ते

ब्रूमः। कर्मान्तरविधाने श्रुतिरिति। [2]इतरथा अभिधेयार्थग्रहणात्मिका श्रुतिः [3]इत्यन्यथा धातुरनुमन्त्रणं लक्षयेत्। किञ्च व्यवहितविकल्पेना[ल्पोऽनु]नुमन्त्रणविधौ कर्मविधावव्यवधानेन सम्बन्धः[4]। अतः कर्मान्तरविधानमुपपन्नम्।" अनुयजतीत्यनुवषट्कारश्चोद्यते इति कर्मान्तरं विधीयत इत्यर्थः। तद्युक्तम्। स्पष्टस्य न्यायस्य विद्यमानत्वादिति।

वाक्यशेषोऽपि कर्मान्तरविधानं दर्शयति। "यद्धिष्ण्यानुपवस्ते तत्सोमपीथ आभजति भागिनमेवैनं करोति अथो पिपा(व)सन्ति वीहिराहरन् तं विहत्य तर्पयति। एवमेव देवतास्तर्पयति तदनुवषट्कारेण। तस्मादनुवषट्कुर्यं देवतानां तृप्त्यै" इति देवतातर्पणश्रुतिः यागे सत्युपपद्यते नान्यथेति।

॥ २ ॥ स द्रोणकलशात् इज्येत सर्वार्थत्वात्
[5]यथाऽऽज्यार्था ध्रुवायाः ॥ १-१-२ ॥ (पू)

---

1. R. कल्प
2. A & T. अन्यथा
3. R. तथा
4. R. नोऽसम्बन्धः
5. यथाऽऽज्यार्थत्वाद्ध्रुवायाः

तस्मिन्नेवानुवषट्कारे सन्दिह्यते—किं द्रोणकलशात् सोममादाय कर्तव्यः आहोस्वित् ऐन्द्रवायवादिशेषादिति। किं प्राप्तम्? द्रोणकलशात् सोममादाय इज्येत सर्वार्थत्वात्। तत्र श्रूयते "द्रोणकलशाद्धि गृह्यते एष वा एतेषां योनिः" इति। यथा ध्रौवाज्यम्। प्रतिपाद्याभावान्नेति चेत्; न, कलशस्य ग्रहणशेषवत्त्वात्। वाक्यस्यान्यथानुपपत्तेः। 'न सर्वं जुहोति' इत्यस्य भक्षणप्रयुक्तत्वात्। देवता-सङ्कल्पस्य च सर्वविषयत्वात्। तस्मात् द्रोणकलशादेवेज्येतेति प्राप्ते, उच्यते—

**विभक्तानि हवींषि तथा कर्माणि कर्मसंयोगा-**
**त्पुनरिज्या ॥ १-१-३ ॥ (सि)**

विभक्तानि हवींषि ग्रहेषु च मन्त्रेषु च। तथा गृहीतस्य गुणसम्बन्धात्। गुणानुरोधादपि प्रधानावृत्तिः तद्भेदात्कर्मणोऽभ्यास इति। हव्यवहनयोगादैन्द्रवायवादि-शेषादिज्येति। न च द्रोणकलशस्थः शेषः, तस्य साधारणत्वात्। ऐन्द्रवायवादि-शेषस्य भक्षार्थतयाप्युपपत्तेः नेति चेन्न, [1]पात्रशेषस्यानन्यविषयत्वात्। हव्यवहनार्थ-वादोपपत्तेश्च 'यद्वहति तेन शेषेण[2] संयोजयति देवताः इति।'

**लिङ्गदर्शनाच्च ॥ १-१-४ ॥**

सावित्रे 'नानुवषट्करोति न भक्षयति' 'सवितृपात्रेण वैश्वदेवं कलशाद्-गृह्णाति' सोमे 'सोममभिषुणोति' इति। भक्षार्थेऽप्येतदुपपद्यत इति चेन्न। तस्यान-पायितयाऽविवक्षितत्वात्। [3]सर्वार्थत्वं च कलशस्य सावकाशम्। किञ्च सर्वार्थत्वं प्रयोजनविषय(त्व)म्। तस्मादैन्द्रवायवादिशेषस्योपादानमिति सिद्धम्।

**॥ ३ ॥ तन्त्रं प्रदानमेकदेवतत्वाद्यथा दर्शपूर्णमासयोः ॥ १-१-५ ॥ (पू)**

अनुवषट्कारस्य तन्त्रेणानुष्ठानमुत भेदेनेति सन्देहः। किं प्राप्तम्? तन्त्रं अनुवषट्कारः स्यात् समानदेवतत्वात् दार्शपूर्णमासिकस्विष्टकृद्वत् इति।

हेतोरसिद्धत्वादाशङ्काऽभावः। कथमिति? उच्यते। अनुवषट्कारदेवता(न्त) न्यत्वात्[1]। कथं प्रक्रान्तैन्द्रवायवादिदेवताः न मान्त्रवर्णिकदेवतेति, न, सिद्धया-गापेक्षितत्वात्। सिद्धो हि यागो मन्त्रमपेक्षते। यागस्वरूपसिद्धिश्चान्तरङ्गद्रव्य-

---

1. R. वाक्य 2. शेषाणां 3. धर्मार्थत्वं

देवतापेक्षा । अनुशब्दशक्तेश्चोपक्रान्ता एव देवताः भवन्ति आनन्तर्यात् । यथा "सङ्कल्प्य वा पूर्वां यजति पश्चात् कामो वै यजत" इति । दर्शपूर्णमासस्विष्टकृत्यपि सिद्धम् । तत्रापि मान्त्रवर्णिकदेवताभेदात् गुणविशिष्टोऽग्निरेव वाक्यात् "अग्नये स्विष्टकृते समवद्यति" इति ॥ न ॥ मान्त्रवर्णिकेष्वेवाग्न्यादिषु गुणविधानात् । तस्मादिदमधिकरणं नारब्धव्यम् ।

अत्रोच्यते—"सोमस्याग्ने वीहीत्यनुयजति" इत्यत्रैव यागसिद्धेः उपांशुयाजमन्तरा यजतीतिवत्, द्रव्यदेवताकाङ्क्षायां च स्ववाक्योपात्तेन मान्त्रवर्णिकेन द्रव्यदेवतेन निराकाङ्क्षत्वात् । अनुशब्दात् पूर्वं ऐन्द्रवायवादियागः पश्चादनुवषट्कारः इत्येतावन्मात्रप्रतीतिः । न प्रक्रान्तदेवतादिसम्बन्धः । तस्मात् सिद्धः पूर्वपक्षहेतुः समानदेवताभाक्त्वादिति । दर्शपूर्णमासयोरपि गुणविशिष्टोऽग्निः स्विष्टकृद्यागदेवतेति संप्रतिपन्नः । तस्मादेकदेवताकत्वात् तन्त्रमेव । न च वाक्ये प्रत्यर्थिनि मान्त्रवर्णिक्यो देवतास्तासु गुणविधिरिति । तस्मात् सिद्धः समानदेवतत्वात् दर्शपूर्णमासस्विष्टकृद्वत्तन्त्रं प्रयोग इति प्राप्ते, ब्रूमः ।

**एककालं तु न भवत्येवेदं कालपृथक्त्वात् (१-१-६) (सि)**

तुशब्दात् पक्षो विपरिवर्तते । समानकालं दर्शपूर्णमासप्रधानानां प्रयोगः सौमिकानां तु प्रधानानि [न तथा] । ननु सन्दिग्धः प्रधानभेदः, भिन्नकालत्वात् । नैतत् । मुख्यस्य कालस्याभिन्नत्वात् । कार्ये व्यभिचरितस्यापि यजनीयस्याभिन्नत्वात् । न, एतत्कर्मशेषस्य व्यवायेन भेदात् । तदङ्गत्वेन भक्षादेरव्यवधायकत्वमिति चेत् । न । सन्निपातित्वेनाभ्यन्तरत्वादनुवषट्कारस्य न प्रदानोत्कर्षः । भक्षानन्तरं पात्रस्य प्रक्षालनं तदनन्तरं कार्यान्तरविनियोगः । न च पात्रान्तरोत्पादनम्, अप्रयोजकत्वात् । अप्रयोजकत्वं चैकदेशद्रव्यत्वात् । तस्माद्भेदेनैव प्रयोग इति ।

**सवनभेदाच्च ॥ १-१-७ ॥**

किञ्च सवनभेदाच्च प्रतिसवनं प्रधानभेदादावृत्तिः

**अनुशब्दार्थवत्त्वाच्च ॥ १-१-८ ॥**

किञ्च अनुशब्दोऽप्येवमर्थवान् भवति ।

**आवृत्तिं च दर्शयति ॥ १-१-९ ॥**

" न द्विदैवत्याननुवषट्करोति न ग्रहान् न पात्नीवतं " इति अनुवषट्कार-प्रतिषेधात् प्रतिकर्मावृत्तिं अव्यवायोऽपि दर्शयति "त्रयाणामथ वै हविषां अग्नये स्विष्टकृते समवद्यति " इति च पृथगपादानत्वमावृत्तिं च दर्शयति । वषट्कारप्रदानेष्वि-ज्यादेशत्वात् कुतस्तन्त्रतेति ।

॥ ४ ॥ एतेन भक्षाश्च व्याख्याताः ( १ - १ - १० )

ज्योतिष्टोमे सन्ति होमाभिषवनिमित्ता भक्षाः । ते किं द्रोणकलशात् सोम-मादाय कर्तव्याः उत ऐन्द्रवायवादिशेषादिति । तथा किं तन्त्रानुष्ठानं आहोस्विद्भेदे-नेति । **एतेन भक्षा व्याख्याता** इत्यधिकरणातिदेशोऽयम् ।

यः पूर्वयोरधिकरणयोः पूर्वः पक्षः स इह पूर्वः पक्षः ; यस्तत्र सिद्धान्तः स इह सिद्धान्तः सन्निपत्योपकारकत्वं विशेष इति ।

॥ ५ ॥ शामित्रं तीर्त्वोत्सृजेदिति कार्ष्णाजिनिः
तन्त्रमध्रिगुः पर्यग्निकृतानिति चोद्यते ( १ - १ - ११ ) ( पू )

वाजपेये सन्ति पशुयागाः " सप्तदश प्राजापत्यान् पशून् आलभते " इति। उक्तं च क्रतुपशूनां [1]समुच्चयस्तेषाम् । तत्रेदमाम्नायते " तान् पर्यग्निकृतानुत्सृजते ब्रह्मसाम्न्यालभते " इति । किं पर्यग्निकृतान् शामित्रं [2]तीर्त्वोत्सृजेत् उत अनन्तरमेवेति सन्दिह्यते । तत्प्रतीतिविभागः—वाक्यस्य अनन्यगतेः क्रमार्थत्वात् । कथमिति चेदुच्यते । पर्यग्निकरणं चोदकेन प्राप्तत्वान्न विधीयते । उत्सर्गस्यापि वाक्यात् प्राप्तत्वात् न विधानम् । तेन निष्ठाप्रत्ययेन भूतकालमात्रप्रतीतेः अतः[अ]विशेषात् गुणविधिः । स च कर्तुः संस्कारविषयो व्यापारोपरमो न क्रमः लक्षणया वाक्येन वा । तस्माद्गुणविधिपक्ष एव श्रेयानिति । शामित्रं तीर्त्वोत्सृजेदिति कार्ष्णाजिनिराचार्यो मन्यते स्म । एवं अध्रिगुप्रैषस्तन्त्रं स्यात् । पर्यग्निकृतानिति च न विरुध्यते । भुक्त्वा आगतो देवदत्त इति भुक्त्वा क्षणमवस्थायाप्यागतो भवति भुक्त्वाऽऽगत इति । किञ्च ' ब्रह्मसाम्न्यालभत ' इति संज्ञपनेन संस्कारात् प्रतिपाद्यमानस्य पशोः शामित्रदेशे शयनं कृतं दर्शयति । इत्येवं प्राप्ते ब्रूमः ।

---

1. R. असमुच्चयः
2. तीर्त्वा=प्राप्य

**अनन्तरं वा पर्यग्निकरणात् किं प्रत्यक्षां श्रुतिमतिक्रामेद्यथा न प्रयाजा इज्यन्त इति नैकदेशप्रतिषेधः ( १ - १ - १२ ) ( सि )**

पर्यग्निकरणानन्तरमेव उत्सर्गविधानं कुर्यात्, प्रत्यक्षश्रुतिसामर्थ्यात्। सा लक्षणेति चेन्न; तस्यैवानन्तर्यहेतोः कर्तृव्यापारोपरमस्य विधेः श्रौतत्वात्। हेत्वर्थलक्षणः समभिव्याहारो भोजनगत्योः पौर्वापर्यमेव विवक्षितम् [1]न क्रम इति। यथा—'न प्रयाजा इज्यन्त' इति श्रुत्याऽविशेषेण सर्वप्रतिषेधः एवमविशेषेण सर्वोत्कर्ष इति। न पुनस्तन्त्रमग्निगुरिति। द्विरुत्कृष्टस्य च कालभेदादावृत्तिः। तदुक्तम्—**हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात् स्यात् इति।** (11 - 4 - 20) ब्रह्मसाम्नयालभत इति कर्मशेषचोदनात् संज्ञपनविधिरिति।

**॥ ६ ॥ अग्निं चित्वा सौत्रामण्या यजेतेति तत्संयोगेन चोदनात् ( १ - १ - १३ ) ( पू )**

"अग्निं चित्वा सौत्रामण्या यजेत" इति किमग्न्यङ्गं उत चयनाङ्गम्, उत क्रत्वङ्गम्? इति। कालार्थत्वं च चतुर्थे[2] निवर्तितं भवति। विधिद्रव्यसङ्ख्याहेतुसमुदायाभ्यां ( ९ - १ - ५ ) पुनरुक्ततेति चेन्न, [3]आनर्थक्यापूर्वपरिकल्पनाभ्यां तत्र सिद्धान्तोपलम्भात्। चितेः फलाय चोदितत्वा[4]दस्त्याशङ्का। किं तावत् प्राप्तम्? "अग्निं चित्वा" इति श्रुतेः द्रव्यप्रधानत्वात् आरादुपकारकत्वेऽपि पवमानेष्टिवत् सौत्रामण्या यजेतेति सौत्रामणियागस्य अग्न्यर्थत्वमिति प्राप्ते ब्रूमः।

**॥ चयनाङ्गं वा तत्संयोगेन चोदनात् ( १ - १ - १४ ) ( पू )**

वाशब्दः पक्षं व्यावर्तयति, नान्यत् [ नैतत् ] किं तर्हि? चयनाङ्गं स्यात्। कुतः? तत्संयोगात्; चित्वा इति चयनसंयोगेन सौत्रामणीविधानात्। "श्येनचितं चिन्वीत स्वर्गकामः" इति फलभावनाङ्गोपनिपातिनश्चयनस्य साकाङ्क्षत्वात् तदाकाङ्क्षापरिपूरकत्वात् सौत्रामणियागस्य तदङ्गत्वोपपत्तिः इति प्राप्ते ब्रूमः।

**॥ क्रत्वङ्गं वा चित्वेत्यङ्गे नोपपद्यते यथैता एव निर्वपेदीजान इति ॥ ( १ - १ - १५ ) ( सि )**

---

1. R अनुक्रम इति वत्। 2. R कालार्थं चतुर्थत्वं च
3. A अन अक्य 4. A चोदितत्वात् भावादस्त्याशङ्का

क्रत्वङ्गं सौत्रामणी वाक्यप्रकरणयोरविरोधात्। न च फलाङ्गत्वं नित्य[अनित्य] संयोगविरोधात्। परमानर्थक्यात् लक्षणा। शक्यते चितिसंयोगात् क्रतुरपि चित्वेति लक्षयितुम्। तदुक्तं **तत्संयोगात् क्रतुस्तदाख्यः तेन धर्मविधानात्** (2-3-23) न च यजिमती सौत्रामणी आरादुपकारिका अयागस्याग्नेः चयनस्य वा सन्निपत्योपकारिणोऽङ्गं स्यात्। ननु पवमाने वा कथमिति[1] चेन्न प्रकरणाभावात् वाक्यस्याप्रतिबन्धित्वात्। **यथैता एव निर्वपेदीजान इति**। देविकाहविषां यजिमतां सोमद्रव्यसंयोगे सत्यपि यागाङ्गत्वं एवमिहापीति।

**सा तदपवर्गे क्रियेत यथा संस्थाप्य पौर्णमासीं**
**वैमृधमनुनिर्वपतीति ॥ १-१-१६ ॥**

प्रयोजनसूत्रमेतत् ॥

यदि चयना[ङ्गं तदा तद]नन्तरं सौत्रामणी; यदि सिद्धान्तः क्रत्वनन्तरमिति।

**॥ ७ ॥ अग्निं चित्वा तिसृधन्वमयाचितं ब्राह्मणाय**
**दद्यात् इत्येतेन व्याख्यातम् ॥ १-१-१७ ॥ (पू)**

"अग्निं चित्वा तिसृधन्वमयाचितं ब्राह्मणाय दद्यात्" इत्यत्र सन्देहः— किं तिसृधन्वदानं चयनाङ्गं उत क्रत्वङ्गमिति। पूर्वाधिकरणेन क्रत्वङ्गत्वे प्राप्ते ब्रूमः—

**चयनाङ्गं वाऽविप्रतिषेधात् अङ्गदक्षिणा**
**च रथन्तरे वरं ददाति इति ॥ १-१-१८ ॥ (सि)**

वेति पक्षनिवृत्तिः। चयनाङ्गं श्रुतेरविप्रतिषेधात्, चयनस्य च अङ्गदक्षिणासम्बन्धाविप्रतिषेधात् रथन्तरे वरदानवत्। न ह्यङ्गस्यापि सतो रथन्तरादेः वरदानाद्यङ्गसम्बन्धो विप्रतिषिध्यते तद्वदिहापि इति। किञ्च—

**अर्थवादसामर्थ्याच्च ॥ १-१-१९ ॥**

"रुद्रो वा एष यदग्निः तस्य तिस्रः शरव्याः प्रतीची तिरश्च्यनूची ताभ्यो वा एष आवृश्च्यते योऽग्निं चिनुते, अग्निं चित्वा तिसृधन्वमयाचितं ब्राह्मणाय दद्यात्

---

1. A. R. वत्कथं

ताभ्य एवात्मानं निष्क्रीणीते" इति । रुद्रोऽग्निः तस्य तिस्रः शरव्याः त्रिभिरावृश्च्यतेऽग्निचित् । ताभ्यः आत्मनो निष्क्रयणं अग्निचयनाङ्गत्वे सत्युपपद्यत इति ।

**॥ ८ ॥ योऽग्निं चिनुयात् तं दक्षिणाभी राधये- दित्येतेन व्याख्यानम् ॥ १-१-२० ॥ (पू)**

पूर्वाधिकरणसिद्धान्तन्यायेन तिसृधन्वदानवत् दक्षिणाभीराधनं चयनाङ्गमेवेति प्राप्ते ब्रूमः—

**क्रत्वङ्गं वा प्रयोगश्रुतिसंयोगात् ॥ १-१-२१ ॥ (सि)**

वेति पक्षव्यावृत्तौ । नैतदग्निचयनाङ्गं दक्षिणाभीराधनमिति । किं तर्हि ? क्रत्वङ्गम् । प्रयोगश्रुतिसंयोगात् । प्रयोगश्रुत्या कर्तृसमाक्षेपात्[1] आनतेश्च प्रयोगप्रयुक्तत्वात् क्रत्वर्थता च दृष्टार्थत्वात् । तस्मात् क्रत्वङ्गं दक्षिणाभी राधनमिति ।

**॥ ९ ॥ गुणचोदना वा प्रीत्याचिख्यासा ॥ १-१-२२ ॥**

अग्नौ समाम्नायते—"योऽग्निं चिनुयात् तं दक्षिणाभी राधयेत्" इति । तत्रैतत्समधिगतं क्रत्वङ्गं राधनमिति । इदानीमिदं चिन्त्यते :—किं क्रतोरधिका[2] दक्षिणा विधीयन्ते, किंवा प्राकृतीष्वेव गुणविधानमिति । किं प्राप्तम् ? अधिका एवैता दक्षिणाश्चोद्येरन् । कुतः ? राधनश्रवणात् । प्राकृतीष्वेवाधिक्याभावात् राधयेदिति नावकल्पते ।

किञ्चार्थवत्त्वात् । अपूर्वमर्थमभिदधद्वाक्यमर्थवद्भवति इत्येवं प्राप्ते ब्रूमः—

[3]गुणचोदना वा प्रीत्याचिख्यासा । तास्वेव प्राकृतीषु क्रतुदक्षिणासु प्रीत्युत्पादकत्वं विशेषोऽभिधीयते । वाक्यस्याप्यर्थवत्त्वं विशेषाभिधानात् । यथा आरस्योर्ध्वतायां कामः, प्रकृतप्रत्ययात्; आराधनस्य प्रकृतत्वात् । कल्पसूत्रेष्वधिका दक्षिणा विहिता श्रुत्यन्तरदर्शनात् । तेन चैकवाक्यत्वमस्याः श्रुतेरिति ।

**॥ १० ॥ उल्मुकहरणे रक्षोपहननं श्रूयते तत्प्राजापत्ये- ष्वावर्तेत तत्कालपृथक्त्वात् ॥ १-१-२३ (पू) ॥**

---

1. कर्तृसमापेक्षात्
2. अधिका एवै
3. गुणश्चोदना

सन्ति वाजपेये प्राजापत्याः क्रतुपशवश्च । अग्नीषोमीये च पशावाम्नायते—"अग्निना पुरस्तादेति रक्षसामपहत्या" इति । तच्चोदकपरम्परया प्राजापत्येषु प्राप्तम् । तत्र सन्दिह्यते—क्रतुपशूनां प्राजापत्यानां च तन्त्रमुल्मुकहरणमुत भेदेनेति । किं युक्तम् ? भेदेनेति । कालपृथक्त्वात् । रक्षोपहननार्थत्वात् तादर्थ्यं च श्रवणात् रक्षसामपहत्यै इति ।

**॥ श्रपणार्थं तु हरणं प्रातस्सवने पुनस्साधारणं कर्म कृतम् ॥ १ - १ - २४ ॥ (सि)**

तुशब्दात् पक्षनिवृत्तिः । तन्त्रमेवोल्मुकनयनं स्यात् । कुतः ? श्रपणार्थत्वात् । न च दृष्टे श्रपणे सति अदृष्टो रक्षोपघातः कल्प्यः । यच्च कर्म कृतं प्रातःसवने तत्प्राजापत्यानां क्रतुपशूनां च साधारणम् । नयनमपि तद्वदेव ।

**॥ ११ ॥ एतेन वपाया अग्रतःप्रत्याहरणं व्याख्यातं अविप्रतिषिद्धो हि तस्मिन् श्रपणार्थः ॥ १ - १ - २५ ॥ (सि)**

अस्ति तत्रैव वपानयनकाले उल्मुकप्रत्याहरणम् । तत् तन्त्रमुत भेदेनेति संशयः । एतेनाधिकरणेन वपायाः प्रत्याहरणं व्याख्यातम् । यस्तत्र पूर्वपक्षः स इह पूर्वपक्षः यस्तत्र सिद्धान्तः स इह सिद्धान्तः । अविप्रतिषिद्धो हि तस्मिन् श्रपणार्थः । पूर्वं प्रत्याहृतेन आहवनीयस्थेन उल्मुकेन सर्ववपानां श्रपणस्यावि-प्रतिषिद्धत्वात् तन्त्रमेवेति ।

**॥ १२ ॥ अभितो वपां जुहोतीति देशवादो यथा अभितो वृक्षं निधेहीति ॥ १ - १ - २६ ॥ (पू)**

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । "यो दीक्षितो यदग्नीषोमीयं पशु-मालभेत ॥" इति ।

तत्राम्नायते—स्वाहा देवेभ्यो देवेभ्यः स्वाहेत्यभितो वपां जुहोति" इति । तत्र संशयः किमयं देशवादः किं वा कर्मनिमित्तकालवाद इति । किं युक्तम् ? देशवादोऽयं वपासंयोगात् । वपा यथा मध्यतो भवति तथा जुहोतीति । यथा लोके वृक्षं मध्यतः कृत्वा निधीयते एवमिहापीति । वपायाश्च निर्देशः द्वितीयाश्रुतेरिति ।

2

॥ कर्मवादो वा प्रकरणात् ॥ १-१-२७ ॥ (सि)

वेति पक्षव्यावृत्तिः । कर्मनिमित्तं कालवाद इति । कुतः ? प्रकरणात् कर्मणो हि प्रकरणम् । न द्रव्यस्य । वपामिति लक्षणतेति चेत् । न अभित इति कर्मप्रवचनीयश्रुत्यैव [1]लक्षणप्रतीतेः ।

॥ लिङ्गदर्शनाच्च ॥ १-१-२८ ॥

पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेति उपरिष्टादिति देशवादे नोपपद्यते पुरस्तात् इति व्यक्तः कालवादः । तत्सामान्यादितरत्रापि तथात्वम् । इति ।

॥ १३ ॥ अभितः पुरोडाशमाहुती जुहोतीत्येतेन व्याख्यातम् ॥ १-१-२९ ॥ (सि)

अस्ति पुनराधेये पञ्चकपालः पुरोडाशः "पुनरूर्जा सह रय्येत्यभितः पुरोडाशमेते आहुती जुहोति" इति । पूर्वाधिकरणातिदेशः । पूर्वाधिकरणे यौ पूर्वोत्तरपक्षौ ताविहापीति ।

॥ १४ ॥ हविष्कृदेहीत्यध्वर्युरुच्यते प्रकरणात् ॥ १-१-३० ॥ (पू)

दर्शपूर्णमासयोः हविष्कृदेहीति त्रिरवघ्नन्नाह्वयतीत्यत्र संशयः - किं हविष्कृदेहीति अध्वर्युरुच्यते, अथ वागेव, अथ वा यःकश्चिद्धविष्करणात् हविष्कृदुच्यते, अथवा अनियमः, अथवा पत्न्येवेति । किं प्राप्तम् ? अध्वर्युरेवोच्येत कुतः ? प्रकरणात् । स हि प्रकृतो हविष्करणे । तस्मात् सोऽभिधीयते । समाख्यानाच्च आध्वर्यवं हविष्करणम् । अस्मादपि स एवेति । आत्मनि प्रैषो विरुध्यत इति चेत् । न । सामर्थ्येन पराधिकारात् ।

॥ वाग्वा श्रुतिसंयोगात् ॥ १-१-३१ ॥

वाग्वा अभिधीयते । कुतः ? श्रुतिसंयोगात् । "वाग्वा हविष्कृत् वाचमेव तदाह्वयति" इति वाचो हविष्कृत्त्वं श्रुतम् । आह्वानमपि तस्याः "वाचमेव तदाह्वयति" इति श्रुतेः । अर्थवादत्वान्नेति चेत् । न । वाक्यशेषान्निर्णयोपपत्तेः ।

॥ पत्नी वा विधानात् ॥ १-१-३२ ॥

---

1. R. लक्षणा

पत्न्येव वा हविष्कृत् स्यात् । कुतः ? प्रत्यक्षेण विधानात् । "हविष्कृदुपोत्तिष्ठति देवान् ऋषीन् पितॄन् सा अभिद्रुत्यावहन्ति" इति सैव हविष्करणे विधीयते । तस्मात् सैवाह्वतव्येति ।

॥ यःकश्चिद्वा निर्वचनात् ॥ १ - १ - ३३ ॥

यःकश्चिदेवोत्तिष्ठति स हि हविष्करणात् हविष्कृत् इति निर्वचनात् यःकश्चिदाह्वयत इति ।

॥ एतेषां वा वाक्यसन्निधानात् ॥ १ - १ - ३४ ॥

एते वागादयोऽप्यर्थवादवाक्ये सन्निहिताः तेषामनियमेन वादो हविष्कृच्छब्देन । द्वयोर्वादः प्रकरणाद्वाक्यस्य बलीयस्त्वात् । प्रैषदानेनापि प्रयोजककर्तृत्वेन समाख्याऽविरोधात् अर्थात् पराधिकारत्वं युक्तम् । अन्यथाप्युपपत्तेः ।

॥ सर्वकर्मणां दैवी हविष्कृदेहीति अविशेषेण श्रूयते ॥ १ - १ - ३५ ॥

दैवी हविष्कृत् अविशेषेणाज्यौषधसान्नाय्यानामदृष्टकर्मव्यपदेशो भवति ।

॥ अवहननार्थं वा यथा पत्नी तुल्या श्रूयते ॥ १ - १ - ३६ ॥

औषधार्थैव दैव्यपि हविष्कृत् स्यात् यथा पत्नी तथाहि तुल्यवदाम्नायते ।

॥ अर्थवादमात्रं वा वाचो हविष्कृत्त्वं यथाऽश्विनोर्बाहुभ्यां निर्वपामीति ॥ १ - १ - ३७ ॥ (सि)

न च दृष्टे संभवति अदृष्टकल्पना न्याय्या । तस्मात्पत्न्यभिधानमेव युक्तमिति । पशुपुरोडाशे च हविष्कृता वाचं विसृज्य पशुं विशास्ति[इति] आनाह्वानमाज्ये दर्शयति । आज्यार्थं चेदाह्वानमभविष्यत् तेनैव प्रसङ्गात् कार्यसिद्धेः पुरोडाशार्थं नावकल्पते । अदृष्टं चैतत् । तस्मात् औषधार्थैव हविष्कृत–'पत्न्येव हविष्कृत्' इति । तथा च कृत्वाचिन्तया दर्शितम्—"हविष्कृत् सवनीयेषु न स्यात् प्रकृतौ यदि सर्वार्था" (पू. मी. 12 - 2 - 11) इति ।

॥ १५ ॥ मनुष्याः शमितारो वाक्यसन्निधानात् ॥ १ - १ - ३८ ॥

पशौ आम्नायते "दैव्याःशमितार आरभध्वं उत मनुष्याः" इति किमविशेषेण मनुष्याः किं वा ऋत्विड्मात्रं आहोस्विदन्य एव अथवा अध्वर्युरेवेति ।

किं प्राप्तम् ? श्रुतेष्वितरेषु अन्य इति । अविशेषेण मनुष्यवाक्यसन्निधानात् 'उत मनुष्या' इति मनुष्या एव शमितारोऽभिप्रेताः । "दैव्याः शमितार" इति प्रकृतमनुष्या एवाभिधीयन्ते संबन्धात् ।

**॥ ऋत्विजो वा शमितारः सन्निधानं नयने श्रूयते शामित्राख्यां लभेरन् यथोद्गातारः ॥ १-१-३९ ॥**

शमितुरेकत्वात् बहुवचनानुपपत्तेः तेन सार्धं ऋत्विजोऽभिधीयेरन् गमनकर्मसंयोगात् [यथा] उद्गात्रा सह स्तोत्रकारिणः । नयने च श्रूयते 'शमितारो नयन्ति' इति । तस्मात् सर्वऋत्विजोऽभिधीयेरन् ।

**॥ अन्यो वा शमिता सर्वकर्मणामविशेषात् ॥ १-१-४० ॥**

श्रौतानामार्थानामविशेषेण शमनान्तर्भूतानां अन्य एव शमिता कर्ता स्यात् । ऋत्विजामन्यत्र व्यापृतत्वात् ।

**॥ श्रुतिभूतेष्वध्वर्युर्वेदसमाख्यायोगात् ॥ १-१-४१ ॥**

आध्वर्यवे वेदे श्रुतेषु पदार्थेषु अध्वर्युरेव कर्ता स्यात्, ऋत्विजामन्यत्र व्यापृतसमाख्यानात् । सामर्थ्यप्राप्तेषु, मक्षिकानिवारणादिषु अन्योऽपि भवन् न निवार्यते । संज्ञपने च शमनसंयोगात्[1] अध्वर्युरेव संज्ञपयेत् । कुतः ? समाख्यानात् । शमनसंयोगात् स एव शमितेत्युच्यते ।

**॥ लिङ्गदर्शनाच्च ॥ १-१-४२ ॥**

श्रुतमिति प्रैषे त्रिः प्रत्याहेति शमितारं श्रपणे दर्शयति । तस्मात् स एव श्रपयेदिति ।

**इति सङ्कर्षकाण्डभाष्ये**

**प्रथमाध्यायस्य (आदितः त्रयोदशाध्यायस्य) प्रथमः पादः**

---

1. This is Sutra according to Bhattadipika मनुष्याः शमितार is the अधिकरणसूत्र. Others are Gunasutras—चतुरधिकरणीयं एकत्वेन व्याख्याता भा. दी.

## ॥ अथ द्वितीयः पादः ॥

[अ १] पत्नीं सन्नह्येति यजमानस्य भार्यायाः पत्नीशब्द-सामर्थ्यात् ॥ १-२-१ ॥ (सि)

दर्शपूर्णमासयोराम्नायते "पत्नीं सन्नह्य" इति । किमध्वर्योः पत्न्याः सन्नहनम्, उत यजमानस्य पत्न्या इति । किं प्राप्तम्? अध्वर्योर्भार्याया इति, प्रैषस्य अध्वर्युकर्तृकत्वात्, पत्नीशब्दस्य च संबन्धिशब्दत्वात् स्वभार्यामेवाधिकृत्य अध्वर्युर्ब्रूते इत्याग्नीध्राभिप्रायो भवति । अपि च यज्ञसंयोगो भवत्यध्वर्युद्वारेण । दम्पत्योश्च एककारकत्वात् "अर्धो वा एष आत्मनः । यत्पत्नी" इति श्रुतेः । ऋत्विक्संस्कारवत् क्रतूपकारोपपत्तेः अध्वर्युपत्न्याः संनहनमिति प्राप्ते, ब्रूमः:—

यजमानस्य पत्न्याः सन्नहनमेतद्विधीयते । कुतः? शब्दसामर्थ्यात् । पत्नीशब्दः यज्ञस्य स्वामिन्यां वर्तते, न ऋत्विग्भार्यायाम् । संस्कारस्य फलं प्रति ग्रहणांशप्रयुक्तत्वेनान्तरङ्गत्वात् ।

मन्त्रवर्णाच्च ॥ १-२-२ ॥

"संपत्नी पत्या सुकृतेन गच्छताम्" "यज्ञस्य युक्तौ धुर्यावभूताम् । संजानाना विजहतामरातीः" इति । "दिवि ज्योतिरजरमारभेताम्" इत्येकत्वं दम्पत्योराह ॥

लिङ्गाच्च[1] ॥ १-२-३ ॥

"यस्य व्रत्येऽहन् पत्न्यनालम्भुका स्यात् तामपरुध्य यजेत" इत्यपरोधनं यजमानभार्यायां न ऋत्विग्भार्यायां स्वभावसिद्धत्वादपरोधनस्य ॥

इतश्च यजमानपत्न्या एव संनहनम् । "उपहूतेयं यजमाना" इति तस्या एव प्रकृतत्वम् ॥

एवं वा । (?)

॥ २ ॥ सर्वासां कर्तृत्वाविशेषात् ॥ १-२-४ ॥ (सि)

---

1. Sutrapatha. लिङ्गदर्शनाच्च

किं एकस्या एव पत्न्याः संनहनम्, उत सर्वासाम्—इति संदेहः, ।

किं प्राप्तम् ? एकस्या एवेति । कथम् ? एकस्यामेव विधानस्य चरितार्थत्वात् । औदुम्बरी (चमस) [सम्मानवत्] भव्यार्थत्वात उपादीयमानविशेषणत्वेन एकवचनश्रुतेः एकैव सन्नह्या इति प्राप्ते ब्रूमः:—

**सर्वासां** सन्नहनादिसंस्काराः कर्तव्याः । कुतः ? **कर्तृत्वाविशेषात् ।** फलं प्रति ग्रहणांशप्रयुक्तत्वाच । सन्निपातिनोऽङ्गस्य च बलीयस्त्वात् । ग्रहवत् संस्कार्यत्वाविशेषात् । पत्नीप्रातिपदिकस्य यज्ञस्वामिमात्रवचनत्वात् सर्वासामेवंजातीयकः संस्कार इति ।

**॥ मन्त्रवर्णाच्च ॥ १ - २ - ५ ॥**

" सं पत्नी पत्या सुकृतेन गच्छताम् " इत्यविशेषेण पत्नीमात्रस्य फलसंबन्धित्वं मन्त्रवर्णो दर्शयति, " दिवि ज्योतिरजरमारभेताम् " इति ॥

**॥ ३ ॥ भूयांसि कर्माण्यल्पीयांसो मन्त्राः तानि सर्वाणि मन्त्रयन्ति ते मन्यामहे समशः प्रतिविभज्य पूर्वैः पूर्वाणि कुर्यादुत्तरैरुत्तराण्येवंविषये प्रयुक्तानि यथासमाम्नानं भवन्ति ॥** (सि)

षडैन्द्राग्नानि काम्यानि कर्माणि । तेषां क्रमे द्वे याज्यानुवाक्यायुगले समाम्नाते । किं तयोः दण्डकलितवदावृत्तिः, उत एकं संप्रयोक्तव्यम्, अन्यदावर्तनीयम् ? अथ वा पूर्वेणापि त्रीणि कर्तव्यानि, उत्तरेणापि त्रीणि । किं प्राप्तम् ? दण्डकलितवदावृत्तिः । कुतः ? कर्मातिरेकात नियोगतो मन्त्रावृत्तौ क्रमानुग्रहात् त्रिरध्यायपाठवत् आवृत्तिः इति प्राप्ते ब्रूमः:—सकृदेव प्रयुज्येत ॥

सकृदेकं प्रयुज्य आवर्तेतान्यत्, क्रमाविरोधात् इति । अत्रोच्यते । प्रथमेन युगलेन त्रीणि प्रथमानि उत्तरेणोत्तराणि कुर्यात् इति । एवं पाठक्रमानुरोधेन प्रयोगो भविष्यति । अन्यतरावृत्तौ च प्रयोगाकाङ्क्षावैषम्याद्यथैकेन प्रधानमन्त्रेण सर्वाणि प्रधानानि । तस्मान्न किञ्चिदक्रमकं कर्मेति ॥

**॥ ४ ॥ भूयांसो मन्त्राः अल्पीयांसि कर्माणि तत्रैकमन्त्रं कर्माणि कुर्यात् अवशिष्टा विकल्पार्था यथा यूपद्रव्याणि ॥ १–२–७ ॥** (सि)

दर्शपूर्णमासयोराम्नायन्ते विभागमन्त्राः " यथाभागं व्यावर्तेथां " इत्येवमादयः । तत्र संशयः—सर्वे प्रयोक्तव्याः, उत एक एव, इतरे विकल्पार्था इति ।

सर्वाङ्गोपसंहारिणः प्रयोगवचनस्य[ अनुग्रहात् ]विकल्पस्याष्टदोषदुष्टत्वात् समुच्चय इति प्राप्ते ब्रूमः—

विकल्प इति । कथम् ? एवंजातीयकानां मन्त्राणां अभिधानवादे(तेक) [एकेन]कृते द्वितीयस्य प्रयोगेऽपि तदसंभवात्, प्रयोगवचनानुग्रहस्य च पक्षे च संभवात्, एकार्थत्वेन विकल्पस्य युक्तत्वात्; एकस्य कर्मणि विनियोगोऽन्ये विकल्पार्था इति ॥

॥ ५ ॥ ऐन्द्रं पुरोडाशं पयसा प्रदाने कुर्यात् श्रुतिसयोगात् ॥
॥ १–२–८ ॥ (पू)

सान्नाय्यं प्रकृत्य श्रूयते "दारुपात्रेण दुह्यात् । अग्निवद्वै दारुपात्रम् । यद्दारुपात्रेण दुह्यात् । यातयाम्ना हविषा यजेत । अथो खल्वाहुः । पुरोडशमुखानि वै हवींषि । नेत इतः पुरोडाशँ हविषो यामोऽस्तीति । दोग्धव्यमेव" इति । किं कर्मान्तरविधानमेतत् ? आग्नेयस्य वादः ? किं वा पुरोडाशमात्रस्यैवेति । किं प्राप्तम् ? कर्मान्तरविधानमिति । कुतः ? पुरोडाशश्रुतिसंयोगात् । विध्यभाव इति चेन्न, आग्नेयवत् स्यात् । ननु प्रकरणादाग्नेयस्य वादः, न । सन्नाय्यवादात, अर्थव-त्वाच्च । अपूर्वविधावर्थवत्त्वम् । वाक्यस्य यातयामतायामर्थवादाच्च । यथैवोपर्युपरि क्रियमाणयोः पुरोडाशद्रव्ययोः दोषपरिजिहीर्षया उपांशुयाजविधानमेवं आग्नेयस्य पुरोडाशस्य अग्निवद्वै दारुपात्र इत्यग्निवता दारुपात्रेण दुह्यमानस्य पयसोऽग्नि-संबन्धाविशेषात् यातयामतादोषापनिनीषया एतद्द्रव्यस्य पुरोडाशस्याम्नानमर्थवद्भवति । अपि च "नेत इतः पुरोडाशं हविषो यामोऽस्ति" इति वीप्सया ऐन्द्रं पुरोडाशं आग्नेयात् भिन्नं दर्शयति ॥

देवताभाव इति चेन्न; मन्त्रवर्णात्, अस्मिन्नेव क्षणे[प्रकरणे] प्रोक्षणमन्त्रः 'ऐन्द्रमसि देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्राय त्वा जुष्टं प्रोक्षामि" इति । संप्रतिपन्नदेवतत्वाच्च पयसा सह प्रदानमस्येति प्रकरणाच्च मन्त्रानुत्कर्षात् प्रकरणमप्यनुगृह्यत इति प्राप्ते ब्रूमः—

॥ न वाऽनाम्नानात् ॥ १ - २ - ९ ॥ (सि)

नैव कर्मान्तरविधानम् । कुतः ? विध्यभावात् देवताभावात् मन्त्रवर्णस्य इतरेतराश्रयदोषापत्तेः । दारुपात्रस्य च पाक्षिकत्वात् । अग्निमत्त्वस्य वान्यत्रौपचारि-कत्वात् यातयामाभावः । प्रोक्षणमन्त्रस्य च द्यावापृथिव्यनुमन्त्रणवत् उत्तरार्थत्वम् ।

तस्मात् "पुरोडाशमुखानि वै हवींषि" इत्याग्नेयवादः । "पुरोडाशमुखानि वै हवींषि" इति तैत्तिरीयं वाक्यं पुरोडाशजातिमात्रापेक्षमिति व्यवदानीयमेके सूत्रकाराः सूत्रयन्ति । ते न पूर्वपक्षेणान्ताः(?) ॥

**॥ ६ ॥ समानतन्त्रो वैमृधः पौर्णमास्या पयसा तुल्यवत् श्रूयते ॥**

**॥ १-२-१० ॥ (सि)**

पौर्णमास्यामङ्गं वैमृधः । स किं पौर्णमास्या समानतन्त्रः, उत[भिन्नतन्त्र इति] किं प्राप्तम् ? समानतन्त्र इति । कुतः ? पयसा तुल्यवच्छ्रूयते । पयसश्च समानतन्त्रममावास्येन । ननु कथं ? "वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति । तेन पूर्णमासः सेन्द्रः ऐन्द्रं दध्यमावास्यायाम् तेनामावास्या सेन्द्रा" इति तुल्यवदाम्नानात् । प्रयोगप्राशुभावाच्च । संस्थाप्येति कथं ? प्रधानहविर्निर्देशोऽयं, पौर्णमासीमिति द्वितीयाश्रुतेः । तस्मात् समानतन्त्र इति प्राप्ते, ब्रूमः —

**इष्ट्वेत्यपवृज्य विधानात् नानातन्त्रं स्यात् ॥ १-१ ११ ॥ (सि)**

स वैमृधो नानातन्त्रः स्यात । "स वै पौर्णमासेन हविषेष्ट्वाऽनुनिर्वाप्यः" इत्यपवृज्य विधानात्, तृतीयादिनिर्देशात् प्रयोगोत्तरकालता वैमृधस्य । प्रयोगानन्तर्यान्नानातन्त्रत्वम् । इन्द्रवत्ता च तुल्या समानतन्त्रतातुल्यत्वं कुतो ह प्रधानयोरिति । अपि च दक्षिणाभेदात ।

**॥ दक्षिणाभेदाच्च ॥ १ - १ - १२ ॥**

"तत्र यच्छक्नुयात्तद्दद्यात्" इति भेदे [न] दक्षिणाम्नानं भिन्नतन्त्रत्वेऽवकल्पते "संस्थाप्य पौर्णमासीम्" इति द्वितीयाश्रुतिरपि संस्थाप्येत्यनेन एकवाक्यत्वं प्रतिपद्यमाना प्रयोगविषयत्वमेव प्रतिपद्यत इति ।

**॥ ७ ॥ स नित्यो यथान्यान्यङ्गानि ॥ १ - १ - १३ ॥ (पू)**

स किं पौर्णमास्या नियतमङ्गम्, उत अनियतमिति । किं युक्तम् ? नियतमङ्गमिति । कुतः ? निमितोपबन्धमन्तरेण अङ्गत्वस्य श्रूयमाणत्वात्, आघारादिवत् ॥

**॥ न वा विप्रतिषेधात् ॥ १ - २ - १४ ॥ (सि)**

नैव वैमृधो नियतमङ्गम्; कुतः ? विप्रतिषेधात्। यदिशब्दान्नियतत्वं विप्रतिषिद्धम्। यदि भुञ्जीत स्नायादित्युक्ते न भोजनं नियतं गम्यते तद्वदत्रापि। "तं यदि निर्वपेदिति" "यदग्रे निरुप्य नानुनिर्वपेत् अमृध एवैनमभिसंभजेत्" इति निन्दार्थवादात्। यथा लोके "यदि देवदत्तोऽग्रे प्रतिपत्तिं विधाया[क]स्मान्नेदानीं कुरुते ततो दह्यते हृदयं" इत्युक्ते प्रथमं प्रतिप[द्या]करणमपि मनसः दुःखात्मकमेव विभाव्यते। "याः पूर्वमाहुतिभाजो देवताः ता अनुध्यायिनीः करोति" इति पूर्वमाहुतिसंबन्धे सत्यनुध्यायिनीवचनम्। इतरथा भागिन्यनुध्यानं नैव निवर्तेत इत्यारब्धस्यापरित्यागवचनं नित्ये विप्रतिषिद्धं, तस्मादनियमः प्रक्रम इति ॥

॥ ८ ॥ **यद्येतानालभेतेत्येतेन व्याख्यातम् ॥ १ - २ - १५ ॥**

अग्नौ—यद्येतानालभेत वायव्यस्यैव शिर उपदध्यात् इति। किं पश्वालम्भो नित्यः, उतानित्य इति सन्देहे "एतेन व्याख्यातम्" इत्यनन्तराधिकरणातिदेशोऽयम्। पूर्वोत्तरपक्षौ तावेवात्रापि। पूर्वस्मिन्वाक्ये न्याये दृष्टान्तसूत्रमेतत् इति। "यद्येतानालभेत" इत्यनियतेन पश्वालम्भेन व्याख्यातम् वैमृध[वद]स्यानित्यत्वम्—इति ॥

॥ ९ ॥ **अग्रशब्दः पौर्णमासीमधिकुरुते तत्र ह्याम्नातः ॥ १ - २ - १६ ॥** (पू)

वैमृध एव सन्दिह्यते—किमादावेवास्य विकल्पः उत यदा कदा चोपक्रम्य नोत्स्रष्टव्यः इति। किं प्राप्तम् ? आदावेव विकल्प इति। कुतः ? यदग्रे निरुप्य इत्यग्रशब्देन अधिकारसामर्थ्यादाधानानन्तरा पौर्णमास्युच्यते। प्रकृतत्वाच्च। प्रकृता हि सा कर्मणः तत्राम्नानात्। तस्मादादावेव विकल्प इत्येवं प्राप्ते ब्रूमः—

॥ **प्रक्रमवादो वा वैमृधस्यानित्यत्वात् यथाग्रे कृत्वा नेदानीं करोतीति ॥ १ - २ - १७ ॥** (सि)

अनियतत्वात् वैमृधस्योपक्रमात् पौर्णमासीप्रकरणाच्च (अधिकारशब्दः) अग्रशब्दः पौर्णमास्याम्। वाक्यसामर्थ्यात् वाक्येनाग्रे निरुप्येति वैमृधनिर्वापो हि संबध्यते प्रक्रमात्। पौर्णमासीप्रकरणाच्च वाक्यं बलवत्तरम्। श्रुत्या च कर्मयोगोऽभिसंबध्यते लक्षणया कालः। श्रुतिः लक्षणातो ज्यायसीति। तस्माद्यदा कदाचोपक्रम्य नोत्स्रष्टव्यमिति ॥

॥ १० ॥ न द्वे यजेतेत्यभ्युदितेष्टेः पर्वणश्चानन्तर्यात्
॥ १-२-१८ ॥ (पू)

"न द्वे यजेत यत्पूर्वया संप्रति यजेतोत्तरया छंबट् कुर्यात् यदुत्तरया संप्रति यजेत पूर्वयाछंबट् कुर्यात् नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुख्यपगल्भो जायते एकामेव यजेत प्रगल्भोऽस्य जायतेऽनादृत्य तद्द्वे एव यजेत" इत्यभ्युदितेष्ट्यनन्तरमाम्नायते "द्वे यजेत" इति किमयं पर्वाभ्युदितेष्ट्योर्वादः, उत, ऋद्धिकामस्याविकृतयोरभ्यास उत दर्शाभ्युदितेष्ट्योः प्रयोगः ऋद्धिकामस्येति । न द्वे यजेत इति प्रतिषेधो न भवति । न च एकामेव यजेत इत्यत्र वृथा विधिः, महावाक्येनान्यस्य विधित्सितत्वात्; न च महावाक्येऽवान्तरवाक्यं प्रमाणम्; संभवति च एकवाक्यत्वे वाक्यभेदस्य अनिष्टत्वात; विधिप्रतिषेधभेदेन अनेकार्थालोचने पौर्वापर्यानपेक्षणात्; तस्मात "द्वे एव यजेत" इति विधिः; न द्वे एव यजेत इत्यादिः तच्छेष एवेति । द्वे एव यजेतेति पर्वाभ्युदितेष्ट्योः वादः, आनन्तर्यात्, सन्निहितापेक्षत्वाच सङ्ख्यायाः नित्यया सम्प्रति, ना(त्व)भ्युदितेष्टिः तस्याः संप्रतिशब्दो नोपपद्यते, कालप्रवृत्तिनिमित्तत्वात् । दर्शोऽपि नित्य एव, तयोः यत पूर्वया सम्प्रतीति सञ्ज्ञया वादो युक्तः । तस्मात पर्वाभ्युदितेष्ट्योः नियतयोर्वाद इति ॥

द्विरिज्यावादो[1] वा न ह्यन्यत् प्रत्यक्षं वचनं विद्यते ॥ १-२-१९ ॥ (सि)

ऋद्धिकामस्य दर्शपूर्णमासयोः द्विरभ्यासमेके समामनन्ति "द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेतर्ध्नुयाम्" इति । तस्य वादोऽयं विवक्षितस्य । द्विरभ्यासो वचनात ऋद्धिकामस्य । नैमित्तिकाभ्युदितेष्टिं एकां चाविकृतामिति[न] अर्थवत्ता वचसः । सम्प्रतिशब्दश्च न विरोत्स्यते, दुर्विज्ञेयत्वात्कालस्य । तस्मा[न्न] पर्वाभ्युदितेष्ट्योर्वाद इति ॥

अथवा — "द्वे एव यजेत" इति नियतवादा[द]भ्युदितेष्टिविषयं विधानम् । क्रमात् विधानानर्थक्यमिति चेत्, "अर्धं हविरातञ्चनाय निदध्यात्" इति पुनः प्रयोगोपपत्तेः इति ।

उच्यते । अभ्युदितेष्टेः देवतागुणविकारेऽपि दर्शत्वानपायात् कृतं चोदितं कर्मेति पर्यवसानबुद्धावुत्थितायां इदं विधानं-द्वे एव यजेत नैकामभ्युदितेष्टिमिति ।

1. द्विरिज्या वा

अर्थवादयोजना तु "न द्वे यजेत" इत्यादिना कालसंबन्धानवक्लृप्तिं पौर्वापर्यं च अनवधारणं च दर्शयति । "अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च" इत्यादिवत् एकामेव यजेत इत्यभ्युदितेष्टिमेव केवलामेकत्वेनैवापास्तदोषामित्येतद्विधानमपि अनादृत्य "द्वे एव यजेत" इति विधानं तच्छेषत्वं च सर्वस्यापि च इति । एषां च प्राप्तं हविरातञ्चनवचनम् । लिङ्गं च तद्द्योतयतीति ।

**॥ ११ ॥ "यत्पितृभ्यः पूर्वेद्युः करोति पितृभ्य[1] एव तद्यज्ञं निष्क्रीय देवेभ्यः प्रतनुते" इति न तन्त्रादौ प्रक्लृप्तत्वात् ॥ १ - १ - २० ॥** (सि)

किमयं पिण्डपितृयज्ञो दर्शे तन्त्रे प्रकृते क्रियेत नवेति । तत्सिद्ध्यर्थमिदं विचार्यते । प्रातरग्निहोत्रं हुत्वाऽऽदधातीत्यग्निप्रणयनं पिण्डपितृयज्ञार्थं आहोस्वित् दर्शार्थमिति ।

किं प्राप्तम् ? प्रथममेव । कुतः ? निष्क्रयवचनात् प्राथम्यश्रुतेश्च । वरप्रार्थनात्पितॄणां अस्मभ्यमेव प्रथमं निरुप्यतामिति । कुतः ? पूर्वेद्युः करोति पूर्वमेव करोतीत्यग्निप्रणयनं पिण्डपितृयज्ञार्थमेव । अतत्कालत्वान्न तदर्थमिति चेत् । न, वचनेनापकर्षोपपत्तेः । यद्वा क्त्वाप्रत्ययेन पूर्वकालतामात्रप्रतीतेः । अतः प्रणयनं तदर्थमेवेति । न च निशीष्टिवत् दर्शपातित्वं पितृयज्ञस्य । किन्तु दर्शात् पूर्वकालत्वमेव यथा सोमात्पूर्वकालत्वं दर्शपूर्णमासयोरिति प्रणयनस्य तदर्थत्वमिति प्राप्ते ब्रूमः ।

मध्ये वा वितते विधानात् । वितते (पितृयज्ञे) दार्शे तन्त्रे पितृयज्ञो विधीयते अपराह्णे पितृयज्ञेन चरन्तीति । यथा दर्शपूर्णमासयोः ज्योतिष्टोमस्य च क्रमः नैवमत्र, प्रमाणाभावात् । पक्षे प्रधानयागापेक्षं पूर्वत्वमुच्यते । 'पितृभ्यः पूर्वेद्युः करोति' इति न प्रयोगवचनाश्रयः क्रमः अनङ्गत्वात् । उप[पदार्थ]पूर्वेद्युस्त्वस्यावध्यपेक्षाभावोऽन्यबाधात् नाप्रकृतत्वात् । न पितृयज्ञाङ्गमग्निप्रणयनं, भिन्नकालत्वात् । न च वचनादपकर्षः अन्यथाप्युपपत्तेर्वचसः । निस्सन्दिग्धं प्रणयनान्तरं दार्शपूर्णमासिकानेकपदार्थविधानात् । पितृयज्ञस्यापूर्वार्थत्वेऽपि प्रणयनोत्तरकालं प्रसङ्गाविरोधात् । प्रणीते प्रणयनाभावात् दर्शार्थमेव प्रणीते पितृयज्ञप्रयोगनिर्वृत्तेः अस्मभ्यमेव प्रथमं निरुप्यताम् [ इति] प्राथम्यवचनं (वि)[प्र]धानापेक्षम् । तस्मान्न पितृयज्ञस्य दर्शस्य च क्रमः ॥

---

1. देवेभ्यः R. A

॥ १२ ॥ उत्तरस्मिन्पर्वणि दृश्यमाने प्रतीयेत सन्निकर्षोऽभि-
॥ प्रेतः १ - १ - २१ ॥ (सि)

द्वे अमावास्ये, सिनीवाली, कुहूश्चेति। दृष्टचन्द्रा सिनीवाली, कुहूर्नष्टक्ष-पाकरा। पितृयज्ञमेव प्रकृत्याऽऽमनन्ति—"यदहरेष पुरस्तान्न दृश्येत तदहर्दद्यात्" इति। तत्र किं पूर्वस्मिन् पर्वणि[1]पितृयज्ञक्रिया आहोस्वित् उत्तरस्मिन् इति संशयः। किं प्राप्तम्? पूर्वस्मिन्निति। कुतः? चोदितत्वात्। "चन्द्रादर्शने अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इति चोदितस्य ह्यविशेषणस्य कालस्य पूर्वस्मिन्नप्यहनि विद्यमानत्वात्। चन्द्रादर्शनं नास्तीति चेत्; न, उत्तरस्मिन्नपि पूर्वाह्णेति चेत् अमावास्याया अनुपपत्तिः। नियोगतोऽन्यतर[हाने]वरं विशेषणहानिरिति। अथा-मावास्यायामित्युद्दिश्यमानत्वात् अपराह्णे चन्द्रादर्शन इति विशेषण[यो]र्द्वयोः वचन-व्यक्तिभेदात् अन्यतरापाये चन्द्रादर्शनस्यामावास्यायामुचितत्वात् तदनुवादः। तस्मात् पूर्वस्मिन्नेव क्रियेत इति प्राप्ते ब्रूमः—

उत्तरस्मिन्नेव पर्वणि क्रियेत, तत्रास्य चोदितत्वात्। अमावास्यानुपपत्तिरिति चेत्, "यां तिथिं समनुप्राप्योदयं याति भास्करः। सैव तस्याः तिथिर्ज्ञेया" इति स्मृतेः सकलचोदितानुष्ठानसंभवेऽन्यतरविशेषणपरित्यागे प्रमाणाभावात्। वाक्यभेदः इति चेत्, न विशिष्टविधानात्। कालस्योद्दिश्यमानत्वात्(नानात्वा)विशेषणानुपपत्ति-रिति चेत्; [प्रतीक्षणो]पादेयोपादानात्। तेन उत्तरस्मिन्पर्वणि दृश्यमानेऽपि चन्द्रमसि गतिवैषम्यदर्शनेन सूर्याचन्द्रमसोः परस्परं सन्निकर्षस्याभिप्रेतत्वात्, प्रातर्दृष्टेऽपि क्रियाकाले सूर्येण सन्निकृष्यते इति। अमावास्यायामित्यविशेषश्रुतेः "तदहरेष पुरस्तात् न पश्चाद्दृश्येत" इति विशेषणश्रुत्या बाधित[त्वा]दुत्तरस्मिन् पर्वणि त्वमावास्यां निर्वर्त्य पितृयज्ञः कर्तव्यः। विधानापेक्षं च पौर्वापर्यमिति।

॥ १३ ॥ दक्षिणाग्नौ श्रपणं श्रूयते। तस्याहवनीये प्रदानं
यथान्यासामाहुतीनां [2]यदाहवनीये जुह्वति इति॥ १ - १ - २२ ॥(पू)

गार्हपत्ये श्रुतानां हविषां आहवनीये प्रदानम्। [अत्रापि]किमाहवनीये अथवा प्रणीते, किं वा दक्षिणाग्नाविति सन्दिह्यते। किं प्राप्तम्? आहवनीय एवास्य प्रदानम्।

---

1. R. कर्मणि
2. Sutra text omits this part of the Sutra

कथम्? विशेषवचनात्। आहवनीयोऽधिकरणं सर्वासामाहु[तीनां]जु[ह्वा हु]तानां, यदाहवनीये जुह्वति[इति]गार्हपत्ये श्रृतानां हविषामाहवनीये प्रदानम्। दक्षिणाग्नौ श्रपणाम्नानात् तत्र श्रृतस्य प्रदानमाहवनीये स्यात् इति।

**॥ १४ ॥ दक्षिणाग्नेरेकोल्मुकं धूपाय धरतीत्येकेषां तत्र प्रदानमर्थवत् धारणं यथा पशावतिप्रणीतस्य ॥ १ - २ - २३ ॥**

एवमत्रापि दृष्टार्थत्वात्प्रणयनस्य तत्रैव क्रियते।

**॥ यस्मिन् श्रपयति तस्मिन् जुहोतीति दक्षिणाग्नौ ॥ १ - २ - २४ ॥ (सि)**

प्रत्यक्षेण विधानात् तत्रैव प्रदानार्थमन्त्रवर्णसामर्थ्यात्। अतिप्रणीतस्य रक्षोहननार्थत्वमेव विज्ञायते। "ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति परापुरोनिपुरो ये भरन्त्यग्निष्टान् लोकान् प्रणुदात्यस्मान्" इति। (शुक्ल यजुस्संहिता २ - ३०)

**॥ १५ ॥ अप्यनाहिताग्निना कार्यं पितरश्चिन्मावेदयन्तीति ॥ १ - २ - २५ ॥ (सि)**

किमयमनाहिताग्निना कार्यः उत नेति सन्दिह्यते। किं प्राप्तम्? न कर्तव्य इति। कुतः? अनग्नित्वात्। [अपिशब्द]प्रक्षेपणादधिकारविधिरिति चेत्, न, अर्थवादत्वेनाप्युपपत्तेः। "वनस्पतयोऽप्येतत् सत्रमासत" इतिवत्। अनाहिताग्निनाप्येतत् कर्तव्यम्, किं पुनराहिताग्निना — इति प्राप्ते ब्रूमः—

अनाहिताग्निना कार्य एव। कुतः? शब्दसंयोगात्। अनाहिताग्निकर्तव्यमेवेति अधिकारस्याविशिष्टत्वात्। अपिशब्दस्यावधारणार्थत्वात्। "पितरश्चिन्मावेदयन्ति" इत्यर्थवादोपात्तमेव पितरो विदुरिति ॥

**॥ १६ ॥ स लौकिकेऽग्नौ क्रियेत यथान्यानि कर्माणि ॥ १ - २ - २६ ॥**

स पितृयज्ञोऽनाहिताग्नेः श्रुतः यस्मिन् कस्मिंश्चिदग्नौ क्रियेत आहोस्वित् आवसथ्य एवेति। अविशेषेण अधिकारश्रुतेः अनियम इति प्राप्ते ब्रूमः—

स पितृयज्ञो लौकिक औपासनाग्नौ क्रियेत, अधिकारिणः सर्वस्य साग्निकत्वात्। यथान्यानि कर्माणि अप्रतिषिद्धप्रेताग्निसंबन्धानि औपासनाग्नौ क्रियन्ते एवं पितृयज्ञमपीति। 'अनाहिताग्नेरौपासने' इत्यादौ तद्विषयत्व(ा)दर्शनादनाहिताग्निश्रुतेः, इति॥

**॥ १७ ॥ तत्र गार्हपत्यस्थानीयमागमयेत् यथा होमार्थे**
**॥ १-२-२७ ॥ (पू)**

पितृयज्ञ एवोपस्थानार्थं अग्न्यन्तरमुपादेयं नेति चिन्त्यते। युक्तमागमयेत्, अतिदेश्यात् भिन्नत्वात्। होमार्थात् दक्षिणाग्नेरुपस्थेयस्य गार्हपत्यस्य भिन्नत्वात्। तद्वदत्रापीति प्राप्ते ब्रूमः—

**॥ न वा पृथगस्य संस्कारनिमित्तत्वात् ॥ १-२-२८ ॥ (सि)**

नैवात्रोपस्थेयान्यस्य अग्नेरुपादानम्, औपासनाग्नेरेकत्वात् गार्हपत्यशब्दानां संस्कारनिमित्तत्वात् भेदाभेदोपपत्तेः। तस्माद्यस्मिन्नेव प्रदीयते तमेवोपतिष्ठेत।

**॥ १८ ॥ तत्र गार्हपत्यशब्दो लुप्येत संस्कारसंयोगात्**
**॥ १-२-२९ ॥ (सि)**

"यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम्" इति किमौपासनाग्नौ मन्त्रोऽविकारेण प्रयोक्तव्यः, आहोस्विदूहेन, किंवा गार्हपत्यशब्दस्य लोप एव इति।

किं प्राप्तम्? मन्त्रानुग्रहादविकारेण प्रयोग इति। वचनातिदेशात् प्रकृतिविकारभावोपपत्तेः अनन्वितत्वाच्च प्रकृतस्य औपासनस्य च होमाधिकरणत्वेन संस्कार्यत्वात ऊहेन प्रयोग इति प्राप्ते ब्रूमः—

तत्र, तस्मिंश्चाग्नै, गार्हपत्यशब्दो लुप्येत। कुतः? संस्कारनिमित्तत्वात प्रतिषिद्धत्वाच्च संस्काराणां न कार्यापत्तिः, अग्निकार्यस्य शास्त्रावगम्यत्वात्। तदुक्तम्—"न देवताग्निशब्दक्रियमन्यार्थसंयोगात्" इति। अधिकारभेदात, गार्हपत्याभावात। सत्यप्यन्वितवचनत्वे श्रपणार्थत्वान्न विकारहेतुत्वमिति। विक्रियमाणश्चार्थः ऊहनिमित्तो भवतीति॥

**॥ १९ ॥ यत्पौर्णमास्यामग्नीषोमीयं तेनामावास्यायां यजेत कृतलक्षणग्रहणात् ॥ १ - २ - ३० ॥ (पू)**

दर्शपूर्णमासौ प्रकृत्यामनन्ति—"अग्नीषोमीयेण यजेत पौर्णमासीममावास्यामभिचरन्" इति । किं प्रकृत(प्राप्त)फलार्थैतत्कर्मान्तरं विधीयते । किं स्वाङ्गमिदम्, उत समुदायप्रत्याम्नायः, किंवा अमावास्यायां पुरोडाशमात्रे गुणविधानं किंवा समुदायस्यैव गुणविकारात् फलम्—इति । प्राप्तम् कर्मान्तरमिति । कुतः ? फले वाक्यसमाप्तत्वात् अग्नीषोमीयेण यजेताभिचरन्निति यथैन्द्राग्नमेकादशकपालं निर्वपेत् द्दक्काम इति । प्रकरणाच्च वाक्यं बलवत्तरमिति प्राप्ते ।

उच्यते । गृह्णीमैतद्वाक्यस्य समाप्तत्वात् कर्मान्तरमिति । किन्तु वाक्यप्रकरणयोरविरोधात् प्रकृतस्यैवाङ्गं वैमृधवत् स्यात् इति । फलश्रुतेः नेति चेत्, न, सर्वफलस्य यागस्य पक्षेऽनुवादात् । फलपदानुवादे तु आनर्थक्यं विधावपि अङ्गप्रधानसंबन्धभेदात् अङ्गफलसम्बन्धभेदाच्च वचनव्यक्तिभेदः । तस्मान्नाङ्गाङ्गिसंबन्धःसमुदायफलस्य । समुदायप्रत्याम्नायपक्षे तु अनुवादेऽपि दोषाभावात् समुदायप्रत्याम्नायपक्षः श्रेयान् इति ।

यादृशः पौर्णमास्यामग्नीषोमीयः तादृश एवामास्यायां प्रयुज्यमानः समुदायफलं साधयतीति । कुतः ? विधानस्यार्थवत्त्वात् इति । एतदपि नोपपद्यते, वाक्यभेदात् । कथमिति फलसमुदायोद्देशेन वैरूप्यात् । न च फलपदानुवादो वैयर्थ्यात् । न वा एकस्य समुदायस्य फलसाधकत्वं, शक्तिभेदात् । कर्मशक्तीनां शास्त्रगम्यत्वान्नेति चेन्न ; शास्त्रस्याप्यन्यथाप्युपपत्तेः ( नेतिचेत् ) । तस्मान्न समुदायप्रत्याम्नायपक्षो घटिष्यतीति । (यदेव) [यद्वा] प्रकृत एव आग्नेये पुरोडाशे गुणविधानं, नित्ये प्रायोऽग्निरेव देवता । इह तु भ्रातृव्यवत्प्रयोगे सोमोऽपि(वी) । उत्पत्तिशिष्टदेवतापरित्यागेन अनुवादोऽपि प्रत्यभिज्ञानात् । यद्वा भ्रातृव्यवान् सोमसहितेनाग्निना अमावास्यायां, [इति] (भ्रातृव्यवानिति) नैतदुपपद्यते (सिद्धम) [विद्धय]नुवादयोरेकस्मिन् वाक्ये विप्रतिषेधात् । सोमस्य आग्नेययागफलसंबन्धे युगपद्विप्रतिषेधात् "आग्नेयं चतुर्धा करोति" इत्यादिवत् सापेक्षात् (वाक्यपेक्षा) तद्धितानुत्पत्तेः । अनुवादविरोध इति चेन्न, शब्दशक्तेः विशिष्टत्वात् । तस्मान्नायमपि पक्षो घटते इति ॥

**॥ अमावास्या विकृता तन्नामधेयं श्रूयते, यथा "त्रिवृदग्निष्टोमः" इति स्तोत्राणां संख्याविकारः ॥ १ - २ - ३१ ॥ (सि)**

एवमेतेषु पक्षेषु विरुद्धेषु अन्यथानुपपत्त्या उत्पत्तिवाक्योपनीतद्रव्यदेवतासंबन्धिनोऽपि यागस्यानुवादेन गुणफलसंबन्धो घटिष्यति। तत्र "वैश्वदेव्यामिक्षा" इत्युत्पत्तिवाक्योपनीतद्रव्यदेवतानुमिते यागे गुणान्तरविधिः । स यदनूद्यमाने तादृशस्यैव हृदि परिवृत्तेः निराकाङ्क्षम् । तत्र गुणान्तरविधानानुपपत्तेः कर्मान्तरपरिकल्पना । इह तु गुणफलभावना प्रकृतमितिकर्तव्यतांशपातिनं धात्वर्थं केनचिदंशेन प्रत्यभिज्ञायमानं न निराकरोति । यजिश्रुतिमन्तरेणाप्युत्पत्तिवाक्योपनीतसोमद्रव्यकेऽपि यागे फलचमसमद्राक्षम् । अतो वाक्यगतेश्चित्रत्वात् काम्येनाग्नीषोमीयविधानेन अमावास्या देवता विक्रियते । यथा त्रिवृदग्निष्टोमविधानेन स्तोमसङ्ख्या । अमावास्यामिति च सङ्ख्यासमुदायशब्दात् समुदायदेवता विक्रियते । तस्मात्प्रकृतकर्मनिवेशिना गुणेन फलं भाव्यत इति ॥

**॥ २० ॥ अग्नीषोमीयेण यजेत पौर्णमासीमिति नित्यकामो यथैन्द्रवायवे ॥ १ - २ - ३२ ॥ (पू)**

पौर्णमास्यां किं नित्य एवाग्नीमीयः, उत पूर्वसमुदायदेवतागुणविकारात फलमिति । किं प्राप्तम् ? अग्नीषोमीयात् नित्यात् फलमिति । कुतः ? सन्निधानादवेष्टिवत । स एवाग्नीषोमीयः फले विधीयते, [प्रत्या]सत्त्यनुग्रहात् । इतरथा त्यन्तं[क्तं] वाक्यं स्यात् । यथैन्द्रवायवे प्रमाणवाननेकत्राविशेषभावो युक्तः । पौर्णमासीशब्दश्च लक्षणया तदवयवे प्रवर्तिष्यते । तस्मान्नित्य एव काम इति प्राप्ते ब्रूमः—

**॥ [1]पौर्णमासी वा देवता [ वि ]क्रियते इत्येतेन व्याख्यातम् ॥ १ - २ - ३३ ॥ (सि )**

वाशब्दः पक्षं व्यावर्तयति । पौर्णमासीमिति श्रुत्या समुदायनिर्देशात् समुदायहविर्देवताविकारादमावास्यायामिव फलमिति । सकृत्प्रयोगे सत्याहृतावनेकत्र शेषभावो न युक्त इति । ऐन्द्रवायवे तु नित्यकामो विकारावकाशात इति ॥

**॥ इति सङ्कर्षकाण्डभाष्ये प्रथमस्याध्यायस्य द्वितीयः पादः ॥ समाप्तः ॥**

—:*:—

1. Sutra text omits this Sutra.

# अथ तृतीयः पादः ॥

## ॥ १ ॥ सर्वाधिकारोऽविशेषेण श्रूयते ॥ १-३-१॥ (पू)

" साकं प्रस्थायीयेन यजेत " इति किं सर्वेषां हविषां उत दोहयोरेवेति सन्दिह्यते । किं प्राप्तम् ? सर्वेषाम् । अविशेषेण सह प्रदानत्वश्रुतेः । " साकं प्रस्थायीयेन यजेत " इत्यविशेषात् सह प्रदानमिति । नन्वाग्नेयेन प्रचर्याग्नीधे स्रुचौ प्रदाय सह कुम्भीभिः अभिक्रामन्नाहेत्याग्नेयस्य पूर्वतः[1] ज्ञायते । सत्यम् । अस्य क्रमपरत्वात् । विध्युद्देशे च सहत्वविधानात् विकल्प इति ।

## ॥ दोहयोर्वा देवतासामान्यात् ॥ १-३-२॥ (सि)

दोहावेव सह प्रदीयेयाताम् । कुतः ? देवतासामान्यात् । ऐन्द्रत्वाद्दधिपयसोः संप्रतिपन्नदेवताकत्वाच्च प्राजापत्यवत , आग्नेयेन प्रचर्येति पूर्वकालत्वप्रतीतेः दोहयोरेव सहत्वान्वयात् साकं प्रस्थायीयेनेत्युपपद्यते । यद्वा " साय सायंदोहाभ्यां चरति प्रातः प्रातर्दोहाभ्याम् " इति भेदेन प्रचारे प्राप्ते सर्वेषां दोहानां प्रातरेव सहत्वविधित्सया " साकंप्रस्थायीयं वा एतत्क्रियते यदमावास्यायां हविर्दुहति तद्दुर्गतञ्च[2] निदध्यात् यत् प्राप्तं तच्छृतं कुर्यात् " इति , कुम्भीभिरिति च बहुवचनं दोहानामेव सहत्वं ज्ञापयति । तदन्वयनं च साकंप्रस्थायीयेनेति । तस्माद्दोहविषयमेव सहत्वमिति ॥

## ॥ २ ॥ सह कुम्भीभिरभि[3]क्रामन्नाहेति स्रुक् प्रत्याम्नायःश्रूयते यथा पलाशस्य मध्यमेन पर्णेन जुहोति इति ॥ १-३-३ ॥ (सि)

साकंप्रस्थाय्य एवेदं चिन्त्यते । कुम्भीभिः स्रुक् प्रत्याम्नायते, उत नेति । तत्सिद्ध्यर्थमिदं चिन्त्यते । किं प्रदाने कुम्भ्यः श्रूयन्ते, आहोस्वित हविर्धारण इति । किं प्राप्तम् ? स्रुक्प्रत्याम्नाय इति । कुतः ? कुम्भीनां प्रदाने श्रवणात । कुम्भीभिरभिक्रामन्नाहेति कुम्भीभिरेव प्रदीयत इति कारकनिर्देशात् । सह (प्र)योग-

---

1. प्रदानमिति शेषः
2. सुरक्षितमित्यर्थः
3. Sutrapatha reads अतिक्रामन्

लक्षणा तृतीयेति चेत्; न, कारकलक्षणाया बलीयस्त्वात्। यथा मध्यमेन पलाशपर्णेन जुहोतीति स्रुक्प्रत्याम्नायः एवमिहापीति ॥

॥ लिङ्गाच्च ॥ ४ ॥

लिङ्गमप्येतदर्थं दर्शयति। "यत्कुम्भैः[ ]जुह्वति तन्निष्ठूर्यं दारुमयेन होतव्यं अनिष्ठूर्यतायै" इति कुम्भीनां प्रदानप्रसङ्गे सति प्रतिषेधवचनमर्थवद्भवति।

स्थितं तावदपर्यवसितम्। अन्तरा अन्यत् प्रक्रम्यते ॥

॥ ३ ॥ कर्तृविवृद्धौ होमे प्रदानं प्रति पात्रविवृद्धिः ॥ (पू)
॥ १ - ३ - ५ ॥

इदमिह चिन्त्यते—किं दोहेऽन्याः, प्रदानेऽन्याः किं वा या एव दोहकाले एता एव प्रदानकाल इति। तथेदमपरं सन्दिग्धं कुम्भीभिरिति कुम्भीबहुत्वं प्रदानवेलायां, उत दोहसमय एवेति। किं प्राप्तम्? कुम्भीबहुत्वं प्रदानकाले। कुतः? तत्र श्रुतत्वात्। कुम्भीभिरभिक्रामन्नाह इति प्रदानसमये कुम्भी[बहु]त्वं श्रूयते। दोहं प्रकृत्याम्नानात् द्वयोर्दोहयोः द्वे एव कुम्भ्यौ हविर्धारणार्थे। तेनान्या दोहे, अन्या प्रदान इति। धर्मपृथक्त्वात्। दोहकालानां कुम्भीनामन्ये संस्कारा विहिताः, प्रदानार्थानां च कार्यापत्त्या प्राकृतस्रुक्संस्काराः प्राप्यन्ते। अनन्यत्वे त्वेतत्संस्काराः क्रियेरन्। अयथाकृताश्च[1]। तस्मात् दोहात्प्रदानकालानां कुम्भीनामन्यत्वमेवेति प्राप्ते ब्रूमः—

दोहकाले वा विवृद्धिरर्थपृथक्त्वात् यथा पुरोडाशविवृद्धौ चतुर्मुष्टिता ॥ १ - ३ - ६ ॥ (सि)

दोहसमय एव विवृद्धिः कुम्भीबहुत्वं दोहकाल एवेति। यथाऽश्वप्रतिग्रहेष्ट्यां पुरोडाशविवृद्धौ चतुर्मुष्टिविवृद्धिः।

कुम्भीभिरित्युत्पन्नाधिकाराः शेषापनयार्थाः यथा सर्वहुतमेककपालं जुहोति इति ॥ १ - ३ - ७ ॥

---

1. भवेयुरित्यर्थः प्राकृतबाधात्।

[ननु उक्तं] कुम्भबहुत्वं प्रदानकाले श्रूयते, इति, सत्यं श्रूयते, नतु विधीयते । दोहकाल एव सामर्थ्यप्राप्ते हविर्धारणे व्यापृताः सह कुम्भीभिरभिक्रामन्नाहेति शेषकार्यापनयने[1]ऽनूद्यते यथैककपालस्य सर्वहोमे शेषापनयनं इति । न च कुम्भीषु धर्मसङ्करः ; प्रदानार्थत्वेऽप्यविरुद्धधर्माः परिधाविव[वि]धीयन्त एवेति । तस्माद्या एव दोहे ता एव प्रदानेऽपीति ॥

**॥ दारुपात्राणि कुम्भीभिर्विकल्पेरन्नेकार्थत्वात् ॥ १ - ३ - ८ ॥**

स्थितं तावदुत्तरम् । नैतदेवं कुम्भीभिरेव होमः कर्तव्य इति । किं तु विकल्पेरन्—कुम्भीभिर्वा दारुपात्रैर्वा । कस्मात् ? एकार्थत्वात् । कथमेकार्थत्वम् ? प्रतिषेधात् । प्रक्रान्तत्वात , स्रुगपनयनाच्च । कुम्भीनां प्रदानार्थत्वात् दारुपात्राणामपि वचनेन दारुपात्रेण जुहोतीति । एकवचनं च जात्यभिप्रायम् । यथा निष्पन्नो व्रीहिः इति ॥

**॥ प्रवृत्तस्य प्रदानस्य पात्रापनयो यथा पात्नीवतं पर्यग्निकृतमुत्सृजेदिति ॥ १ - १ - ९ ॥**

कुम्भीभिः प्रदानस्यापनयः । कस्मात ? प्रदानं प्रति प्रत्यासन्नासु कुम्भीषु पात्राणि श्रूयन्ते । "यावत्यः कुम्भ्यः स्युः तावन्ति दारुपात्राणि उपकृप्तानि स्युः तावन्तो ब्राह्मणा दक्षिणत उपवीतिन उपोत्तिष्ठियुः, अध्वर्योराहुतिमनु जुहुयु"रित्येवं तस्यां वेलायां पात्रैः जुहुयुरिति विशेषेण विधीयमानानि पात्राणि कुम्भीभिः होमं निवर्तयन्ति । होमे प्रवृत्ताः कुम्भ्यः कथमपनेष्यन्त इति ? पात्नीवतवद्विधानात् । यथा पूर्वोक्तस्य पात्नीवतस्य "पर्यग्निकृतं पात्नीवतमुत्सृजति" इति तदन्ताङ्गरीतिविधानात विनिवृत्तिरेवं कुम्भीनां निवृत्तिः, विशेषविहितैः पात्रैः इति ॥

**॥ ४ ॥ तत्र शेषाः क्रियेरन् पात्रान्यत्वात् ॥ १ - ३ - १० ॥ ( पू )**

तत्रैव साकंप्रस्थायीये शेषकार्याणि कर्तव्यानि, आहोस्वित् नेति विचार्यते ॥ किं प्राप्तम् ? कर्तव्यानीति । कुतः ? पात्रान्यत्वात् । पात्रान्तरागमात् शेषा[कार्या]र्थं शेषयितुं शक्यत्वात् प्रयोगवचनानुग्रहाच्च कर्तव्यान्येवेति प्राप्ते ब्रूमः—

---

1. शेषकार्याभावज्ञानाय

॥ नापनीतेषु श्रुतत्वात् तद्व्याख्यातम् ॥ १ - ३ - ११ ॥ (सि)

नैवं शेषकार्याणि स्युः । कथं ? अभिक्रमणवेलायामेव "इन्द्रायानुब्रूहि" इत्यपनीतेषु शेषकार्याणि[ येंषु] पात्राणि प्रदानशेषत्वेन श्रूयन्ते । तस्मादपनीतत्वात् शेषकार्याणि[ न ]कर्तव्यानि । तद्व्याख्यातं – **साकं प्रस्थाय्ये स्विष्टकृदिडं च तद्वदिति** ।

॥ ५ ॥ [1]एतेनोपस्तरणं व्याख्यातम् ॥ १ - ३ - १२ ॥

उपस्तरणादि किं कर्तव्यं उत नेति सन्देहे अधिकरणातिदेशोऽयम् एतेनोपस्तरणं व्याख्यातमिति । पूर्वाधिकरणे यावेव पूर्वोत्तरपक्षौ तावेवात्रापि ।

अपेक्षितत्वात् शक्यत्वाच्च कर्तव्यमिति । "सह कुम्भीभिरभिक्रामन्नाहेन्द्रायानुब्रूहि" इत्यपनीतावसरत्वात् न कर्तव्यमिति ।

॥ ६ ॥ सन्ततमुच्येत शब्दसंयोगात् ॥ १ - ३ - १३ ॥

तत्रैवेदम् 'इन्द्रायानुब्रूह्याश्रावयेन्द्रं यज' इति प्रैषत्रयं सन्ततं कर्तव्यं उत यथाकालं कर्तव्यमिति । किं प्राप्तम् ? सन्ततमुच्येत । कुतः? श्रुतिसामर्थ्यात् । "अभिक्रामन्नाह" इति सत्यपि सन्ततत्वे "तिष्ठन् जुहोति" इति स्थानस्य होमाङ्गत्वम्, एवमिहापि सन्ततवचनादभिक्रमणकाल एव कर्तव्यं प्रैषत्रयं यथा "सन्ततां वसोर्धारां जुहोति" इति विप्रकर्षे नोपपद्यते । तस्मात् सन्ततमुच्येत इति प्राप्ते ब्रूमः—

॥ यथाकालं वाऽर्थपृथक्त्वात् ॥ १ - ३ - १४ ॥ (सि)

प्रकृतिवदेते प्रैषा यथाकालमेवोच्चयेरन् । कथम् ? पृथगर्थत्वात् । पृथगर्था ह्येते प्रैषाः । सहविभज्य यथाकालं प्राप्नुवन्ति सन्ततवाक्याच्च लिङ्गं बलवत्तरमिति ।

---

1. This sutra is not found in the Sutra patha text but it is in the Bhasya and Bhaskararaya mentions its contents here.

न च वाक्येन "तिष्ठन्नन्वाह" इतिवदङ्गत्वेन विधानं, काललक्षणत्वात् । लक्षणेति चेत्, न; एवंजातीयकस्य शब्दार्थत्वात् उपलक्षणस्य च कालस्याविवक्षितत्वात् "सन्ततमाह" इति समासवचनं "[तस्यैकशतं] प्रयाजा इज्यन्ते" इतिवत् ॥

॥ ७ ॥ द्विरिज्या पौर्णमास्यास्तयोरुभयोरविशेषेणाभ्यासः श्रूयते तेषामेतमर्धमासं प्रसुतस्सान्नाय्यं इति ॥ (पू)

यथा सान्नाय्यं पौर्णमासे सन्नयेदित्यविशेषेण श्रुतत्वात् उभयोरविशेषेणैव भवति 'अर्धमासं प्रसुत' इति कालस्य कर्मणश्चात्यन्तसंयोगो गम्यते । न च कर्माभ्यासमन्तरेणैव तद्भवति । कर्मणश्चाभ्यासो न कर्मैकदेशस्य । तस्मादुभयोः प्रयोगयोः अभ्यास इति प्राप्तेऽभिधीयते—

॥ उत्तरस्य वा विशेषश्रुतेः ॥ १ - ३ - १६ ॥ (सि)

वाशब्दः पक्षं व्यावर्तयति । उत्तरस्यैव पौर्णमासीप्रयोगस्याभ्यासो न त्वविशेषेण इति । कुतः ? विशेषाम्नानात्, "सोमः खलु वै सान्नाय्यम्" इति । "पौर्णमासे वै देवानां सुतः तेषामेतमर्धमासं प्रसुतः" इति च अभिषवस्य सोमविषयत्वात् सान्नाय्यस्य च सोमसंस्तवादर्धमासं प्रसुत इति सान्नाय्येनैकवाक्यत्वस्य प्रत्यक्षत्वात् । तस्मात् सान्नाय्यस्योत्तरस्य प्रयोगस्याभ्यास इति ॥

सुत्यासम्बन्धेनार्थवादाच्च । "यद्यजते देवैरेव सुत्यां सम्पादयति" इति तावत् दृष्टान्तसिद्धिः । तेनैव न्यायेन तस्याप्युत्तरप्रयोगविषयत्वात् । कृत्वाचिन्तया उत्तराधिकरणप्रवृत्तिः ।

॥ ८ ॥ सन्ततं यजेतात्यन्तसंयोगात् ॥ १ - ३ - १७ ॥ (पू)

"स एतमर्धमासं सधमादं देवैः सोमं पिबति" इति किमर्धमासमभ्यासः उत सकृदेव प्रयोग इति । किं प्राप्तम् । अभ्यास इति । कस्मात् ? अत्यन्तसंयोगात् । अर्धमासमिति अत्यन्त[संयोग]लक्षणा द्वितीया । यथा मासमधीते क्रोशमधीते इति । तेन अर्धमासं प्रयोगं निरन्तरमभ्यस्येत् इति प्राप्ते ब्रूमः—

॥ सकृद्वा नाभ्यासः श्रूयते ॥ १ - ३ - १८ ॥ (सि)

यत्तदेव पौर्णमासद्वितीयः प्रयोगः कर्तव्यः, कर्मविधावभ्यासस्य अश्रवणात्। द्वे पोर्णमास्यौ यजेत द्वे अमावास्ये इति। "आग्नेयोऽष्टाकपालः पूर्वस्यां पौर्णमास्याम् आग्नेयोऽष्टाकपालः पूर्वस्याममावास्यायां आग्नेयोऽष्टाकपालो मैत्रावरुण्या मिक्षोत्तरस्याम्" इति प्रयोगद्वयविधानमेतत्। न त्वभ्यासस्य। अत्यन्तसंयोगलक्षणा द्वितीया सकृदिज्यास्तुत्यर्था। कथमिति। सान्नाय्यं सुत्यासंस्तुतम्। आमिक्षा वपासंस्तुता तन्मध्यपतितेऽर्धमासे सुत्योक्तिः सकृदिज्याप्रशंसार्था। यथा सान्नाय्ये सोमोक्तिरिति। यद्यु वै दाक्षायणयाजी स्यात् अथो पञ्चदशवर्षाणि यजेत, तत्रैव सान्नाय्यं सम्पद्यते या त्रिंशद्याजिनः। द्वे हि पौर्णमास्यौ इति त्रिंशत्संपत्तिं पञ्चदशे ब्रुवन् अभ्यासमेव दर्शयति॥

[अ. ९] तस्य व्रतम् यथा दर्शपूर्णमासयोः गुणविकारो हि[1]॥
॥ १ - ३ - १९ ॥ (पू)

दाक्षायणयज्ञ एवैतदामनन्ति "तस्यैतद्व्रतं नानृतं वदेत् न मांसमश्नीयात् न स्त्रियमुपेयात् नास्य पल्पूलनेन वासः पल्पूलयेयुः एतद्धि देवाः सर्वं न कुर्वन्ति" इति। किं प्राकृतस्यैव व्रतस्य अयं विकारः आहोस्वित् व्रतान्तरम्—इति। किं प्राप्तम्? प्राकृतमेवैतद्व्रतम्। कुतः? प्रत्यभिज्ञानात्, गुणविकाराच्च। यथैव कर्मणो विकारो दाक्षायणयज्ञः तद्व्रतस्य विकारोऽयम्। अथ परिसङ्ख्याया "नास्य पल्पूलनेन वासः पल्पूलयेयुः" इत्येतद्विधित्सयाऽनुवाद इति चेत्, न, वाक्यान्तरत्वात्। तस्मात् तत्र व्रतस्यैव गुणविकार इति प्राप्ते ब्रूमः—

॥ अन्तरालभूतं यथा चातुर्मास्येषु ॥ २० ॥ (सि)

स एतमर्धमासं यज्ञो विततः तस्यैतद्व्रतमित्यर्धमाससन्नियोगशिष्टत्वात् अधिगतमेतद(न)न्तरालशिष्टत्वादन्तरालव्रतं स्यात्, चातुर्मास्यव्रतवत्। अपरपक्षेऽपि "तस्यैतद्व्रतम्" इति तस्य श्रुत्या संस्तुतेः तन्निमित्तं च तद्व्रतम्—इति॥

॥ लिङ्गाच्च ॥ २१ ॥

"ऋतौ भार्यामुपेयात्" इति। यागव्रतेषु तु न विधातव्यं ऋतुकालस्यातिक्रान्तत्वादिति॥

1. Sutrapatha reads गुणात्सिकरणात्

॥ १० ॥ आदिविकल्पो [1]गुणविकाराणाम् ॥ १ - ३ - २२ ॥ (पू)

यावज्जीविकौ दर्शपूर्णमासौ विक्रियेते[1] दर्शपूर्णमासयोः । ते किमादितो विकल्प्यन्ते किं वा प्रतिप्रयोगमिति सन्देहः । किं प्राप्तम् ? आदित इति । प्रकृतेर्यावज्जीविकत्वात् तद्विकाराणामपि यावज्जीविकतैव न्याप्या, प्रकृतिवद्विकार-प्रवृत्तेः । कर्तृकर्मत्वादयुक्तमिति चेन्न, संकल्पस्य कर्म(धर्म)शेषाङ्गस्य च विकारे दृष्टप्रवृत्तित्वात् ।

॥ तन्त्रविकल्पो वा चोदनार्थो यावज्जीविकत्वात् ॥ १ - ३ - २३ ॥ (सि)

तन्त्रविकल्पः प्रयोगविकल्प इत्यर्थः । कुतः ? कर्मणोऽपि विक्रियमाणत्वात् । कर्मशेषाङ्गस्य च विकारे दृष्टप्रवृत्तित्वात् । यावज्जीविकतायाः कर्त्रङ्गोपाधिकत्वात् । तदुक्तम्—" कर्तुर्वा श्रुतिसंयोगात् " इति । कर्मणश्चाप्रवृत्तिरुक्ता कर्मणस्त्व-प्रवृत्तत्वात् ॥ इति । अङ्गीकृतकालविधिषु[2] विकारेषु अर्थात् प्रवृत्तिनिमित्तम् । [3]न च वैकल्पिकेष्वपि साङ्गत्वभेदे दोषः, फलांशे विध्यभावात् । " पञ्चदशवर्षाणि दाक्षा-यणयज्ञयाजी यजेत संवत्सरं वा " इत्यादिषु नियत [4]एवानुष्ठानविकल्पः ॥

॥ ११ ॥ यूपविरोहणनैमित्तिकमुत्तरतत्यर्थं विप्रतिषेधात्
प्रकृतौ ॥ १ - ३ - २४ ॥ (पू)

" असुर्यं वा एतस्मात् वर्णं कृत्वा तेज इन्द्रियं वीर्यं ब्रह्मवर्चसमन्नाद्यं प्रजाः पशवोऽनुक्रामन्ति यस्य यूपो विरोहति ईश्वरः पराभवितोः, त्वाष्ट्रं पशुं साण्डं छागं लोमशं पिङ्गलं बभ्रु बहुरूपमालभेत " इति यूपविरोहणनिमित्तमेवंजातीयकं किं प्रकृतै कर्तव्यम्, उत दीर्घकालेषु विकारेष्विति । किं प्राप्तम् ? उत्तरासु ततिषु दीर्घकालासु विकृतिषु । कुतः ? विप्रतिषेधात् प्रकृतौ विरोहणकालस्य इति प्राप्ते ब्रूमः—

॥ प्रकृतौ कालविप्रतिकर्षात्[5] ॥ १ -३- २५ ॥ (सि)

---

1. A. R. क्रियेते
2. A कालावधिषु
3. A प्रवृत्ति निवृत्तिवचन वैक
4. A मया
5. Sutrapatha reads प्रकृतौ वा कालविकल्पात्

निमित्तसंभवात् प्रयोगवचनानुग्रहाच्च प्रकृतावेव कर्मेति । कथं ? विरोहण-कालस्याविप्रतिषेधात् । "दीक्षासु यूपं छिनत्ति" इति छेदनकालस्य विप्रकृष्टत्वात् अनुच्छ्रितेष्वपि वृक्षेषु विरोहणस्य सं[भवात्] । ननु संस्कारवाचित्वाद्यूपशब्दस्य अनुच्छ्रिते यूपत्वाभाव[1] इति । [यथा]संस्कारैकदेशयुक्तेऽपि पालाशे यूपशब्दप्रयोगः, एवं छेदनादिसंस्कारैः युक्तेऽनुच्छ्रितेऽपि पालाशे यूपशब्दो भविष्यति । न चावस्था-विशेषमूरीकृत्य एतद्विगीयते सामान्येन तत्वात् तस्मात् प्रकृत्यर्थमिति ॥

**॥ १२ ॥ तमपरमन्ववसाय यजेतेति समीपवादो यथा नदीमन्ववस्यतीति ॥ १-३-२६ ॥ (पू)**

अग्नौ श्रूयते "यदीष्ट्या यदि पशुना यदि सोमेन यजेत । यत्रैवास्य पूर्वो अग्निश्चितः स्यात्तमपरमन्ववसाय यजेत" इति । किं सामीप्यवादः अहोस्वित् द्रव्योपदेश इति । यदा द्रव्योपदेशः तदा किं अविशेषेणेष्टिपशुसोमानां उत इष्टिपशुबन्धयोः, किं वा गुणान्तरविधित्सयाऽर्थवाद इति । किं प्राप्तम् ? सामीप्यवाद इति । कथम् ? शब्दस्य तत्स्व[त्स]रूपत्वात् । यथा नदीमन्ववसितो ग्रामः इति नदीसामीप्यं गम्यते तद्वत् । तं अपरमन्ववसायेति ॥

**॥ द्रव्योपदेशो वा कर्मार्थत्वात् द्रव्याणाम् ॥ १-३-२७ ॥ (पू)**

पुराणाग्निद्रव्यस्येष्ट्यादिशेषत्वेनोपदेशः स्यात् । कुतः ? कर्मार्थद्रव्यस्य शब्दगम्यनियोगबलेनानेकत्रापि व्याप्रियमाणस्य न निरिष्टिकत्वमाहवनीयवत् । तदर्थो-त्पत्तेरपि पुरोडाशकपालादेः नियोगात् तुषोपवापादिशेषत्वोपपत्तेः । किं च यत्रैवास्य पूर्वोऽग्निश्चितः स्यादिति चयनप्रदेशो लक्ष्येत । द्रव्यविधौ श्रुतिः । श्रुतिश्च लक्षणातो ज्यायसी । ननु सामीप्यवादोऽपि यत्रैवास्य पूर्वोऽग्निश्चितः स्यात् तं अपरमिति यत्तदोर्नित्यसंबन्धात् । श्रुत्यैव प्रदेशोपलक्षणमिति । उच्यते । यत्रैवाग्निः चितः स्यात्तं अपरमिति आनन्तर्यलक्षणश्रुतिः इतरथा व्यवहितकल्पना । तस्माद्द्रव्योपदेश इति । "नदीमन्ववसिता सेना" इति सामर्थ्यात् तथैवोपलक्षणं, उदकेऽवस्थानासंभवात् । शुष्कायां तु कदाचिन्मध्येऽपि संभवात् श्रुतिरेवेति । श्लिष्टश्च कारकाणां सामर्थ्यापेक्षो विनियोगः यथा कांस्यकटासने भोज्य-भोक्तृधारणे ।

---

1. त्वाहव

॥ लिङ्गाच्च ॥ (१-३-२८)

लिङ्गादप्येतद्गम्यते द्रव्योपदेश इति । गृहान्वा एष कुरुते योऽग्निं चिनुते यद्वाऽन्यत्र विन्दति गृहांस्तदाहरति यदि पशुना यदि सोमेन यजेत तद्यथान्यत्र वित्तान्याहरत्येवं तदिति पुराणाग्नेः गृहसंस्तुतिरिष्टयादीनां च भार्यसंस्तुतिः द्रव्योपदेश एवोपपद्यते । तस्मात् द्रव्योपदेशः ॥

मध्ये चिन्ता । द्रव्योपदेशश्चेदविशेषेण इष्टिपशुसोमानां, यदीष्ट्या यदि सोमेनेत्यविशेषात् सर्वेषामिति प्राप्ते ब्रूम :—

सोमे प्रतिषेधः तस्य द्रव्योपदेशात्[1] ॥ (१ - ३ - २९) ॥ (पू)

"तदेकविंशतिलोकं पृणा उत्तरवेद्यां उपनिधाय" इति गुणान्तरोपनिधान-विवक्षया सोमे प्रतिषेधः पुराणद्रव्यस्येति । सोम एव प्रतिषेधादिष्टिपशुबन्धयोः स तथैव क्रियेतेति । "पुनर्वास्तु वा एतत्क्रियते पुनर्वा एतत्प्रयान्ति यत्रैवाग्निचित् सोमेन यजेत" इति नैव पुराणाग्निद्रव्यस्य सोमेऽत्यन्तप्रतिषेधः, वैरूप्यात् । इष्टि-पशुबन्धयोः विधिः सोमे प्रतिषेध इति स्याच्चेत् (प्रतिषेधो) विकल्पः स्यात् । तस्मात् तत्रैव पुराणद्रव्ये पुनस्संस्कारविधानं एकविंशतिर्लोकं पृणा उत्तरवेद्यां निधायेति यत्रैवाग्निचित्सोमेन यजेत तदेता इति संबन्धात् । तस्मात् तत्रैवायं गुणविधिः एकवाक्यत्वादिति ॥

॥ [2]सर्वप्रतिषेधो वा विशेषात् ॥ १ - ३ - ३० ॥

द्रव्योपदेशार्था सोमश्रुतिः ॥ १ - ३ - ३१ ॥ (सि)

सर्वत्रेष्ट्यदौ "पुनर्वास्तु वा एतत्क्रियते" इति नित्यार्थवादः सोमे उत्तरवेद्यामिष्टकानिधानगुणविधानार्थः । तस्मात्सर्वेषां यत्र कचनानुष्ठाने प्राप्तेऽग्नि-चितोऽपि यत्र कचनानुष्ठाने इष्टकानिधानं गुणो विधीयते तदर्था सोमश्रुतिरिति ।

॥ १३ ॥ साग्निचित्यानां वादः प्रकरणात् ॥ १ - ३ - ३२ ॥ (पू)

तदेता एकविंशतिर्लोकंपृणा उत्तरवेद्यामुपनिधाय यजेतेति साग्निचित्येष्वेवैत-द्गुणविधानमुत अग्निचितः केवलसोमयाग इति । किं प्राप्तम् ? साग्निचित्येषु

---

1. Sutrapatha reads प्रतिषेधस्य द्रव्योपदेशात्
2. Sutra patha omits सर्व

गुणविधानमिति । कुतः ? प्रकरणात् साग्निचित्येष्वेव क्रतुषु गुणविधानमिदम् । तस्मात्तेष्वेवेति प्राप्ते ब्रूमः—

॥ अनग्निचित्यानां वा यथा विश्वजिति ॥ १ - ३ - ३३ ॥ ( सि )

अग्निचितः केवले सोमप्रयोगे विधानमेतत् । कथम् ? व्यपदेशात् । "अग्निचित्सोमेन" इति व्यपदेशात् अनग्निके सोमप्रयोगे विधानं गम्यते । अन्यथा अग्निं चित्वेत्येवोच्येत । यथा विश्वजिति सर्वपृष्ठे ग्रहीतव्या अप्यग्निष्टोमे ग्रहीतव्या इति विश्वजिदग्निष्टोम इत्यर्थः । यथा विश्वजिदग्निष्टोमयोः व्यपदेशभेदात् अन्यत्वं तथेहापीति ॥

॥ लिङ्गाच्च ॥ १ - ३ - ३४ ॥

लिङ्गं च भवत्यनग्निः सोम इति । "प्रवा एषोऽस्माल्लोकाच्चयवते योऽग्निं चिनुते न वा एतस्यानिष्टका आहुतिरवकल्पते, यां वा एषोऽनिष्टकां आहुतिं जुहोति स्रवति वै सा, तां स्रवन्तीं यज्ञोऽनु पराभवति यज्ञं यजमानो यत्पुनश्चितिं चिनुत आहुतीनां प्रतिष्ठित्यै" इति । तस्मात् साग्निचित्यो नावकल्पते, साग्निचित्याहुतीनां सेष्टकत्वात् । अतोऽग्निचिता केवलसोमयागे गुणविधिरिति । अप्रस्रवणा[1]या चितिः तत्रैतन्निरूपितम् । या पुनः समृद्ध्यर्था सा पुराणाग्नावन्यत्र वा । तत्रैतद्वचनं योऽस्याग्निः पुराचितः तस्य परमवधाय यजेतेति । पुनस्तत्रापि निन्दावचनं "तं श्रेयांसं विषाक्तं बोधयिष्यति" इति च । निन्दार्थवादात् पुराणाग्निचितो विकल्पेन समृध्यर्थापि प्रथमं चित्वा पुनरन्वेतीति नित्यवदपि पुनश्चिदात्मा । ता एतास्तिस्रः पुनश्चितयो व्याख्याताः ॥

(१६) [2]सोमे दर्शपूर्णमासप्रकृतीनां बर्हिर्न विद्यते सौमिकं स्तीर्णं भवति प्रसङ्गस्तद्व्याख्यातम् ॥ १ - ३ - ३५ ॥ (सि)

कृतायां महावेद्यां स्तीर्णे बर्हिषि तानि कर्माणि क्रियन्ते । तेषु सौमिकमेव बर्हिः प्रसज्यते । तद्व्याख्यातम् । तन्त्रमध्यविधानाद्वेदे ।

---

1. R. आप्रवणा
2. Sutrapatha reads this sutra after सोमे प्रतिषेधस्य and again after लिङ्गाच्च

॥ उक्तं तु स्तीर्णस्योपरि तद्वचनात् ॥ १ - ३ - ३६ ॥

'यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य' इत्यातिथ्योपसदग्नीषोमीयानां बर्हिस्साधारण्यमुक्तम्। तदेव सौमिकस्य बर्हिषः स्तीर्णस्योपरि स्तीर्यते। वचनात् 'उत्तरं बर्हिषः' "उत्तरं बर्हिः स्तृणाहि" इति। एवमेतेन सूत्रद्वयेन प्राप्ते चिन्त्यते—

॥ १६ ॥ प्लाक्षं सवनीयानां यथा शेषे यथा चतुरवत्ते ॥ १ - ३ - ३७॥ (पू)

अग्नीषोमीयपशावाम्नायते — "प्लाक्षमुत्तरं बर्हिर्भवति समेधस्यैव पशोरवद्यति" इति। प्लाक्षमुत्तरं बर्हिः किं सवनीयानां पशूनामुत अग्नीषोमीयस्य इति। सवनीयानां पशूनां प्लाक्षमुत्तरवेदिः स्यात्। कुतः? स्तरणार्थेनातिथ्याबर्हिषा उपसदग्नीषोमीयस्योपकृतत्वात्। नन्ववान्तरप्रकरणात् प्लाक्षमपि स्यात्। ततश्च विकल्प इति। न; अग्नीषोमीयस्येति संबन्धश्रुतेः बलीयस्त्वात्। [प्लक्षम]संभवन्निवेशं अग्नीषोमीये, सवनीयमानन्तर्यात् पशुयागत्वाचालम्बत इति। यथा [जामदग्न्यप्रयोगे] पञ्चावत्तावरुद्धे निवेष्टुमशक्यं चतुरवत्तं सावकाशत्वादन्यत्र निविशते, एवमन्यत्रापीति। उत्तरशब्दार्थश्च "बर्हिस्तृणाहि" इति सौमिकस्य बर्हिषः उपस्तरणार्थतयाऽवकल्पते। तस्मात्सवनीयार्थमिति प्राप्ते ब्रूमः,—

॥ अवदानस्तरणार्थं श्रूयते ॥ १ - ३ - ३८॥ (सि)

समाने विषये बाध्यबाधकभावः नचेहैकविषयता, अर्थान्तरयोगात्। कथं? तस्मिन्नवद्यतीति अवदानार्थं प्लाक्षं विधीयते। स्तरणार्थं विशेषविहितमग्नीषोमीये तेन भिन्नार्थत्वात् अग्नीषोमीयेऽपि अवदानसंभवात् तत्रैव निवेशः प्लाक्षस्य इति। पञ्चावत्तचतुरवत्तयोः समानविषयत्वात् पञ्चावत्तेन चतुरवत्तं सावकाशत्वादन्यत्र नीयत इति ॥

॥ १७ ॥ पशुपुरोडाशार्थमानन्तर्यात् ॥ १ - ३ - ३९ ॥ (पू)

सवनीयस्य पशोः क्रमे समाम्नायते। "अग्नीदग्नीन् विहर, बर्हिस्तृणीहि पुरोडाशमलङ्कुरु, पशुनोदेहि" इति। "बर्हिस्तृणीहि" इति किं प्रातस्सवनसाधनस्य पशोः पुरोडाशानां च बर्हिरेतत्, उत पुरोडाशानाम्, उत सौमिकस्य बर्हिषो वाद इति। किं प्राप्तम्? [पुरोडाशार्थं]पश्वर्थं च। कथं? साकाङ्क्षस्य विशेषार्थिनो बर्हिषस्सन्निहितविशेषसंबन्धो वाक्यानन्तर्यात् उभयार्थमिति प्राप्ते ब्रूमः—

॥ पुरोडाशार्थं वा यथोत्तरयोरेकशब्देन विधीयते ॥ १ - ३ - ४० ॥ (सि)

वेति पक्षव्यावृत्तिः। प्रातस्सवने पुरोडाशानामेव बर्हिः स्यात् असन्दिग्धेन सन्दिग्धस्य निर्णयोपपत्तेः। असन्दिग्धमुत्तरयोः सवनयोः पुरोडाशार्थं बर्हिः। एवं प्रातस्सवनेऽपीति। कथमिति चेत्, तुल्यशब्दत्वात् 'बर्हिस्तृणीहि' इति। शब्दैक्याचार्थैक्यं न्याय्यम् इति।

॥ [1]अनुपृष्ठ्यं बर्हिस्तृणीहि इति सन्ततस्य वादो न ह्यन्यत्प्रत्यक्षं विद्यते ॥ १ - ३ - ४१ ॥ (सि)

ऐष्टिकेषु प्रत्यक्षबर्हिषोऽभावात् सौमिकस्य पृष्ठ्यबर्हिषः[2] स्तरणार्थः प्रैषः। एवं विहितैकवाक्यत्वं प्रकरणानुग्रहश्चेति।

"यथा भागं व्यावर्तेथाम्" "पूषा वां विभजतु वायुर्वां विभजतु भगो वां विभजतु दैवो विभजतु जनयत्यै त्वा विभजतु जनयत्यै त्वा जुष्टामिति जनयते विभजामि" इति विभागमन्त्राः समाम्नाताः एकार्थत्वाद्विकल्पेरन्। तद्व्याख्यातं "मन्त्राणां सन्निपातित्वात् एकार्थानां विकल्पः स्यात्"[3]। "अविशिष्टा विकल्पार्थाः" इति च। एवं स्थिते चिन्त्यते—

॥ १८ ॥ यथाभागं व्यावर्तेथाम् इति देवतावादः[2] तयोर्भागौ भवतः ॥ १ - ३ - ४२ ॥

"यथा भागं व्यावर्तेथाम्" इति किं देवताभिधान[मुत]पिण्डाभिधान]मिति। किं प्राप्तम्? देवताभिधानम्। निर्वापात् प्रभृति सङ्कल्पानुवृत्तेः भागिन्यौ देवते। तदभिधाने भागसंबन्धो यथा—"यथागृहं व्यावर्तेथाम्" इति। तस्माद्देवताभिधानमिति प्राप्ते—

॥ पिण्डवादो वा कर्मार्थत्वान्मन्त्राणाम् ॥ १ - ३ - ४३ ॥

वेति पक्षः परावर्तते। पिण्डाभिधानम्, कथम्? कर्मार्थत्वान्मन्त्राणाम्।

---

1. सन्ततंपृष्ठ्यं बर्हिःस्तृणाहि इति R
2. A & R read विकारः instead of वाद
3. पू. मी. १२-३-२९

कर्मान्तरङ्गाभिधाने सति न बहिरङ्गाभिधानम् । पिण्डौ प्रत्यासन्नौ कर्मणः । गृहादिषु प्रविभक्तां गां निवर्तते मन्त्रः(?) ॥

**॥ १९ ॥ एतेन विभागलिङ्गा व्याख्याताः ॥ १ - ३ - ४४ ॥ (पू)**

"इदमग्नेः । इदमग्नीषोमयोः" इति क्रमे तौ विभागमन्त्रौ उत नेति । किं प्राप्तम् ? विभागलिङ्गत्वात् विभागमन्त्राविति प्राप्ते उच्यते—

**॥ विभक्तयोर्वा देवतोपदेशः तल्लिङ्गत्वाच्छब्दस्य ॥ १ - ३ - ४५ ॥ (सि)**

नैतौ विभागार्थौ । विभक्तयोर्देवतोपलक्षणार्थौ । कथमिव ? तल्लिङ्गत्वाच्छब्दस्य । "इदमग्नेः" इति वृत्तदेवतासंबन्धो निर्देशः । तथा च लिङ्गम् । "तत्संयुत्य द्वैधं कृत्वा यतः पुनः संस[र्गः]स्यात् तदभिमृशेत् इदमग्नेः, इदमग्नीषोमयोः" इति ॥

**॥ २० ॥ अग्नये त्वाग्नीषोमाभ्यामित्येतेन व्याख्यातम् ॥ १ - ३ - ४६ ॥**

किमेतावपि विभागार्थौ उत नेति। पूर्वाधिकरणे यौ पूर्वोत्तरौ पक्षौ तावत्रापि।

**॥ २२ ॥ पुरोडाशगणे व्यावर्तेथामित्येकैकं पिण्डमपच्छिन्द्यात् ॥ १ - ३ - ४७ ॥ (पू)**

किं पुरोडाशगणे 'व्यावर्तेथां' इत्यविकारेण मन्त्रः प्रयोक्तव्यः आहोस्विदूहेनेति संशयः । किं प्राप्तम् ? अविकारेणेति । कुतः ? द्वावेव पिण्डौ (पश्चाल्लोपश्च) महान्तौ प्रकाशनीयौ । आर्षचोदनानुग्रहाच्च अविकृत एव प्रयोक्तव्यः इत्येवं प्राप्ते ब्रूमः—

**॥ व्यावर्तध्वमिति वाऽर्थपृथक्त्वात् तदूहेन व्याख्यातम् ॥ १ - ३ - ४८ ॥ (सि)**

"व्यावर्तध्वम्" इत्येव प्रयोगः । यद्यपि [ द्वौ ] पिण्डौ तथापि बहूनि हवींषि । अतो हविर्भेदे पृथक्त्वात् । तेषां च परस्परव्यावृत्तेरभिधेयत्वात् अभिधानचोदकस्य बलीयस्त्वात् ऊहेन 'यथाभागं व्यावर्तध्वं' इति । तच्च व्याख्यातम् **तथोत्तरस्यां ततौ तत्प्रकृतित्वात्** ( पू. मी 10-4-14 ) इति ।

॥ २३ ॥ [1]उत्तमयोः यथासमाम्नानं अविप्रतिषेधात् ॥ १-३-४९ ॥ (सि)

उत्तमयोः पिण्डयोः किं बहुवचनान्त एव प्रयोक्तव्यः उत द्विवचनान्त एवेति । किमुक्तम् ? ऊहेनेति । बहूनां हविषां परस्परव्यावृत्तेरभिधेयत्वात् इति प्राप्ते ब्रूमः— उभयोर्हविषोः यथाभागं व्यावर्तेथामिति यथासमाम्नानं प्रयुज्येत तद्द्वित्वस्याविप्रतिषेधात् । पूर्वापेक्षया बहुवचनमिति चेन्न ॥ एतेषां व्यावृत्तत्वादिति ॥

॥ २४ ॥ सर्वत्र देवतागमः ॥ १ - ३ - ५० ॥ (पू)

पुरोडाशगणविभक्तानां सर्वेषां पिण्डानां देवतोपलक्षणं कर्तव्यं, उत उत्तमयोरेवेति । किं प्राप्तम् ? प्रतिपिण्डं देवतोपलक्षणं यथा पिण्डविभागः । एवं प्राप्ते उच्यते—

॥ उत्तमयोर्वा सन्देहात् व्यवच्छेदेनेतरे विज्ञायन्ते ॥
॥ १ - ३ - ५१ ॥ (सि)

उत्तमयोरेव पिण्डयोः देवतोपलक्षणं स्यात् । युगपदवच्छिन्नयोः व्यामोहः स्यात् कस्यै देवतायै कतरः पिण्डः इति । यत्र पुनः बहुभ्यो हविर्भ्यः एकैकः पिण्डो व्यावर्त्यः तत्र पाठक्रमादेव देवतावधारणमिति सिद्धायां देवतास्मृतौ निवर्तते मन्त्र इति ॥

॥ २५ ॥ चरुपुरोडाशीयाः प्रागधिवापनात्[2] विभज्येरन्
तत्र विभागमन्त्रो निवर्तते, अन्यकालत्वात् ॥
१ - ३ - ५२ ॥ (पू)

इह चरुपुरोडाश उदाहरणम् । तत्र धर्मविप्रतिषेधात् प्रागधिवापनात् चरुपुरोडाशद्रव्यविभागः, तत्र द्रव्यविभागमन्त्रः कर्तव्य उत नेति चिन्त्यते । अन्यकालत्वात् साकंप्रस्थायीये अवदानादिवन्न प्रयोक्तव्यो विभागमन्त्रः इति ।

॥ विद्यते वा हविर्विभागार्थः तानि विभज्यन्ते यथान्यकालाः
॥ प्रयाजाः ॥ १ - ३ - ५३ ॥ ( सि)

---

1. Sutrapatha reads यथा समाविप्रतिषेधात् ।
2. S धीवपनात्

वेति पक्षव्यावृत्तिः । विद्यते विभागमन्त्रः हविर्विभागार्थत्वात् । विभज्यन्ते च तानि हवींषि । न च कालेन मन्त्रस्य संबन्धः । अर्थादभ्यवकर्षेऽङ्गापकर्षस्य न्याय्यत्वात् अवदानादिषु स्वरूपानिरास एवेति अन्यकालोऽपि विभागो विभाग एवेति यथा पशावन्यकाला अपि प्रयाजा एवेति ॥

॥ २६ ॥ एकान्ते चरवस्तथा पुरोडाशास्तद्धर्माविप्रतिषेधात्
॥ १-३-५४ ॥ (सि)

तस्मिन्नेव चरुपुरोडशगणे व्यतिषक्ते किमेकैकशो विभागः कर्तव्यः आहोस्वित् द्वावेव राशी इति । एकश्चरूणां एकश्च पुरोडाशानां द्वावेव राशी तण्डुलानां कर्तव्यौ इति । कुतः ? धर्माविप्रतिषेधात् । चरूणां धर्मो विप्रतिषिध्यते, न पुरोडाशानामिति ।

व्यतिषक्तेषु पूर्ववदवच्छेदः क्रमसंयोगात् ॥ १–३–५५ ॥ (सि)

एकः क्रमोऽनुगृह्यत इति ।

युगपद्वाऽविप्रतिषेधात् ॥ १–३–५६ ॥ (सि)

तन्त्रभावे क्रमविपर्यासो न विद्यते हविषां संस्कारेषु युगपदेव द्वौ राशी कर्तव्यौ इति ।

॥ २७ ॥ इदममुष्य चामुष्य च देहीत्येकैकमुपलक्षयेत् साधारणत्वात् द्रव्यस्य यथेदममुष्मै चामुष्मै च देहीति ॥ १–३–५७ ॥

अव्यतिषक्ते चरुपुरोडाशगणे तण्डुलविभागे देवतोपलक्षणं कर्तव्यमुत नेति विचार्यते । अनध्यवसानाभावान्न कर्तव्यमिति प्राप्ते ब्रूमः—

एतासां देवतानां अयं राशिरिति साधारणत्वात् द्रव्यस्योपलक्षणम् यथा लोके चामुष्मै चामुष्मै च देहि इत्युक्ते समुच्चित्य दीयते । एवमिहापि देवता समुच्चित्योपलक्षणीया इति ॥

॥ २८ ॥ एतेन व्यतिषक्तेषु देवतोपलक्षणं व्याख्यातम् ॥ १-३-५८ ॥

व्यतिषक्तेषु चरुपुरोडाशेषु कृते तण्डुलविभागे देवतोपलक्षणं कर्तव्यमुत नेति चिन्त्यते । "एतेन व्यतिषक्तेष्वपि देवतोपलक्षणं व्याख्यातम्" इत्यधि-

करणातिदेशोऽयम् । पूर्वस्मिन्नधिकरणे यौ पूर्वापरपक्षौ तावेवात्रापीति । क्रमानुग्रहादनुपलक्षणमिति पूर्वः पक्षः । तन्त्रत्वात् क्रमाभाव इति सिद्धान्तः । (प्रतिषेधात्) ।

**॥ ३० ॥ सर्वपृष्ठायां नाना हवींषि प्रदाने विभज्यन्ते तत्र विभागमन्त्रः क्रियते यथा चरुपुरोडाशेषु ॥ १–३–५९ ॥**

सर्वपृष्ठायां विभागमन्त्रः प्रयोक्तव्य आहोस्वित् नेति विचार्यते । किं युक्तम्? पुरोडाशैकत्वे सत्यपि प्रदानकाले हविर्विभागात् सति च विभागेऽङ्गानपायात् प्रयोक्तव्यो मन्त्रः यथा चरुपुरोडाशेषु ।

**॥ न हविर्विभागार्थः प्रदानं पुनरेतत्क्रियते ॥ ६० ॥**

न हविर्विभागार्थो मन्त्रः । नात्र हवींषि विभज्यन्ते । अविभक्तान्येव प्रतिदैवतं प्रदीयन्ते । अत्राङ्गाभावान्मन्त्रो निवर्तत इति ॥

**॥ इति संकर्षकाण्डे देवस्वामिभाष्ये प्रथमस्याध्यायस्य तृतीयः पादः ॥**

———

## ॥ अथ चतुर्थः पादः ॥

**॥ १ ॥ कर्मचोदना वाजिनस्य यथाऽऽमिक्षायागः ॥ १ - ४ - १ ॥**

यथा आमिक्षायागः एवं वाजिनयागः कर्मान्तरमित्युक्तम् ।

"गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् " ॥ ( पू. मी २ - २ - ९ )

इति । किञ्च

**॥ अप्रयोजकं वाजिनम् , यथा फलीकरणहोमः ॥ १ - ४ - २ ॥**

इति । तदुक्तम्—

॥ संसर्गरसनिष्पत्तेः आमिक्षा वा प्रधानं स्यात् ॥ ( पू. मी. ४ - १ - ९ )

इति ।

एवमिदं सूत्रद्वयं स्थितानुवादमात्रम् । अत्रेदानीं चिन्त्यते ।

**॥ १ ॥ वाजिनेनावसिञ्चेत् इत्यन्यदागमयेद्वाजिभ्यः तदनुपदिष्टम्**
**॥ १ - ४ - ३ ॥ (पू)**

चातुर्मास्येष्वाम्नायते "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति । यदि पुनश्चतुर्थ्योप[पनीतं वाजिन]मन्यत्र विनियुज्यते हविषो मात्रापचयः स्यात् । न च शेषापचयः स्यात् । न च शेषादिडामितिवद्वाचनिको विनियोगः, शेषशब्द[दा]प्रयोगात् । तस्मादुपसेचनस्य[1] प्रयोजकत्वात् अन्यदागमयेदिति प्राप्ते ब्रूमः—

**॥ उत्पन्नाधिकारो वा वाजिनस्य प्रकृतं प्रविभज्यते**
**यथा ध्रौवम् ॥ १ - ४ - ४ ॥ ( सि )**

यथा ध्रौवं परार्थमुत्पन्नं सत् , वाजिनं वा वाजिभिः संबध्यते । नोत्पत्तौ तस्य देवतासंबन्धः, यथा आग्नेयः स्यात् । तदर्थोत्पत्त्या प्रयुक्तोत्पत्तिश्च, वाजिना-

---

1. वाजिनेनोपसिञ्चतीति विहितस्य उपसेचनस्य

सन्निधानात्। यथावचनं विभज्यते, यथा ध्रौवमाज्यमुत्पत्तौ विशेषसंबन्धाभावात्। अर्थकर्मणि च सति प्रतिपत्तेरयुक्तत्वात् प्रतिपत्त्यपेक्षस्य च प्रतिपादनात्। तस्मात् प्रकृतमेव वाजिनमुपसेचनेऽप्युपादेयमिति ॥

**॥ २ ॥ आमिक्षायां स्विष्टकृन्न विद्यते वाजिनस्याम्नानात् [1]प्रत्यामनेत् यथा त्र्यङ्गाणीति ॥ १ - ४ - ५ ॥ ( पू )**

आमिक्षायागे स्विष्टकृत् कर्तव्यो नेति विचार्यते। किं प्राप्तम्? न कर्तव्य इति। कुतः? वाजिनस्याम्नानात्। वाजिनस्यानुवषट्कारः स्विष्टकृत्त्वेनाम्नातः प्रकरणात् प्रधानद्रव्यप्रतिपत्तिरूपत्वाच्च आमिक्षा स्विष्टकृतं प्रत्यामनेत्[2] यथाऽनिज्याशेषाणि त्र्यङ्गाणि हृदयादिस्विष्टकृतमिति प्राप्ते ब्रूमः—

**नानाकर्मणी भवतस्तद्व्याख्यातम् ॥ १ - ४ - ६ ॥ ( सि )**

न, देवताशेषः त्र्यङ्गाणि। तत्र सामान्यं(न)विद्यते। आमिक्षावाजिनयागयोर्नानात्वमुक्तम् "गुणश्चापूर्वसंयोगे:" (२ - २ - ९) इति। योऽसौ त्र्यङ्गैः यागः (स्य)सा स्विष्टकृद्रूपत्वात् नान्यस्य क्रिया। अत्र तु वाजिनद्रव्ययागशेषप्रतिपत्तिरूपत्वात् आमिक्षासंबन्धाभावात् वाक्याच्च वाजिनसंबन्धात् आमिक्षायागे चोदकप्राप्तेः कर्तव्य एवेति ॥

**॥ ३ ॥ तस्य वाजिनं निरवदानं यथान्येषाम् हविषाम् ॥ १ - ४ - ७ ॥ (सि)**

वाजिनस्यानुवषट्कारः किं निरवदाय[3] कर्तव्यः उत नेति चिन्त्यते। किं प्राप्तम्? निरवदायेति। (त्रयाणां हविषां स्विष्टकृते न समवद्यति इति)। वाजिनानुवषट्कारः स्विष्टकृच्चेन्निरवदानम्, अन्यत्र स्विष्टकृद्यागे एवं दृष्टत्वात्, अनुशब्दोऽपि पश्चान्निरवदाने घटते।

**॥ अनुवषट्करोति इति अनुर्विप्रकर्षे नोपपद्यते ॥ १ - ४ - ८ ॥ ( सि )**

---

1. Sutra reads प्रत्यामनाद्यथा
2. स्विष्टकृत्कार्यं कुर्यात्
3. स्विष्टकृद्वत् सकृदवदाय . . . . . . . . . . . .

वषट्कारमनु अन्यो वषट्कार इति विप्रकृष्टे नोपपत्तिः। एषः शेषादेवेत्येतत्। प्रकृतौ(ये)स्विष्टकृत् न कृत्स्ननि(रव)बन्धना। एकस्य हविषो युक्तं निरवदानम्। इहैकद्रव्यत्वाच्चावत्तादेव प्रदानमनुवषट्कार इति ॥

लिङ्गाच्च ॥ १-४-९ ॥

"त्रयाणां हविषां स्विष्टकृते न समवद्यति"इति निरवद्यतीत्यर्थः। तस्मादवत्तस्यैव शेषप्रतिपत्तिरिति ॥

॥ ३ ॥ **विशाखत्वं धर्ममात्रं यथा श्लक्ष्णाग्रता ॥ १-४-१० ॥** (पू)

"मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकामः" इत्येतौ पशू प्रकृत्य श्रूयते—" विशाखो यूपो भवति " इति। किं विशाखत्वं धर्ममात्रं उत कार्यार्थं इति। किं प्राप्तम्? धर्ममात्रमिति। यूपस्यैतद्विशाखत्वमुच्यते प्रकृतिप्राप्तस्य। अतो यूपविशेषणत्वाददृष्टार्थत्वं यथा श्लक्ष्णाग्रत्वस्येति प्राप्ते उच्यते—

॥ **नियोजनं वार्थवत्त्वाद्यथा वरुणप्रघासेषु ॥ १–४–११ ॥** (सि)

अर्थपृथक्त्वं कार्यार्थित्वं पशोरप्रागल्भ्यार्थत्वं विशाखत्वं यूपशब्दस्य कार्यार्थित्वात्, यथा वरुणप्रघासेषु विहारपृथक्त्वम् श्लक्ष्णाग्रस्य तु अदृष्टार्थत्वं न्याय्यमेवेति।

॥ लिङ्गाच्च[1] ॥ १-४-१२ ॥

लिङ्गं च भवति " विशाखो यूपो भवति द्वे ह्येते देवते समृद्ध्यै " इति। देवताभेदेन यूपत्वानुग्रहवचनात् कार्यार्थत्वं ज्ञायते। यथा अपरं लिङ्गं—विशाखे यूपे त्रैता आलभ्यन्ते इत्युक्त्वा आह - त्रैतानां प्रथममाश्विनं कामाय मध्यमे विशाखयूपे, त्रैतानामुत्तममजं पृथिव्यै उत्तरे विशाखयूप इति विशाखानां बन्धनार्थे दर्शयति ॥

तासु विशाखासु यूपधर्माः कर्तव्या उत नेति चिन्त्यते। विशाखायां नियोजनाम्नानात् खलेवालीवदयूपत्वात् न कर्तव्या यूपधर्माः इति प्राप्ते ब्रूमः—

॥ ४ ॥ **एतेन यूपकर्म व्याख्यातं तत्संयोगाद्धर्माणाम् ॥ १-४-१३ ॥**

---

1. This sutra is not found in the Sutrapatha.

एतेन पशुबन्धनार्थत्वेन यूपकर्म यूपार्थानां संस्काराणां क्रिया, व्याख्याता। कुतः? तत्संयोगात्। तदन्वयात्तद्धर्माणाम्। तस्माद्द्विशाखासु कर्तव्या एव संस्कारा इति ॥

॥ ५ ॥ **ऊर्ध्वं नाभिदघ्नाद्द्विशाखं यथा तन्त्रं रशना** ॥ १-४-१४ ॥ (पू)

किं नाभिदघ्नादुपरि शाखाभेदः कर्तव्यः आहोस्विदविरुद्ध इति। किं प्राप्तम्? ऊर्ध्वं नाभिदघ्नात् शाखाभेदः स्यात्। कुतः? रशनादिना प्रतिपत्तेरिति। उच्यते—

॥ **अधस्ताद्वा प्रकृत्युपबन्धात्** ॥ १ - ४ - १५ ॥ (सि)

यावता शब्दाविप्रतिषेधः नानायूपता हि प्रकृतेः। अधस्ताद्यावति प्रदेशे शाखाभेदबुद्धिर्नापैति तावति प्रदेशे शाखाभेदः कर्तव्यः। प्रकृत्युपबन्धात् प्रकृति-प्रत्यासत्तेः प्रतिपशु यूपप्रभेदप्रापकश्चोदकोऽनुग्रहीतव्य इत्यर्थः। न चाधस्तात्परि-व्ययणे शाखापरिव्ययणम्। अन्यत्वात्; तस्मान्न तथेति ॥

॥ ६ ॥ **अग्रमध्यशब्दौ सन्नम्येताम्[1] अग्रमध्यपृथक्त्वात्** ॥
॥ १ - ४ - १६ ॥ (सि)

"दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिंसीः" इत्यग्रमध्यशब्दौ किं अविकारेण प्रयोक्तव्यौ आहोस्वित् ऊहेनेति। किं प्राप्तम्? अविकारेण, अनन्वितवचनत्वात्! कथं? दिवो लेखनाभावात् अन्तरिक्षस्य[मध्येन हिंसा-भावादिति] इति प्राप्ते उच्यते—

अग्रमध्यशब्दौ सन्नम्येताम्, अग्रमध्यपृथक्त्वात्।

अग्रमध्यशब्दौ समवेतार्थौ, अग्रमध्यनानार्थत्वात् ऊहेन प्रयोग[2] इति।

॥ ७ ॥ **सहोपरं प्रमाणम्** ॥ १ - ४ - १७ ॥ (पू)

पञ्चारत्निं तस्मै वृश्चेदिति छेदने श्रूयते। यथा पञ्चारत्निं स्थूणां चिन्वीतेति निखातं छिद्यते, एवमिहापि इति।

स्थितं तावदपर्यवसितम्,

---

1. R सन्नह्येताम्  2. सच अग्राभ्यां मध्याभ्यां इति

**यजमानसंमितौदुम्बरी भवतीत्ये-**
**तेन व्याख्यातम् ॥ १ - ४ - १८ ॥ ( पू )**

औ[1]दुम्बर्यपि सनिखातैव सम्मीयेतेति पक्षः । स्थितादुत्तरम् ।

**॥ ऊर्ध्वं वा निखातादर्थे श्रूयते यथा पौरुषः**
**प्राकार इति ॥ १-४-१९ ॥ (सि)**

अत्र दृश्यमानस्य पौरुषता, एवमर्थे नियोजने विनियुक्तस्य प्रमाणं पञ्चारत्नि - रिति । औदुम्बर्यर्थेन सदसो धारणार्थेन गुणभूतानुबन्धेन गुणभूतानुमेयपरीक्षणा विधीयते । यथा पौरुषं प्राकारं कुरुतेति । एवं यजमानसम्मितां सदसः स्थूणां निखातात् ऊर्ध्वं कुर्यात् इति ।

**॥ ९ ॥ नाभिदघ्ने परिव्ययति इत्येतेन**
**व्याख्यातम् ॥ १-४-२० ॥ (सि)**

किं सह निखातेन आहोस्वित् उपरिष्टान्नाभिदघ्न इति । किं प्राप्तम् ? सह मूलेन मध्यदेशो विवक्षितो नाभिशब्देन, यथा पुरुषस्य नाभिर्मध्ये तथान्य[त्रा]पि मूलस्य मध्यदेशो विवक्षित इति । नाभिदघ्ने परिव्यतीत्यूर्ध्वं निखातात् । नाभिदघ्ने यूपं परिवीय इत्यस्मिन् काले निखातस्याप्रकृतत्वात् । निमित्तं हि परिवीयतेः नाभिसंबन्धः पुरुषस्य, न यूपस्य । लक्षितलक्षणा च तथा स्यात् । एकविंशत्य-रत्निप्रभृतिषु च परिमाणेष्वर्थविरोधो भवति । तस्मात् पुरुषाभिप्रायो नाभिदघ्न इति ।

**॥ १० ॥ यजमानेन यूपःसंमित इति विधानात् परिमाणानां**
**यजमानेन सम्मानम् ॥ १-४ २१ ॥ (सि)**

पञ्चारत्न्यादीनि यूपपरिमाणानि किं यजमानसंबन्धीनि ग्राह्याणि आहोस्विद-नियम इति । किं प्राप्तम् ? अनियम इति । लौकिकत्वात् परिमाणानां प्रयोग-प्राशुभावाच्च—इति प्राप्ते ब्रूमः—

---

1. निवृत्तो

यजमानेन स्वारत्निभिः स्वयं मातव्यो यूपः प्रत्यक्षं तच्छेषत्वेन विधानात् औदुम्बरीमानवत् ॥ इति ।

॥ ११ ॥ अध्वर्योः प्रमाणं प्रकरणात् [1]यथा शूर्पेण जुहोति इति ॥ १-४-२२ ॥ (पू)

अग्नौ श्रूयते। "व्याममात्राणि पक्षपुच्छानि भवन्ति" इति। व्यामान्यध्वर्योः ग्राह्याणि आहोस्वित् लौकिकानीति। किं प्राप्तम्? अध्वर्योः ग्राह्याणीति। तस्य कर्मणि प्रवृत्तत्वात्। यथा "शूर्पेण जुहोति" इति प्रकृतेन होमः ॥

॥ यथाकामी वा प्रयुक्तं शूर्पम् ॥ १ - ४ - २३ ॥ (सि)

प्रयुक्तं प्रमाणम् अनियमेन स्यात्, नाध्वर्योः, तत्प्रमाणस्य कर्माङ्गत्वेनाचोदितत्वात्। न चाध्वर्य्वादिसम्मानमौदुम्बरीसम्मानवत् चोदितमस्ति। चोदितं तु शूर्पम् होमे। तस्मादनियतप्रमाणत्वमिति इति ॥

॥ १२ ॥ चतुरो मुष्टीन्निर्वपतीत्येतेन व्याख्यातम् ॥
॥ १ - ४ - २४ ॥ (पू)

किमध्वर्युमुष्टिना निर्वापः कर्तव्यः उत अनियम इति? किं [प्राप्तं]?मुष्टेरपि व्यामादिवल्लोकप्रतीतत्वात् अनियम इति प्राप्ते ब्रूमः—

॥ अध्वर्योर्वा कर्मलक्षणत्वान्मुष्टेः
यथा मुष्टिमादत्स्वेति ॥ १ - ४ - २५ ॥ (सि)

अध्वर्युः स्वमुष्टिना निर्वपेत्। कुतः? निर्वापस्याध्वर्यवत्वात्। मुष्टेश्च कर्माङ्गत्वात्। यथा लोके अमुष्माद्राशेर्मुष्टिमादत्स्वेत्युक्तः स्वमुष्टिनैवादत्ते एवमिहापीति।

॥ १३ ॥ परिवीय वासयतीति वासमात्रं
शब्दसंयोगात् ॥ १-४-२६ ॥ (पू)

---

1. Sutrapatha omits this

"अग्निष्ठे ऐकादशिना रशनाः परिवीय वासयति" इति यूपैकादशिनीं प्रकृत्याम्नायते । किमयं रशनासंस्कारः उत अयमग्निष्ठसंस्कार इति । किं प्राप्तं ? रशनासंस्कार इति । कुतः ? परिवीय वासयतीति वासमात्रं प्रकृतप्रयोजनम्, शब्दसंयोगात्, कालभेदाच्च ।

**अर्थकर्म वा कर्मशब्देन विधीयते यथा परिधौ पशुं नियुञ्जीत इति ॥ १ - ४ - २७ ॥ (सि)**

वाशब्दात् पक्षो विपरिवर्तते, न रशनासंस्कारोऽत्र विधित्सितः । किं तर्हि ? ताभिः परिवीयमाणाग्निष्ठसंस्कारः । प्रकृतौ तथा दृष्टत्वात् "त्रिवृता यूपं परिवीय" इति । सप्तमीश्रवणात् गुणभाव इति चेत , न, लोकवेदयोः प्राधान्येऽपि सप्तमी-श्रवणात् । यथा "अगारे गावो वास्यन्तां" "येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्" इति । परिवीयेति च प्रकृतिलिङ्गसंयोगात प्राकृतं परिव्याणं निवर्तयति यथा "परिधौ पशुं नियुञ्जीत" इति प्रकृति [लिङ्ग] संयोगात् प्राकृतं यूपं निवर्तयति, एवमिहापि स्यात इति । अन्यकालत्वादविरोधात् संस्कारान्तरायोगात् समुच्चय इति ।

स्थितं तावदपर्यवसितम् । अन्तरा चिन्त्यते —

**॥ तासामेकां नाभिदघ्ने परिवीय यथावकाशमितरो विप्रतिषेधात् ॥ १ - ४ - २८ ॥ (पू)**

तस्य विप्रतिषिद्धत्वात् यथावकाशमितर इति प्राप्ते ब्रूम :—

**युगपद्वा विप्रतिषेधात् ॥ १ - ४ २९ ॥ (पू)**

नाभिदघ्नस्य यथा प्रकृतौ विप्रतिषेधः साधारणत्वात , प्रकृतावपि नाभिदघ्न-देशस्याति सूक्ष्मत्वात् तद्देशमन्तर्भाव्य परिव्ययणं कृतं तद्वदग्निष्ठेऽपि तद्देशमन्तर्भाव्य सर्वाभिः युगपदेव परिव्याणं कर्तव्यमिति । स्थितं तावत ॥

**॥ १५ ॥ एतेन ऐकादशिन्यां द्वैरशन्यं व्याख्यातम् ॥**

**॥ १ - ४ - ३० ॥**

पूर्वाधिकरणे यौ पूर्वोत्तरपक्षौ तावत्रापि इति । एकां नाभिदघ्ने परिवीयान्यां-यथावकाशमिति पूर्वःपक्षः देशस्य यत्नासं(भाव्यत्वात्[1]) [ पाद्यत्वात् ] इति एकस्यापि विप्रतिषेधस्य तुल्यत्वात् युगपत् द्वाभ्यामपि परिवीयमाण[व्ययण]मिति सिद्धान्तः ।

स्थितात् तावदुत्तरम् ।

**॥ विशेषेण वाग्निष्ठस्य रशने तयोरुपादानार्थो न विद्यते प्रमोक्षः पुनः युगपद्भावे स्यात् ॥ १ - ४ - ३१ ॥ (सि)**

पृथगेवाग्निष्ठे रशने स्यातां पृथगेकादशरशनाः, कथं ? पक्षयूपरशनानां पुनरादेयत्वात् नाग्निष्ठरशनयोरुपदानार्थो विद्यते । न च पक्षयूपरशनाभिरपि युगपदग्निष्ठस्य परिव्याणं संभवति, यूपादुपादानवेलायां युगपत्प्रमोक्षप्रसङ्गात् । पर्यायेण तासु रशनास्वग्निष्ठाद्यूपादुपादानाभावः[सम्भवः] । श्रूयते च "अग्निष्ठात् द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यामेकैकं यूपं परिव्ययति" इति पृथगुपादानविधानात् पक्षयूपरशनानामपि पृथगेव परिव्याणम् । इतरथा द्वयोरप्युपादानेऽन्यासां प्रमोक्षः स्यात् । तस्मादेकादशकृत्वः अग्निष्ठः परिवीयत इति ।

**॥ १६ ॥ तन्त्रं यूपमन्त्रः यूपाभिधानमभिप्रेतम् ॥ १ - ४ - ३२ ॥ (पू)**

"युवा सुवासाः" इति हौत्रो मन्त्रःभेदेन प्रयोक्तव्य उत तन्त्रमिति सन्देहे कर्मावृत्तेः तद्गुणत्वान्मन्त्रावृत्तिः इति प्राप्ते ।

तत्राग्निष्ठे एकादशकृत्वः परिवीयमाणे क्रियमाणानुवादी हौत्रो मन्त्रः तन्त्रं स्यात्, यूपाभिधानत्वात्, अग्निष्ठस्य च एकत्वात् । समानकालानां परिव्ययणानां क्रियाणामनुवादस्यागृह्यमाणविशेषत्वात् तन्त्रतैव न्याय्येति । आध्वर्यवाणां प्रतिकर्म प्रवृत्तिर्युक्ता करणत्वेन सन्निहितत्वात् इति ।

॥ आद्यस्थितादुत्तरम् ॥

**॥ वासमात्रं चैतत्स्याद्वासयत्यग्निष्ठे इत्यर्थं[1]कर्मणि अनर्थकं स्यात् तासां पुनरादेयत्वात् ॥ १ - ४ - ३३ ॥ (सि)**

---

1. R इयत्ताऽसंभाव्यत्वात्

अग्निष्ठ एकादशरशनाः परिवीय वासयतीति अग्निष्ठो गुणविभक्तिनिर्दिष्टः। रशनाः पुनर्द्वितीयाविभक्तिनिर्देशात् प्रधानभूताः तत्र परिवीय वासयतीति रशनासंस्कारो गम्यते। प्रकृतौ यूपप्रधानो निर्देशः "त्रिवृता यूपं परिवीय" इति द्वितीयानिर्देशात्। तृतीयानिर्देशात् रशनाया गुणत्वमिति।

॥ लिङ्गाच्च ॥ १-८-३४ ॥

"अथ यदग्निष्ठादधि रशना विह्वियन्ते तेन सर्वेऽग्निष्ठा" इति च रशनासंस्कारे स्वयूपं निमित्तं दर्शयति। यत्पुनर्नियोजनवत् इति नियोजनस्यार्थकर्मत्वे प्रकृतिहानिः स्यात्। इह रशनासंस्कारे न प्रकृतिधर्मलोपः, विद्यमानत्वात् प्राकृतस्य परिव्याणस्य। रशनायाः सत्यां गतौ अनेकत्र गुणभावो न युक्तः। न च परिवीयेति शब्दो धर्मग्रहणसमर्थः, गुणविधित्वात्। गुणविधिस्तु न गृह्णीयात् समत्वात् (७-३-१७) इति। तस्मादग्निष्ठरशनासंस्कार इति। न चाग्निष्ठःपक्षयूपरशनां प्रयुङ्क्ते रशनासंकार इत्युक्तत्वादिति।

॥ १७ ॥ ऐकादशिनान् प्रतिषिध्य विधीयते ॥ १-४-३५ ॥ (पू)

"सुवर्गाय वा एष लोकाय चीयते यदग्निर्वज्र एकादशिनी यदग्नावेकादशिनीं मिनुयात् वज्रेणैनं सुवर्गाल्लोकादन्तर्दध्यात् यन्न मिनुयात् स्वरुभिः पशून् व्यर्धयेत् एकयूपं मिनोति नैनं वज्रेण सुवर्गाल्लोकादन्तर्दधाति न स्वरुभिः पशून् व्यर्धयति" इति प्राकृतानेकादशिनो यूपान् प्रतिषिध्यावान्तरमिदं विधीयते। एवं प्रतिषेधोऽर्थवान् भवतीति। एवं प्राप्ते ब्रूमः—

॥ तेषां वैकसङ्ख्याऽप्रतिषेधः श्रूयते यथैकां सामिधेनीमन्वाहेति ॥ १-४-३६ ॥ (सि)

वेति पक्षनिवृत्तिः। इति प्राकृतानामेव एकसङ्ख्याविधानं गम्यते वाक्येन यूपस्य। यथैकां सामिधेनीमन्वाह इति ॥

॥ लिङ्गाच्च ॥ (१-४-३७)

"यन्न मिनुयात्" इत्यनुग्रहं वदन् प्राकृतानामेव सङ्ख्या वैकृतानां दर्शयति,

॥ १८ ॥ तेषां पूर्वेद्युः सम्मानं यथा प्रकृतौ ॥ १-४-३८ ॥ (पू)

ते पूर्वेद्युरेव सम्मातव्या आहोस्विदपरेद्युः सद्य एवेति। किं युक्तम् ? सर्वे यूपाः पूर्वेद्युरेव सम्मातव्याः प्रकृतिवच्चेत् अग्निष्ठेन सहत्वानुग्रहःस्यात्। प्रकृतिवत् पूर्वेद्युरेव सम्मीयेरन् इति प्राप्ते ब्रूमः—

॥ सद्यो वा प्रकृतावर्थलक्षणत्वाद्यथाऽऽज्यस्य पशौ विभागः

॥ १-४-३९ ॥ (सि)

यूपैकादशिनी सद्यः सुत्यायामेव सम्मीयेत अर्थप्रयुक्तत्वात् सम्मानस्य। प्रधानकालत्वाच्चाङ्गानाम्। प्रकृतावर्थवशेनाग्नीषोमीये पूर्वेद्युः सम्मानम्। यथा प्रकृतौ प्रयाजानूयाजार्थे[आज्ये] कर्मवशात् पशौ विभज्यते तद्वदत्रापीति। [अत एव] अग्निष्ठमेतदहरुच्छ्रयेयुः अग्निष्ठे हि तदहरालप्स्यमानो भवतीति अथेतरा(ज्ये यावद्सुत) [अन्येद्युः] इति ते नग्ना इव सुवी इवोत्तिष्ठेयुः इति पूर्वेद्युरुच्छ्रिता अपि प्रधानकालत्वात् संस्काराणां तदभावे "नग्ना इव मुषिता इवोत्तिष्ठेयुः" इत्यग्निष्ठस्यैव पूर्वेद्युरग्निप्रयुक्तमुच्छ्रयणम्।

तेषां पूर्वेद्युः सम्मानमेके अधीयते तदहर्गणे तन्त्रं

स्यात् ॥ (१-४-४०) (सि)

पूर्वेद्युरेकादशिन्याः सम्मानमेकेषामाम्नातम्। अहर्गणे तन्त्रेण कर्तव्यमन्यकालत्वात् नात्र पूर्वपक्षशङ्का। वाक्यार्थ एव सूत्रेण निरूपित इति ॥

॥ १९ ॥ सद्यःसम्मानमभ्यावर्तेतार्थलक्षणत्वाद्यथाहवनीय-

सम्मार्जनम्[1] ॥ १-४-४१ ॥

सुत्याकालमपि सम्मानं भिद्येत यथा प्रधानकालत्वात् आहवनीयसम्मार्जनं प्रतीष्टि क्रियते।

स्थितं तावदपर्यवसितम्।

॥ २ ॥ एतेन सवनीयरशना व्याख्याताः ॥ १-४-४२ ॥

---

1. Sutra सम्मानं

अग्नीषोमीयरशनाया अन्यकालत्वात् , यूपाङ्गत्वात्, यूपस्य च तन्त्रत्वात् रशनापि तन्त्रम् । अन्यकालत्वात् अहर्गणेऽपि तन्त्रम् । सवनीयकाला तु कर्मकालत्वादसाधारणत्वात् सवनीयोपकारकत्वात् कर्मावृत्तौ तदङ्गत्वात् आवर्तेत , एवमग्निष्ठरशने द्वे अपि कर्मकालत्वादावर्तेताम् । एवमेव पक्षयूपरशनाः । तेषां पूर्वेद्युः सम्मानं सद्यः सम्मानमित्येताभ्यां व्याख्यातमिति ॥

॥ तन्त्रं वा साधारणत्वाच्छेदनस्य यथा प्रकृतौ तस्य कालोत्कर्षः ॥ १-४-४३ ॥ (सि)

स्थिताचावदुत्तरम् । वेति पक्षौ व्यावर्तेते । अहर्गणेऽपि सुत्याकालसम्मानादि तन्त्रं स्यात् । कुतः ? प्रकृतौ छेदनादेः सर्वपशुसाधारणत्वात् साधारणत्वम् । अन्यकालत्वाच्छेदनकाल एव संमानादि प्राप्तं सद्वचनात् पशुकालमुत्कृष्यते । तेन तन्त्रमिति प्रकृतावुक्तम् । अत्रापि तत्तथैव प्राप्तं नितरामुत्कृष्यते । तस्मात् सुत्याकालमपि सम्मानं तन्त्रमेवेति । परिव्याणं अग्निष्ठपरिव्याणवदेवान्यकालं सत् छेदनकालिकसम्मानेनैव सहोत्कृष्यते यथा प्रकृतौ । तस्मात् सकलैकादशिनीव्यपायेनैव परिवीयेतेति ।

॥ २१ ॥ अग्रेणाहवनीयं प्राञ्चः सम्मीयेरन् दिक्संयोगात् ॥ १-४-४४ ॥ (सि)

किमेकादशिन्यां यूपरीतिं प्रत्यनियमः, किं प्राची, आहोस्विदुदीचीति ? किं प्राप्तम् ? अनियमः, नियमकारणशास्त्रस्याभावात् इति प्राप्ते ब्रूमः—

प्राञ्चो यूपाः सम्मीयेरन् आहवनीयात् । कुतः ? दिक्संयोगात् । "पुरस्तान्मिनोति" इति दिक्शब्दस्यावध्यपेक्षिणः सन्निहिताहवनीयसंबन्धात् इति ॥

॥ उदञ्चो वा अर्धमन्तर्वेद्यर्धं बहिर्वेदीति विज्ञायते ॥ १ - ४ - ४५ ॥ (सि)

वेति पक्षनिवृत्तिः । उदीची यूपरीतिः कार्या । कुतः ? देशश्रुत्यनुग्रहात् पुरस्तादिति । वेदिदेशापेक्षया सन्निधानात् ।

लिङ्गाच ॥ १ - ४ - ४६ ॥

"या अग्निष्ठस्याश्रयः ता अग्निष्ठाः कार्याः । ते सर्वे अग्निष्ठा" इति । "प्राच्या यूपतो वा अग्निष्ठाश्रयोऽग्निष्ठा भवेयुः" नान्यथेति । "तिरश्चीनं मिनोति वज्रेण वा एतदिमां जयति" इति आहत्य विधानात् दक्षिणादिः यूपरीतिः स्यादिति ।

॥ २२ ॥ तेषामन्तराले यथाकामी न नियमः श्रूयते
॥ १-४-४७ ॥ (पू)

तस्यामेव यूपैकादशिन्यां यूपान्तरालं प्रति चिन्ता, किं नियम उतानियम इति । किं प्राप्तम् ? अनियमः । तेषामन्तराले यथाकामी स्यात् । अर्थेन पशुनियोजनेनानुष्ठाननियमसिद्धेः इति प्राप्ते ब्रूमः :—

॥ इष्टं वचनमेतेषाम् ॥ १ - ४ - ४८ ॥

'स्फ्येन वेदिमुद्धन्ति' 'रथाक्षेण विमिमीते' 'यूपं मिनोति' इति 'रथाक्षमात्रातिरिक्तान्तरालासम्भवात् इष्टं वचनमेतेषाम् "रथाक्षमात्राणि यूपान्तरालानि भवन्ति" इति ॥

॥ २३ ॥ तथा वेदिसंमितां मिनोतीति ॥ १-४-४९ ॥ (पू)

तदेतयोः रथाक्षसम्मानवेदिसम्मानयोः किं विकल्प आहोस्वित् समुच्चय इति । किं प्राप्तम् ? एकार्थत्वाद्विकल्पः अन्तरालावधारणार्थं उभयोः प्रमाणयोरिति प्राप्ते ब्रूमः—

॥ न विकल्पोऽविप्रतिषेधात् ॥ १ - ४ - ५० ॥ (सि)

(अ)विकल्पो भवेदनयोः यदि विप्रतिषेधो भवेत्, न तु विप्रतिषेधः । अर्थतो वेदिविवृद्धिः । यूपोपरपरिमाणं वा । चयनपरिमाणोपादानेन वेदिर्विवर्धनीयेति ।

॥ २४ ॥ यथापूर्वमग्निष्ठदेशमीप्सेयुः मुख्यसाधर्म्यात् ॥ १ - ४ - ५१ ॥

प्रधानानुपूर्व्येण बह्वनां(पशूनां) अग्निष्ठसन्निकर्षः स्यात् । यो योऽभिमुख्यः तेन तेन विशेषेण स्वधर्मं आसक्तव्यः तस्माद्व्यत्यासैर्मीयेरन् ।

॥ लिङ्गाच्च ॥ १ - ४ - ५२ ॥

यदाग्नेयश्च बार्हस्पत्यश्च सौम्यमभितो भवतः इति सौम्यबार्हस्पत्ययोः आनन्तर्यं ब्रुवत् अन्यथाऽमुख्यमग्निष्ठासत्तिं दर्शयति। बलवतीनामैन्द्रग्यादीनां दक्षिणोपक्रमत्वे दक्षिणाधिष्ठानं न स्यात्। तस्मात् विरोधे त्वनपेक्षं स्यात् (पू.मी. 1-3-4) इति बाध्येतैवाचारः।

**॥ "उदगपवर्गा यूपा भवन्ति दक्षिणापर्गाः पशवः" इत्येतेषां पौर्वापर्यविधिः। तेन मन्यामहे द्वावुत्तमौ दक्षिणोत्तरार्धौ मिनुयात् एवं भूयिष्ठा यथासमाम्नानं भवन्ति ॥ १-४-५३ ॥**

आहत्य विधानात् पशूनां दक्षिणापवर्गत्वम्। यूपानामपि तदङ्गत्वात् तथा प्राप्ते उदगपवर्गता विधीयते। सा च यथा[न]क्रमोपरोधस्तथा कल्प्यः। तस्मात् पशुक्रमेण नव मित्वा दशमं दक्षिणार्धे मित्वा उत्तरार्धे मिनुयात्। एवं द्वयोरेव उत्तमयोः क्रमोपरोधः स्यात्, श्रुतिश्चानुग्रहीष्यते इति विज्ञायते। एवं (व) "दशमोऽग्निष्ठं[1] दक्षिणमग्रेऽथ उत्तरास्तथा ह्युदीची भवति। अथापि योऽग्निष्ठ(मु)उत्तरः तदग्रेऽथ यो दक्षिणतः तथा ह्युदीची भवति" इत्येतस्यां दर्शयति। अथापि "योऽग्निष्ठो दक्षिणतस्तदग्रेऽथ यो यो दक्षिणतस्तथा ह्युदीची भवति" इति क्रमेण वाऽनुजिघृक्षन् वदति। तस्मात् सम्यक्प्रयुक्तत्वात् वचनं न्यायोपपन्नं बलीयः। योऽग्निष्ठाद्दक्षिणत इति तु न्यायविरोधादबलीयसा न विकल्पेत। तस्मात्तद्विकृत्यर्थं स्यात्। आचार्यैस्तु वचनकृतत्वादुभयमविशिष्टमिति मत्त्वा विकल्पितमविशेषेणेति।

**॥ २५ ॥ उपरसम्मितां मिनुयात् पितृलोककामस्य, मध्येन सम्मितां रशनसम्मितां च मनुष्यलोककामस्य चषालसम्मिता-मिन्द्रियकामस्येत्यायामतः उपराणि[2] सामान्यानि स्युः तिर्यक्तो मध्यानि रशनाश्च प्रथिम्नश्चषालान्येवमर्थोक्तानि भवन्ति ॥ १-४-५४ ॥**

आयामतश्च उपरस्याश्रीयेत, न हि तिर्यक्त्वं समीकर्तुं शक्यं अतृणमुपरं भवतीत्याह। तस्मात्तिर्यक्त्वसाम्यासंभवात् आयामसाम्यमात्रं स्यात्। मध्यसाम्यं तिर्यग्गतं

1. A अग्निष्ठां
2. अवटान्तर्निखातो यूपाधोभागः उपरः। अतृणं अतक्षितम्।

आश्रीयेत। द्राघीयसो ह्रसीयश्च तावन्मात्रमेव मध्यम्। रशनासाम्यमपि तथा,कृतपरिमाणो हि तस्य आयामस्त्रिव्यायाम इति। पृथुत्वं चषालसाम्यम्। तदपि हि नियतायामम्, पृथु[त्व]मात्रं काम्यमिति। एतदवाच्यवाचको विधिर्भवति। सर्वसाम्ये तु वाच्यमवाच्यं सह विधीयेत ॥

**॥ २६ ॥ तामेतामतिरात्रचरम आलभेतेति व्यत्यस्तपशोर्वादः सन्निधानात् ॥ १-४-५५ ॥ (पू)**

[1]व्यत्यस्तपशून् समाम्नाय "या वा एकादशिनी तामेतां कापेया विदुः" [अत्र] तामेतामिति प्रकृतसर्वनाम्ना व्यत्यस्तपशोरेष वादः। सा च प्रकृता। सा च प्रकृतितोऽपकृष्यातिरात्रचरमे निविशते, श्रुतिसंयोगात्। तस्यायं क्रमः व्यत्यस्तमाग्नेयमथैन्द्रमाहुः। ऐन्द्राग्नं सारस्वतं वैश्वदेवं सौम्यं तथा मारुतं सौर्यं पौष्णं सावित्रं बार्हस्पत्यं वारुणं चेति।

**येयमितरा तामिमां प्रजा आपद्य चरन्तीति प्रसृतपशोर्वादो व्यपदेशात् ॥ १-४-५६ ॥ (सि)**

प्रसृतपशोरेष वादः अनुसन्धेयः। येयमिति सर्वक्रतुषु कर्तव्येत्यर्थः। यामिमां प्रजा आपद्य चरन्ति इति [2]प्रसृतमस्याश्चरन्तीं दर्शयति। तस्मात् व्यत्यस्तपशुविषयादन्यत्र प्रकृतौ यन्निविशते सा वा एषैकादशिनी तामेतां कापेया विदुः। तामेतामतिरात्रचरम आलभेतेत्यभिन्नस्य लिङ्गोपदेशात्। अन्यतरतोऽतिरात्रत्वेन लिङ्गान्नातिरात्रचरम इत्यभिन्न उपदिश्यते। तस्मादभिन्नविषयैव व्यत्यस्तपशुः। सर्वत्र यथाशेषं चतुरवत्तमिति ॥

इति संकर्षकाण्डमीमांसाभाष्ये प्रथमाध्यायस्य चतुर्थः पादः

समाप्तश्चायं यूपपादः ॥

—: × :—

---

1. आग्नेयसारस्वतसौम्यपौष्णबार्हस्पत्यवैश्वदेवैन्द्रमारुतैन्द्राग्नसावित्रवारुणानेकादशपशून् विधाय यामिमां प्रजा आपद्य चरन्ति सा वा एषैकादशिनीत्युक्त्वा ततो व्यत्यस्तपशूनुपक्रम्य आग्नेयमग्निष्ठे अमित ऐन्द्रमैन्द्राग्नं सारस्वतं सावित्रं सौम्यं वैश्वदेवं पौष्णं मारुतं बार्हस्पत्यं वारुणं च विधाय—इति शेषः मा. दी.

2. S' प्रकृत

# द्वितीयाध्यायस्य

## ( मीमांसाक्रमेण चतुर्दशाध्यायस्य )

## प्रथमः पादः ॥

**॥ १ ॥ इष्टकाभिरग्निं चितुत इति मृन्मय्यः स्थण्डिलकर्मणि श्रूयन्ते यथा लोके ॥ २-१-१ ॥** (सि)

अग्नावाम्नायते "इष्टकाभिरग्निं चिनुत" इति। तत्र किमनियमः[1] आहोस्वित् मृन्मय्य एवोपादातव्या इति। तत्सिद्ध्यर्थमिदं निरूप्यते — किमयमिष्टकाशब्दः जातिवचनः[2] किं वा आकृतिवचनः[3] [इति]

किं प्राप्तम्? अनियम इति। कथं? इष्टकाशब्दस्य जातिवचनत्वात्। कथं? द्रव्यं हि भिन्नेष्वभिधानप्रवृत्त्योरभिन्नत्वात् मृन्मयेषु च लौहेषु च[4] कलशेषु कलशाभिधानकार्यप्रत्ययानामविशेषात् कलशत्वव[त् ज्ञायत एवे]ष्टकात्वम्। सौवर्णेष्टका इति सोपपद इष्टकाशब्दोऽन्यत्र प्रयुज्यत इति चेन्न; कलशादौ समानत्वात् लोहकलशः मृन्मयः कुम्भ इति। तस्मादनियमेनेष्टकानामुपादानमिति प्राप्ते ब्रूमः—

इष्टकाभिरग्निं चिनुत इति श्रूयमाणे मृन्मय्य[5] एवोपादातव्याः। कुतः? मृद्द्रव्याकृतिवचनत्वाच्चेष्टकाशब्दस्य। केयमाकृतिर्नाम? इति। उच्यते। जातिलिङ्गाख्या आकृतिः जातिः, तत्र लिङ्गानि चाक्रियन्ते यस्यां सा आकृतिः ॥

यदेवं सा न क्वचिदपि शब्दस्य प्रवृत्तिनिमित्ततां प्रतिपद्यते, सर्वत्र जातेरभिधेयत्वेन मृत्कलशादौ दृष्टत्वात्। दृष्टा च चिलगते देवदत्तादौ इयं व्यक्तिभिन्नत्वेन इत्यनिरुक्तता। प्रतिनियतजात्यभिव्यक्तिहेतुत्वात्। मृद्द्रव्याकृतिवचनत्वाच्चेष्टकाशब्दस्य। लोके निरन्तरं प्रीतिनिमित्तसुवर्णादिद्रव्यगतसंस्थानस्येष्टकाशब्दाभिधेयत्वस्य[ा]विशिष्टत्वात्। न च गौणादिशब्दवदन्यत्र प्रयोगाभावः। तस्माज्जातिपक्षवदा-

---

1. R. कमनीयमाहो
2. R. व च नं
3. R. व चनम्
4. R. लोहेषु
5. R. मृन्मय
2. अत्र यत्तु मूले इत्यादिना भास्कररायेण अयमभिप्रायः खण्डितः।

कृतिपक्षेऽपि सिद्धान्तो दुर्लभ इति । उच्यते । लोके मृण्मयीष्वेव चेष्टकाशब्द-प्रसिद्धिः वैवाहिकीं वेदिं कुर्वित्युक्तो देवदत्तः समृद्धोऽपि मृण्मयीमेव कुरुते ।

**वाक्यशेषाच्च ॥ २-१-२ ॥**

मृण्मय्य एवोपादेयाः "ब्रह्मवादिनो वदन्ति यन्मृच्चापश्चाग्निरनाद्यं अथ कस्मात् मृदा चाद्भिश्चाग्निश्चीयत" इति मृन्मयीनामेवेष्टकानामुपादानं नियमेन दर्शयति । पाकविधेश्च मुख्यत्वसंभवात् । निर्मन्थ्येनेष्टकाः पचतीति मुख्यपाको मृण्मयेष्वेव शक्यत्वात् अदृष्टार्थः कृष्णलेष्विवान्यत्र । अतो मृण्मय्य एवोपादातव्याः । इष्टकाशब्दस्य मृत् प्रकृतिद्रव्याभिव्यङ्ग्यजातिमत्त्वात् तस्यापि भूयोऽवयवसामान्येन शब्दयोगो वर्तते यद्वदिष्टकाशब्दोऽन्यप्रकृतिके ।

कथं पुनः[सुवर्णमये]इष्टकेति ? सादृश्येन शब्दप्रयोगात् । तस्मान्मृण्मय्य एवोपादातव्या इति ।

**॥ २ ॥ अश्रिमत्यः शब्दसंयोगात् ॥ २-१-३ ॥ (सि)**

तेष्वेव सन्देह :—किमनियमसंस्थाना इष्टका भवेयुः आहोस्विदश्रिमत्यः इति । किं प्राप्तम् ? इष्टकाशब्दस्याकृतिवचनत्वात् अनियमसंस्थानाः स्युः । एवं च लाघवं प्रयोगप्राशुभावो भवति इत्येवं प्राप्ते ब्रूमः ।

अश्रिमत्यो भवेयुः । कथं ? अर्थसंयोगात् । नामकार्यसामर्थ्ययोगात् इत्यर्थः । कार्यार्थं चयनम् । अश्रिमत्यः चयनसामर्थ्याः स्युः । कार्यप्रयुक्ता न स्वरूपप्रयुक्ताः । तस्मादश्रिमत्य एव भवेयुरिति । "चतुरश्रा भवन्ति" इति आक्षिप्ते सत्यश्रिमत्त्वे तद्विशेषः चतुरश्रत्वदर्शनमुपपद्यत इति ।

**॥ ३ ॥ समचतुरश्राः शब्दैकसमधिगम्यत्वात् ॥ २-१-४ ॥ (सि)**

समचतुरश्रा भवन्ति इति श्रूयमाणे सन्देहः । किं [अ]नियमेन चतुरश्र-संबन्धिन्यः कर्तव्याः ? उत समचतुरश्रा इति । किं युक्तम् ? अनियमोऽविशेषादिति प्राप्ते ब्रूमः ।

समचतुरश्राः शब्दैकसमधिगम्यत्वात् ।

इति । समचतुरश्रा भवेयुः । कुतः ? शब्दैकत्वात् । एकश्चायं चतुरश्रशब्दः

निरुपपदं प्रयुक्तः समचतुरश्रमेव प्रत्याययति लोके तथा दृष्टत्वादिति । तदुक्तं-समं स्यादश्रुतत्वादिति ।

॥ ४ ॥ अमृन्मयीनामिष्टकाकर्मार्थसंयोगात् ॥ २-१-५ ॥ (पू)

अमृन्मयीनां पशुशीर्षादीनां अन्तराले उपधानार्थाः काश्चिदन्या इष्टका उत्पाद्याः । कुतः ? श्रुत्या चयनार्थता इष्टकानाम् परस्परसंबन्धो यथा, यथा चितः प्रासाद इति । न च पशुशीर्षादिष्वन्तरालवर्तिषु धात्वर्थ उपपद्यते इति । तस्मादन्याः अन्तराळोपधानार्था इष्टका उत्पाद्याः इत्येव प्राप्ते ब्रूमः—

॥ आकृतिनियमाद्वाऽन्तरालानि ॥ २ - १ - ६ ॥ (सि)

यथा चतुरश्रा(वणाचतु)भवन्ति इति आकृतिनियमात् विहितत्वाच्च मृण्मयीनामसामर्थ्यप्राप्तान्यन्तरालानि केन वार्यन्ते ।

यत्तूक्तं धात्वर्थो नोपपद्यते तद्वदत्रापि स्यादिति । लोकेऽपि मृत्पाषाणकाष्ठाद्यन्तरालवत्यपि प्रासादे " चितः प्रासाद " इति धात्वर्थदर्शनादविरोधः । तस्मान्नान्या इष्टकाः कर्तव्या इति ।

॥ ५ ॥ वर्णपृथक्त्वं शब्दसंयोगात् ॥ २ - १ - ७ ॥ (पू)

अत्रावाम्नायते—" सर्वान् वर्णानिष्टकानां कुर्यात् " इति । किं श्वेतादिवर्णाधिकारः आहोस्वित् [रेखा]धिकारः इति संदिह्यते । किं प्राप्तम् ? श्वेताद्यधिकारः । श्वेतपीतादयो वर्णाः इष्टकासु कर्तव्याः । कुतः ? श्रुतिसंयोगात् । वर्णशब्दः श्वेतादीन् श्रुत्या ब्रूयात् । रेखादीन् लक्षणया गमयेत् । श्रुतिर्लक्षणातो ज्यायसी ।

ननु स्वसमवायद्रव्यवर्तिन्योऽन्यत्र न शक्यन्ते कर्तुमिति । संयौगिके नानावर्णः प्रासाद इति प्रयोगदर्शनात् [अ]दोषः । तस्मात् श्वेतादिगुणकद्रव्यसंयोगेनापि श्वेतादिवर्णप्रकारा इष्टकासु कर्तव्या इति प्राप्ते ब्रूमः—

॥ रेखाधिकारो वा प्रकरणात् ॥ २ - १ - ८ ॥ (सि)

वाशब्दात् पक्षो विपरिवर्तते । न श्वेताद्यधिकारः । किं तर्हि ? रेखाधिकारः प्रकरणात् । रेखाणां वाक्ये प्रकृतत्वात् । यो वै यथारूपमग्निं चिनुते यथारूपं प्रजा-

श्चतंवश्च कल्पन्ते या दक्षिणावृतास्ता दक्षिणत उपदध्यात् यास्सर्वावृतास्ता उत्तरतः ऋजुरेखाः पश्चाच्च पुरस्ताच्च, त्र्यालिखितं मध्यत इति प्रकृत्य सर्वान् वर्णानिति सर्वरेखाकृतीरित्यर्थः ।

यत्पुनरिदं लक्षणेति तत् त्वत्पक्षेऽपि नितरां समवेतसंयोगादिति । तस्माद्रेखाधिकार इति सिद्धम् ।

**॥ ६ ॥ तासां पाके यथाकामी यथा लोके ॥ २ - १ - ९ ॥ ( पू )**

किमामाभिः अग्निश्चेतव्यः उत पक्वाभिः उतानियमः उत पक्वाभिरेवेति[1] ।

किं प्राप्तम् ? अनियमेनेति । कथं ? लोके आमादयस्तण्डुला इति तावदनियमेन[2][प्र]युज्यन्ते तद्वदत्रापीति लाघवम् । प्रयोगप्राशुभावश्चैव भवतः[ति] । इष्टकाशब्दोऽप्यनियमेन वर्तते । तस्मादनियम एवेति प्राप्ते ब्रूमः—

**॥ पक्वा वा तद्विशेषविधानात् ॥ २ - १ - १० ॥ ( सि )**

वेति पक्षव्यावृत्तिः । पक्वाभिरेवाग्निश्चेतव्यः । नियम इति कुतः ? पाकविशेषविधानात् "नैर्ऋतीः कृष्णास्तुषपक्वा भवन्ति" इति । सति पाके विशेषविधानमुपपद्यते । अन्यथा पाकविशेषो [ पाकं विशेषं च ] विदधद्वाक्यं भिद्यते । प्रतिषेधार्थवत्त्वाय पक्वानामुपधाने प्रतिषेधोऽर्थवान् भवति । "न कृष्णां न लक्ष्मणां न भिन्नामुपदधाति" इति । नापक्वानां कृष्णत्वं लक्ष्मणत्वं वा संभवति इति ।

**॥ वचनपक्षे वाऽप्रतिषेधः ॥ २ - १ - ११ ॥**

तस्याप्यनियमो यस्मिन् पक्षे पाकं[:]तस्मिन् पक्षे उपपद्यते इत्यवैशेषिको हेतुरिति विज्ञायते । तस्मादमुष्मिन् आम इष्टकापी[ष्य]ते । यदिहामाश्विनीया तदपशुनात्मने चिनुयादन्यदमुष्मिन् इति श्मशानदशमुपदिशति (?) । 'यदिह' इति नामासु पक्वनियम इति ।

**॥ अग्निनेष्टकाः पचतीत्येकेषां वाऽऽहत्यविधिः ॥ २ - १ - १२ ॥**

आहत्यचैकेषां पाको विधीयते । तस्मात्पक्वा एवोपधेया इति ।

---

1. R उपकारोभिवेति
   A उपक्वाभि
2. R दयं नियमेन

॥ ७ ॥ स वैहारिकः प्रकरणात् ॥ २ - १ - १३ ॥ (पू)

स खल्विष्टकापाकः किं वैहारिकेणाग्निना कर्तव्यः आहोस्विदन्येनेति । किं प्राप्तं ? तासां पाके वैहारिकोऽग्निः स्यात् । कुतः ? प्रकरणात् । सहस्तु(?) प्रकृतसन्निधानात् अवैदिककार्याद्व्यावर्तते । द्वादशेष्टकानां तु पाको वैदिके, विधानात् कर्माङ्गत्वाच्च । तस्माद्वैहारिक एव स्यादित्येवं प्राप्ते ब्रूमः—

॥ लौकिकेन वाऽनिर्देशात् ॥ २ - १ - १४ ॥ (सि)

वेति पक्षव्यावृत्तिः । लोके इष्टकाशब्दसंयोगिनो ये धर्माः ते किं हिरण्यकेनः[ लौकिकेन ]पच्येरन् । इष्टकानिर्दिष्टो वैदिकः स्वीका[1]र्यः । वचनमन्तरेणान्ये विनियोक्तुं न शक्यन्ते । तस्माल्लौकिकेन पाकः कर्तव्य इति । 'निर्मन्थ्येनेष्टकाः पच्यन्ते' इत्येकेषां सोन्ववेतविधिः ।

॥ ८ ॥ मृन्मयीनामिष्टकाशब्दः तासामेतन्नामधेयं यथा लोके ॥ २ - १ - १५ ॥ (पू)

इष्टकाशब्दसंयोगिनो ये धर्मास्ते किं हिरण्यादिषु कर्तव्या, नेति सन्देहः । किं प्राप्तं ? न कर्तव्याः । कथं ? इष्टकादेशेन [इष्टकोद्देशेन] विधिना संमार्गवत् ग्रहे । इष्टकाशब्दस्य मृन्मयीष्वेव दृष्टत्वात् । सत्यपि कार्यप्रयुक्तत्वे कृतद्वारसमन्वयात् धर्माणां इति । इतरथा इष्टकाश्रुतिरविवक्षिता स्यात् । तस्मात् हिरण्यादौ (दि)नेष्टकाधर्मा इति प्राप्ते ब्रूमः ।

॥ सर्वेषां वा सर्वगामित्वात् ॥ २ - १ - १६ ॥ (सि.)

कार्यसामान्याच्च[2] सर्वैर्धर्माः कर्तव्याः । सहस्रेष्टकमग्निं चिनुते [इति] सर्वगामिनमिष्टकाशब्दं दर्शयति । चयनासाधनेपि[3] इष्टकाशब्दः कार्यसामान्यात् प्रवर्तते ।

॥ लिङ्गाच्च ॥ २ - १ - १७ ॥

---

1. R वैदिकसौकर्य
2. A omits.
3. A. निकेपि

"घृतेष्टकामुपदधाति", "हिरण्येष्टकामुपदधाति" दूर्वेष्टकामुपदधाति"। "यदिष्टकाया आतृण्णमनूपदध्यात् पशूनां च यजमानस्य च प्राणमपिदध्यात्" [इति ता] स्विष्टकाशब्दं दर्शयति। तस्मादिष्टकाधर्माः अमृन्मयेष्वपि कर्तव्या इति।

॥ ९ ॥ **सिकतासु तयादेवतं सङ्ख्या चाद्रियेत** ॥ २-१-१८ ॥ (पू.)

उत नेति विचार्यते। किं युक्तम्? कर्तव्यमिति। कथं? स्थलसाधनत्वात्। तस्य च साधनत्वं कथमिति चेत्, पूरणार्थत्वात्। यथा पशुशीर्षेषु दूर्वेष्टकासु च तयादेवतं एवं सिकतास्विति प्राप्ते— ब्रूमः

॥ **सिकतासु न सङ्ख्यादि कर्तव्यं विप्रतिषेधात्** ॥ (सि)

सङ्ख्यायमानासु सिकतासु अपरिमितशब्दो विप्रतिषिद्ध्यते। तथा सहस्रेष्टकमग्निं चिन्वीतेति सहस्राद्बहिर्भूताः सिकताश्च। आसु कथं सङ्ख्या स्यादिति।

॥ **चित्यसंयोगाच्च**[1] ॥ २-१-१९ ॥

द्विन्नेत्सु[चित्ये]उपदधाति इति चितिसंयोगेन सिकतासु (तदद्वयमस्ति) 'परिश्रयति' 'पूरयति' इति तदनिर्देशात्[2]। तेन सत्यपीष्टकाशब्दे सिकतासु[न]तयादेवतं नापि सङ्ख्या स्यादिति। इष्टकाशब्दःस्तुत्या सिकतासु[3] यथा चतुर्धाकरणे दक्षिणाशब्द इति।

॥ १० ॥ **चरुसर्वौषधमनिष्टकम्** ॥ २-१-२० ॥ (सि)

चयने श्रूयते—"रौद्रं गावीधुकं चरुं एतेन यजुषा चरमायामिष्टकायां निदध्यात्" इति। तथा "सर्वौषधं(पचति)[वपति]" इति। तत्र किं इष्टकाधर्माः कर्तव्याः नेति सन्देहः। किं प्राप्तम्? स्थलसाधनत्वादिष्टकास्विव चरुसर्वौषधेऽपि कर्तव्या धर्माः इत्येवं प्राप्ते ब्रूमः—चरुसर्वौषधमस्थण्डिलावयवत्वादनिष्टकम्। कथं?

---

1. चिन्त्यसंयोगाच्च. Mss.
2. सिकतासु परिश्रयति पूरयति इत्येवनिर्देशः दृश्यते न तु उपदधातीति—इत्यर्थः
3. R. स्तुत्याधिगतासु

(अ)प्रवृत्ते चरुनिधानं चोद्यते चरमायामिष्टकायाम् ओषधयोऽनारब्धे एव स्थले। तस्मात् कार्यापत्त्यभावात् न कर्तव्या इति।

**॥ ११ ॥ नैर्ऋतेष्टके इष्टकाशब्दविधानात् तयादेवतं स्यात् ॥ २-१-२१ ॥ (पू.)**

"नैर्ऋतीरक्ता उपदधाति[1]" इति। तत्र किं तयादेवतं कर्तव्यं नेति संशये; किं प्राप्तम्? स्यात् तयादेवतम्। उपधानकर्मणः[2] शब्देन विधानात नैर्ऋतीरुपदधातीति। स्थलावयवत्वान्नेति चेन्न; उपदधातीति निर्देशात्। तस्मात् स्यादेव तयादेवतमिति प्राप्ते—ब्रूमः

**॥ न वा स्यान्निधानस्याविवक्षितत्वात् ॥ २-१-२२ ॥ (सि)**

[[3]उखाशिक्य]निधानस्य(।)विवक्षितत्वादित्यर्थः। अथवा इष्टकासंस्कारस्याविवक्षितत्वात्। उभयथा अविवक्षितसमर्थत्वात् गौणउपदधातिः। तस्मात् तत्र [न]धर्माःकर्तव्या इति।

**॥ १२ ॥ साहस्रं चिन्वीत प्रथमं चिन्वान इति क्रत्वधिकारोऽग्निसंयोगात् यथा सहस्रेणेजान इति ॥ २-१-२३ ॥ (पू)**

क्रत्वधिकारोऽयं साहस्रः आहोस्वित् अग्न्यधिकार इति? किं युक्तम्? क्रत्वधिकार इति। प्रथमो(ऽग्नये)[मोऽग्नि]संयुक्तक्रतुः सहस्रदक्षिणत्वेन विवक्ष्यते। शक्यते च क्रतुः सहस्रदक्षिणश्चिनोतिना गुणशब्देनाभिधातुं यथा "एक एव यजेत सहस्रेणेजान" इति।

**॥ अग्न्यधिकारो वा चयनसंयोगात् यथा जानुदघ्नं चिन्वीत प्रथमं चिन्वान इति ॥ २-१-२४ ॥ (सि)**

अग्निरेव सहस्रेणाधिक्रियेत। मन्त्रे चयनप्रत्ययेन सहस्रवान् साहस्र इति चिनोतीति चास्मत्पक्षे श्रुत्या चयनमाह। त्वत्पक्षे लक्षणया। श्रुतिर्लक्षणातो ज्यायसी।

---

1. आ. श्रौ. 16-15
   सत्या. श्रौ. 11-6-5
2. R. कर्मणा
3. स्वा. शिष्य

जानुदघ्नं चिन्वीत प्रथमं चिन्वान इत्यसन्दिग्धोऽग्न्यधिकारः। तेन शब्दसामान्यात् अग्निविषयत्वेन नियम्यत इति। यदुक्तं सहस्रेणेजान इति क्रत्वधिकार इति। अत्र चिनोतीति धात्वश्रवणाददोष इति।

॥ १३ ॥ दक्षिणाभिः साहस्रः यथा क्रतवः ॥ २ - १ - २५ ॥ (पू)

साहस्रं चिन्वीत प्रथमं चिन्वान इति दक्षिणाभिःसाहस्रत्वमुतेष्टकाभिः इति सन्देहः।

किं प्राप्तम्? यथा क्रतोर्गुणोऽग्निः तद्वत् दक्षिणाद्वारेणेति प्राप्ते ब्रूमः—

इष्टकाभिर्वा द्रव्यसन्निधानात् यथा साहस्रः प्रासाद इति ॥ २ - १ - २६ ॥ (सि)

सहिताभिरिष्टकाभिः साहस्रत्वं चितेः तदतिक्रमे कारणाभावात्। अवयवनिमित्तस्य[1]च समुदायशब्दस्य च प्रवृत्तिदर्शनात्। यथा सहस्रस्तंभः प्रासादः साहस्र इति। अन्तरङ्गेष्टकाभिरिति कारकश्रुत्या उपनीतद्रव्यसंबन्धः। तस्मादिष्टकाभिः साहस्रत्वमिति।

॥ १४ ॥ साहस्रे शब्दसंयोगात् ॥ २ १ - २७ ॥ (पू)

'सहस्रस्य प्रमा असि[2]'। अयं मन्त्रः किं साहस्र एव चितौ प्रयोक्तव्यः। आहोस्विदविशेषेणेति सन्दिह्यते। किं प्राप्तं? सहस्रपक्ष एवेति। कुतः? लिङ्गात्। सहस्रशब्दो न [द्वि]साहस्रं शक्नोति प्रत्याययितुम्। प्रकरणादविशेषेण विनियोगः। लिङ्गात् साहस्रपक्षे। लिङ्गं च प्रकरणात् बलीय इति प्राप्ते—ब्रूमः

॥ सर्वेषु वा समरिहाणात् (?) श्रूयते यथा शतार्धः पुरुष इति ॥ २ - १ - २८ ॥ (सि)

वेति पक्षव्यावृत्तिः। सर्वचितिषु प्रयोक्तव्यो मन्त्रः सं(म)रिहणाश्रवणात्(?) सहस्रशब्दो गौणवृत्त्या सर्वचितिषु सहस्रसम्मित इत्ये[व]मिति। शतेन तुल्यः शतार्धः पुरुषः इतिवत् स्तावकत्वेनोपपद्यत एवेति।

अपि चोपपद्यमाने चापेक्षितत्वे न पाक्षिकत्वं कल्प्यम्।

---

1. Ś. अत एव निमित्तस्य
2. सत्या-श्रौ ॥ १२-३-१ ॥

**॥ १५ ॥ सहस्रेष्टकमग्निं चिन्वीतेति लोकंपृणा मन्त्रपरिमाणान्नाना मन्त्राः उभयस्य साहस्राः तदेतस्मात् [वि]प्रतिषिद्धम् ॥ २ - १ - २९ ॥ (पू)**

किं लोकं पृणानामेवेष्टकानां साहस्रं आहोवित् नानामन्त्राणाम् ? किं प्राप्तम् ? लोकंपृणामन्त्रोपधेया एव साहस्रं भवेयुः नानामन्त्रास्तु उभयस्य सहस्रं तासां सङ्ख्याने सहस्रमिति विप्रतिषिद्धम् । तस्माल्लोकंपृणा एव साहस्रमिति प्राप्ते ब्रूमः—

**॥ सर्वेषां वाऽग्निद्रव्याणां परिमाणाविशेषात् तत्र वचनाच्छेषो यथा चतुर्दशभिर्वपतीति ॥ २ - १ - ३० ॥ (सि)**

अनिमित्तकात्स्न्र्येन समुदायप्रतीतेः सर्वेषां वेष्टकानां गुणविभक्तिनिर्दिष्टानां संबन्धं प्रत्यविशेषात् संख्या(भि)विवृद्ध्यर्थः प्रायेण वाचनिको विनियोगः प्रयोगान्तरार्थो भविष्यति । यथा चतुर्दशभिर्वपतीति वचनात् शेषं प्रयोगान्तरे उपयोक्ष्यत इति ।

**॥ १६ ॥ इष्टकाविवृद्धौ तद्व्याख्यातम् ॥ २ - १ - ३१ ॥ (पू)**

इष्टकाविवृद्धौ किं प्रकृतानामेव मन्त्राणां अभ्यासो यावदिष्टकं उत प्रकृता उपधाय अवशिष्टा लोकंपृणा भवेयुः इति सन्दिह्यते । किं प्राप्तम् ? प्रक्रान्तानामेवाभ्यास इति । प्रकरणात् । तदुक्तं तृतीये **तदाख्यो वा प्रकरणोपपत्तिभ्यां** — इति । एतद्व्याख्यातम् । अभ्यासमित्यर्थः ।

**॥ समशः प्रतिविभज्य पूर्वैः पूर्वाणि कुर्यात् उत्तरैरुत्तराणीति लोकं पृणाया अयातयामश्रुतेः ॥ २ - १ - ३२ ॥ (सि)**

लोकंपृणयैवावशिष्टा इष्टका उपधातव्याः कथं ? अयातयामत्वश्रुतेः । "ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्यातयाम्नीरन्या इष्टकाः अयातयाम्नी लोकं पृणा" इति अन्यासामिष्टकानां यातयामत्वात् । अयातयामत्वं च लोकंपृणाया एवमुपपद्यते यद्यविशिष्टाः तया उपधीयेरन्निति । लिङ्गमिदं का प्राप्तिरिति ? वचनसामर्थ्यात्— "लोकं पृण च्छिद्रं पृणेत्याह । यदेवास्या ऊनं यच्छिद्रं, तदेतया पूरयति । यदेवास्योनं यच्छिद्रं वा तदनया पूर्यत" इत्यभ्यसनीयत्वमेव प्रतीयते । यदेवेष्टकामिष्टका-

साहस्रेऽपि प्रतिचिति लोकंपृणा नियता । "इष्टकां इष्टकां" इति चितौ बहुत्वमस्या दर्शयति । तस्माल्लोकंपृणया अवशिष्टा उपधेया इति ।

**॥ १७ ॥ चितिशब्दः प्रस्तारे यथा लोके ॥ २-१-३३ ॥ (पू)**

पञ्चचितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति इत्यत्र चितिशब्दः किं प्रस्तारे वर्तते उत कर्मणीति संशयः । किं प्राप्तम् ? प्रस्तारे, कुतः ? प्रसिद्धत्वात् । प्रासादादौ प्रस्तारमेकं निर्वर्त्य स्थपतयो वक्तारो भवन्ति अस्माभिरेका चितिर्निर्वर्तितेति । शब्दार्थप्रतिपत्तौ लौकिकप्रयोगो ह्युपाय इत्युक्तम् ।

**॥ लिङ्गाच्च ॥ २-१-३४ ॥**

लिङ्गं च प्रस्तारे चितिशब्दं दर्शयति "नाकसत्सु पञ्चचोडा अभ्युपधीयन्त" इति अभ्युपधानं दर्शयति । प्रस्तारे चितापदेशः । "पुष्कर[पर्ण]मुपदधाति" इति पुष्करपर्णं रुक्मं पुरुषं स्वयमातृण्णामित्यप्युपधानं प्राप्तं वाचनिकम् । कर्मणि चितावर्थप्राप्तत्वेन अविधेयत्वाच्च वचनमेवंजातीयकमनर्थकं स्यात् । तस्मादपि प्रस्तारे चितिशब्द इति प्राप्ते—ब्रूम :

**॥ पुरीषव्यवायाद्वा चितिपृथक्त्वं कर्मणि विभागात्**
**॥ २-१-३५ ॥ (सि)**

एकप्रस्तारे[एव]अनेकप्रस्तारेण पुरीषेण व्यवहिते इष्टकासञ्चिते चितिशब्दो वर्तते-इष्टकाभिरग्निं चिनुत इति । एकमेवैतत्कर्म प्रतीयेत यदि पञ्चचितयो भवन्तीति न श्रूयते सङ्ख्यया: प्रविभागः । [न]च पुरीषव्यवधाने पृथक्त्वं; कर्मविभागादेव पञ्चचितिशब्दस्य कर्मावयववृत्तौ न शक्त्यन्तरकल्पनया(मकारा?)प्रस्तारे वर्तितु-मुत्सहते । तस्मात् कर्मैकदेशे चितिशब्दो न प्रस्तारे । स्वयमातृण्णां च विकर्णीं चोत्तमे उपदधाति (तै. सं 3. 7. 1) इत्युक्त्वा आह—नान्यामुत्तरामिष्टकामुप-दध्यात् । यदन्यामुत्तरामिष्टकामुपदध्यात पशूनां च यजमानस्य च प्राणं चायुश्चापि-दध्यात इति ।

[1]उत्तमे उपदधातीत्येव उत्तमस्यान्ते उपधाने सिद्धे अर्थवादार्थोऽयं प्राप्त-

---

1. Mss add here देशाख्या सा पञ्च चोडा नाम एतेन व्याख्यातम्—मन्त्रा संबद्धम्

प्रतिषेधः स त्वन्यत्राप्युपधानं पश्यन् प्रसक्तः, यथा "बहु वै गार्हपत्यस्यान्ते मिश्रमिव चर्यते" इत्यधर्ममिश्रादौ पश्यन्नर्थवादः प्रसक्तः आग्नीपावमानीस्तुत्यर्थः। तस्मात कर्मैकदेशे चितिशब्दः। सति च व्यवधाने पञ्चस····नादेशे नियमाभ्यामवधानं नाकसत्त्वेति नार्थः(?) । तथा पुष्करपर्णादीनामन्यथाप्युपधानात् सह विधाने वाक्यभेदः स्यात । तस्मात् पुरीषव्यवायाच्चितित्वमिति ।

॥ १८ ॥ गणेषु रीतिवादो यथा लोके प्राच ओदनान्निधेहीति
॥ २-१-३६ ॥ (सि)

'प्राचीरुपदधाति' 'प्रतीचीरुपदधाति' इति किमयं कर्तुर्मुखवादः, किं वा रीतिवाद इति ?

किं युक्तम् ? दिक्शब्दात् प्रवृत्तेरात्मावधिकत्वात प्रपञ्चं[प्रत्यञ्चं]प्रचरन्तीति मुखवाद इति प्राप्ते ब्रूमः —

इष्टकागणेष्वेवंजातीयकेषु रीतिवादो भवेत्। [1]इष्टकाभिसंबन्धिन्याः न मुखम्। तस्मात् सामानाधिकरण्यात् प्राचीरिष्टका इति । यथा प्राच ओदनान् निधेहीति प्रागपवर्गरीतिरोदनानामाद्रियते[2] तथेहापीति ।

॥ लिङ्गाच्च ॥ २-१-३७ ॥

प्रतीचोऽनूयाजान् यजति इत्युक्त्वा आह — "प्राञ्चमुत्तमं संस्थापयति उत्तमेनेतरावनुसंभिनत्ति" इति प्राचा सन्तिष्ठमानेन अन्तिमेन तयोरनुसम्भेदं ब्रुवन् प्रत्यगपवर्गा आहुतिरिति दर्शयति ।

॥ १९ ॥ पश्चात्प्राचीमुत्तमामुपदधाति इति त्वेकत्वान्मुखवादः
॥ २-१-३८ ॥

किमयं रीतिवादः उत मुखवादः इति सन्देहे पूर्वाधिकरणेन रीतिवाद इति प्राप्ते ब्रूमः—

---

1. इष्टकाभिरसंबन्धिन्यो
2. R आमन्त्र्यते

एकत्वादिष्टकादेरन्यभावार्थकर्तुः मुखवादः। प्राङ्मुखेन कर्त्रा इष्टका प्राचीमुखत्वात् साक्षात् तन्मुखासंभवात् कर्तुरेव मुखवाद इति ।

॥ वाक्यशेषाच्च ॥ २ - १ - ३९ ॥

तस्मात्पश्चात्प्राची पत्न्यन्वास्ते इति वाक्यशेषे पश्चात्प्राङ्मुखत्वमनुवदन् कर्तुर्मुखवादं दर्शयति ॥

॥ २० ॥ प्राञ्चमिति कर्तुर्मुखवादःशेषत्वात् ॥ २ - १ - ४० ॥ (सि)

[ कूर्मोपधानं प्रकृत्य ] प्राञ्चमुपदधाति पुरस्तात्प्रत्यञ्चमुपदधातीति श्रूयते । तत्र संशयः । किमयमपि कूर्ममुखवादः उत कर्तुरिति । किं प्राप्तं ? पूर्वाधिकरणे कूर्मस्यैव मुखवादेऽपि कूर्मः कर्ता वा प्राङ्मुखः प्रत्यङ्मुखो वेति प्राप्ते ब्रूमः —

कर्तुर्मुखत एष प्राञ्चमुपदधातीति । कुतः ? शेषत्वात् । एवमुपधानशेषत्वमुभयोः विधानयोः कूर्मकर्तृद्वारेण व्यवस्था । समासे शश्वत् विकल्पात् बलीयस्त्वम् (?) ।

॥ २१ ॥ पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः प्राचीरित्यपवर्गवादो व्यपदेशात् ॥ २ - १ - ४१ ॥ (सि)

किमयं कर्तुर्मुखवादः आहोस्वित् रीतिवाद इति । कर्तुर्मुखवादः, सन्निधानादिति प्राप्ते—ब्रूमः, नायं मुखवादः बहुत्वादिष्टकानाम् । नापि सर्वासामिष्टकानां नक्षत्रेष्टकानामेकरीत्यभिप्रायेण वादः । तथासति विकल्पः स्यात्-प्राचीर्वा प्रतीचीर्वेति । स चान्याय्यः । अन्या(य) इति व्यपदेशो नावकल्पते । व्यपवृत्तानामविच्छिन्नानां दक्षिणोत्तरविभागेन रीतिवादः दक्षिणोत्तरविभागव्यपदेशात् । वाक्यशेषे च नक्षत्रसंस्थान(के)मिष्टकानां श्रूयते "तस्मात्प्राचीनानि च प्रतीचीनानि च नक्षत्राण्यावर्तन्त" इति । नक्षत्रमण्डलेनेष्टकाविन्यासस्तु प्राचीनप्रतीचीनापवर्गतां दर्शयति ।

॥ २२ ॥ चित्यां चित्यां ऋषभमुपदधातीति पशुशब्दः श्रूयते ॥ २ - १ - ४२ ॥ (पू)

'वृषभमुपदधाति' इति श्रुतौ सन्देहः पशुरुपधातव्यः आहोस्विदिष्टकेति । श्रुतेः पशुरुपधातव्य इति प्राप्ते ब्रूमः—

॥ इष्टका वा मन्त्रवर्णेन द्रव्यसन्निधानात् यथा सृष्टीरुपद-
धातीति ॥ २ - १ - ४३ ॥ (सि)

वेति पक्षव्यावृत्तिः । इष्टकैवोपधातव्या, कुतः, ? सन्निधानात् 'त्वामग्ने वृषभं' इति मन्त्रवर्णेन सन्निहिता इष्टका, तदतिक्रमे प्रमाणाभावात्, श्रुतिरिति चेन्न, चित्यां चित्यामुपधीयमाने जानुदघ्नमेव न तदा संभवति । तस्मात् सृष्टीरितिवत् लक्षणया वृषभमन्त्रवतीष्टकैवोपधातव्येति ।

॥ २३ ॥ एतेन मन्त्रलिङ्गा व्याख्यातव्याः ॥ २ - १ - ४४ ॥ (सि)

प्राणभृत उपदधातीत्याद्या किं प्राणभृतां जीववतामुपधानं उत प्राणभृतां मन्त्राणामिति सन्देहः । किं प्राप्तं ? पूर्वाधिकरणे यौ पूर्वोत्तरपक्षौ तावत्रापीति तदाह—एतेन मन्त्रलिङ्गा व्याख्याताः । इत्यधिकरणातिदेशनियमार्थ इति ।

॥ २४ ॥ तद्द्रव्याणि गुणसंयोगाद्यथा पुष्करपर्णमुप-
दधातीति ॥ २ - १ - ४५ ॥ (सि)

"घृतेष्टका उपदधाति" इत्यादि । किं मृन्मयीरेवेष्टका घृतादिमन्त्रलिङ्गा उपधेयाः, किं वा घृतादीन्येव द्रव्याण्युपधातव्यानीति सन्देहः । किं युक्तम् ? घृतादिमन्त्रलिङ्गा ग्राह्या इति । कथं ? अर्थसंयोगात् । धाधात्वर्थसंयोगात् । चिनोतीति मृन्मयीषूपधीयमानासु धात्वर्थो घटते—यथा प्राणभृत उपदधातीति अर्थसंयोगादिति ।

कथं पुनः घृतादिशब्द इष्टकासु वर्तेत इति ? कार्ययोगात् । यथा शरेषु बर्हिश्शब्द इति प्राप्ते —ब्रूमः । तद्द्रव्याणि गुणसंयोगाद्यथा पुष्करपर्णमुपदधातीति ।

घृतादीन्येव द्रव्याण्युपधेयानि । कस्मात् ? गुणसंयोगात् । श्रुत्या घृतादिभिरिष्टकासंयोगो गम्यते यथा अयःपात्रमिति । अयसां पात्रं न वृत्तिः । न च श्रुत्यर्थो ग्राह्यः । न चात्र वृषभादिवत् विघटादीन्येवोपधेयानीति ।

॥ २५ ॥ विकर्णीं पञ्चचोडां मण्डलेष्टकामित्याकृतिनियमः
शब्दसंयोगात् ॥ २ - १ - ४६ ॥ (पू)

'विकर्णीमुपदधाति' 'पञ्च चोडा उपदधाति' 'मण्डलेष्टका उपदधाति' इति श्रूयमाणे सन्देहः— किमेतदाकृतिकाः इष्टकाः कर्तव्याः आहोस्विच्चतुरश्राणामेवैतानि नामधेयानीति । किं प्राप्तम् ? इष्टकाः कर्तव्याः शब्दसंयोगात् । अवयवप्रसिद्धेः समासार्थे च प्रतीयमानत्वात्—मण्डलाकारा इष्टका मण्डलेष्टकेति । यथा लोके परिमण्डलायामः एवमिष्टकासु इति प्राप्ते ब्रूमः—

**न वा चयनार्थत्वात् ॥ २ - १ - ४७ ॥ (सि)**

न चैतदाकृतिनियमः चतुरश्राणामेवैतानि नामानि । चयनार्थत्वात । चयनार्थं चतुरश्रा उत्पाद्यन्ते । न चैते पुष्करपर्णादिद्रव्येणोपानीयन्ते । यदि पुनरिष्टकाः सन्तो[1]ऽनियताकृतय उपादीयेरन् चयनार्थो व्याहन्येत । तस्माच्च चतुरश्रा एव भवेयुरिति ।

**॥ २६ ॥ मध्यमायामुपसद्यग्निश्चीयेत प्रकृत्युपसंबन्धात् (अ)प्राकृते यथा समाम्नानं तत् प्राकृतवैकृतैर्व्याख्यातम् ॥ २-१-४८ ॥ (सि)**

किं चयनादधोऽनुवेदि ते धर्माः कर्तव्या, नेति विचार्यते । किं प्राप्तम् ? कर्तव्याः कार्यान्तरयोगात् । समुच्चयादग्नेरुत्तरवेद्याश्च । तस्मादग्नेरुत्तरवेदिधर्माः कर्तव्या इति प्राप्ते ब्रूमः—

मध्यमायामुपसद्यग्निश्चीयेत; यथा मध्यमायामुपसद्युत्तरवेदिः प्रकृतौ कृता तथा मध्यमायामुपसद्यग्निरपि चीयेत प्रकृत्युपबन्धात् चोदकप्राप्तेः, इत्युत्तरवेदेः प्राकृते प्राकृतकार्यापन्ने यथासमाम्नानं धर्माः कार्यापन्ने भवितुमर्हन्ति ( उत्तरवेदिधर्मार्थिस्सन् ) एतदन्यैः प्राकृतवैकृतैर्व्याख्यातम् । अप्राकृते सासदश्ये प्राकृतकार्यापत्त्या प्राकृताः पाञ्चदश्या धर्माः; यथाऽप्राकृतेषु प्राकृतकार्यापन्नेषु कुशधर्माः तथा उत्तरवेद्या समुच्चीयमानेऽपि चयने उत्तरवेदिकार्यापन्ने उत्तरवेदिधर्माः भवेयुः ।

**॥ २७ ॥ अनुपसदमग्निश्चीयत इति [2]एकेषामाहत्यविधिः ॥ २ - १ - ४९ ॥ (सि)**

---

1. इष्टकासन्ते A. R.  2. S. एकेषां सोन्ववेत्यविधिः

आहत्यविधानादनुपसदमेवाग्निश्चेयः स्यात् क्रमवान् सप्रयोगश्च विज्ञायते । यदहरग्निं चेष्यमाणः तदहरुभयं समस्येत् (प्रचक्रामेरपचितिपुतेति) यदहरग्निं चेष्यमाण इति दीक्षानन्तरायामुपसदि अग्निचयनं दर्शयति ; कथं तदुभयं समस्येदिति दीक्षाणां च ऊर्ध्वं प्रकृष्टक्रमसंबन्धादिति[1] ।

॥ २८ ॥ इष्टकाकर्मणि याथा[2]काम्यं प्रतीयेत ॥ २ - १ - ५० ॥ (पू)

इष्टकाकर्म किं नियतकालमाहोस्वित् अनियतकालमिति सन्दिह्यते । किं प्राप्तम् ? अनियतकालं इष्टकाकर्मेति । अनाम्नानात विशेषतः । प्रकृतितश्चाप्राप्तत्वात् अनियतकालमेवेति । ब्रूमः—

॥ [नवा]दीक्षितस्योख्यभस्म[संसर्गात्] ॥ २ - १ - ५१ ॥ (सि)

नवेति पक्षनिवृत्तिः । नैतदस्ति अनियतकालमिष्टकाकर्मेति । किञ्च दीक्षोत्तरकालं दीक्षितस्यैवोख्यभस्मनः संभवात् । "इष्टकासु भस्म स्पृश्यते तेन सर्वा अग्नयो[3] भवन्ति" इत्युख्यभस्मनो मृदश्च संसर्गो विधीयते तत्सामर्थ्यात् दीक्षोत्तरकालमिष्टकाकर्मेति निश्चीयते ।

॥ २९ ॥ तन्मासप्रभृतिदीक्षाकल्पेष्विति बादरायणो
॥ मन्यते स्म ॥ २ - १ - ५२ ॥ (पू)

तस्मात् संसर्गविधानसामर्थ्यात् मासप्रभृतिष्वेव दीक्षाकल्पेषु अविप्रतिषेधात् तद्विषयदीक्षासंभवात् । दीक्षितस्येतरेषु विप्रतिषेधात् । इतरेषु दीक्षाकल्पेषु विप्रतिषेधात् । (दीक्षितस्यैव)तेषु प्रत्यासन्नेषु दीक्षाकल्पेषु दीक्षितस्य सतो यजमानस्य । प्रारब्धं चेष्टकाकर्म न(य)[तत्]कार्यसमर्थं स्यात् ।

॥ प्रतिषेधाच्च ॥ २ - १ - ५३ ॥ (सि)

'न प्राजापत्येनानिष्ट्वेष्टकाः कारयेत्' इत्यदीक्षितस्य[4] इष्टकाकर्मणि सति प्रतिषेधार्थवत्त्वात् । भवति च । तस्माद्दीक्षाकल्पापेक्षः कालविभाग इति ।

---

1. R. प्रक्रमसंबन्धात्
2. R. यथाकामं
3. S. आग्नेयाः
4. R. अन्यदीक्षितस्य

॥ ३० ॥ त्रिःपरार्ध्योऽग्नेराहारः ॥ २-१-५४ ॥ (पू)

"जानुदघ्नं चिन्वीत प्रथमं चिन्वानः नाभिदघ्नं द्वितीयं आस्यदघ्नं तृतीयं" इति किं त्रिव्याहार[1]प्रमाणमाश्रित्य चतुर्थाद्याहारा न कर्तव्याः, उत[प्रथमा]-यामिव भूयोऽप्युपवसितव्या इति ।

किं प्राप्तम् ? त्रिः परार्ध्योऽग्नेराहार. त्रीन्वारानाहृत्य न चतुर्थोऽग्निश्चेतव्यः । कथं ? अनाम्नानात् 'साहस्रं चिन्वीत प्रथमं चिन्वानः द्विसाहस्रं द्वितीयं त्रिषाहस्रं तृतीयं' इति "जानुदघ्नं चिन्वीत प्रथमं चिन्वानः नाभिदघ्नं द्वितीयं आस्यदघ्नं तृतीयं" इति त्रयाणामेव इष्टकासंख्या, परिमाणं चाम्नायते । न चतुर्थस्य । लिङ्गमिदं, कः पुनरत्र न्यायः इति उच्यते—प्रमाणाभावात् प्रमेयाभावो न्याय्य इति प्राप्ते ब्रूमः—

॥ यथाकामी वाऽन्येषां कर्मणाम् ॥ २-१-५५ ॥ (सि)

यथाकाममभ्यस्येत शतकृत्वोऽपि । कथं ? अविशेषविधानात् । भवतीह खलु वाक्यशेषः[2] "योऽग्निं चिनुत" इत्यनारभ्य कश्चिद्विशेषमाम्नायते "तस्माद्या-वदिच्छमभ्यस्येत यथाऽन्यानि कर्माणि"

यत् पुनरिदमुक्तं त्रयाणां विधानमिति, युक्तम् गुणपरत्वात्तस्य । प्रथमसंयो-गेन गुणविधित्सा यथा 'पृषदाज्येनानूयाजान् यजति' इति । प्रथमाहारनिमित्ता जानुदघ्नत्वादयो गुणविधयः । ते गुणपरत्वान्नान्याहारान् परिसंचक्षते यथा पृषदा-ज्येनानूयाजान् यजतीति पृषत्त्वगुणपरत्वात् नान्यान्यङ्गा[3]नि परिसंचष्टे तद्वदत्रापीति ।

लिङ्गाच्च ॥ २-१-५६ ॥

"नास्यदघ्नं चित्वा कनीयांसं चिन्वीत" इति सत्सु चतुरादिषु प्रतिषेधोऽर्थ-वान् भवति । (तामसयेदिति)

॥ ३१ ॥ [4]तस्यैतान्येवोर्ध्वप्रमाणान्यनाम्नानात् ॥ २-१-५७ ॥ (सि)

---

1. R. त्रिद्वान्यथा
2. R. भवतीवलघुवाप
3. R. नागान्
4 Bhatta Dipika omits this Adhikarana

तेषु चतुर्थादिष्वाहारेषु प्रमाणं प्रति सन्देहः । किमेतान्येव जानुदघ्नत्वादीनि ऊर्ध्वप्रमाणान्युत नेति । किं प्राप्तं? एतान्येवोर्ध्वप्रमाणानि स्युः अनाम्नानात् अन्यस्य प्रमाणान्तरस्य ।

ननु आम्नायत एवोत्तरेषामाहाराणां परिमाणानि 'बृहत्तमपरिमितं स्वर्गकामश्चिन्वीत' इति । तथा चेदं वचनं "नास्यदघ्नं चित्वा कनीयांसं चिन्वीत" इति-तेषां वचनानामन्यार्थत्वात् । महान्तं बृहन्तमिति [1]ग्रामकामविषयम् ।

यद्वा अनेकस्यार्थस्य विधातुमशक्यत्वात् आस्यदघ्नपर्वापेक्षया महत्तामनूद्य बृहत्तैव विधीयत इति । उत्तरमुत्तरं ज्यायांसं इति आम्नातेष्वेव प्रमाणेष्वभ्यस्यमानेषु अनियमः, सन्निधानात् ।

नास्यदघ्नं चित्वा कनीयांसं चिन्वीत' इति कनीयस्य[स्त्व]प्रतिषेधो, नास्य दघ्नता । नियमे त्वभिन्नत्वाद्विधिनिषेधयोः । न च श्रुतिप्रतिषेधयोरुल्लङ्घना(न्ना)[दा]श्रयविध्यङ्गीकरणं न्याय्यमिति । तस्मादुत्तरेष्वाहारेषु महत्त्वं परमिति [2]ज्यायस्त्वं वा प्रमाणान्तरं नियम्यत इति ।

**॥ ३२ ॥ तस्येष्टका मन्त्रपरिमाणास्तद्व्याख्यातम् ॥ २ - १ - ५८ ॥**

चतुर्थादिष्वाहारेषु किं साहस्राद्या इष्टका उत नेति संशये प्रक्रान्ता एवाभ्यसनीयाः सङ्ख्यान्तरस्यानाम्नानादिति प्राप्ते—

ब्रूमः तस्य चतुर्थाद्याहारस्य मन्त्रपरिमाणा(या)इष्टका भवेयुः । प्रकृतानां सङ्ख्यानां नैमित्तिकत्वात् तद्व्याख्यातं - अनन्तरेण, यथा ऊर्ध्वप्रमाणानां नैमित्तिकत्वमुक्तं एवं साहस्रादीनीति । नास्य[3] यथार्थमन्यत् सङ्ख्यान्तरं कर्तव्यमिति ।

**॥ ३३ ॥ यद्दपीणामाग्नेयमिति याज्ञसेनीः प्रत्युपबन्धात् ॥ २-१-५९ ॥ (पू)**

'यद्दपीणामाग्नेयं तेन संवत्सरमग्निं चिन्वीत' इति किं प्रक्रान्तैरेव याज्ञसेनीमन्त्रैः चयनं कर्तव्यं उत दाशतयात आग्नेयानि सूक्तानि उपादेयानि इति

---

1. गमकाम A. R.
2. A & R ज्यायस्त्वमिति
3. R. न स्यात्

सन्देहः । किं प्राप्तम् - सन्निधानात् याज्ञसेनीनामेवोपादानं तास्तु[1] प्रक्रान्तत्वात् सन्निहिताः ॥

॥ वाक्यशेषाच्च ॥ २ - १ - ६० ॥

एतद्वाक्यं ऋषीणामाग्नेयमिति सन्दिग्धं वाक्यशेषात् 'तेजो वै घृतं' इतिवन्निर्णीयते 'एतद्वा ऋषीणामाग्नेयं छन्दो [2]यद्याज्ञसेनीः इति ।

॥ दाशतयीभ्यो वा ऋषिसंयोगात् ॥ २ - १ - ६१ ॥ (सि)

दाशतयैरेवाग्नेयैः सूक्तैरुपधानं विधीयते । दाशतयानां हि सूक्तानां ऋषिभिः साकल्येन संयोगोऽनुक्रम्यते 'अग्निमीळे मधुच्छन्दा' इत्यादिस्मृत्या । अपि च 'सूक्तेन सूक्तेनोपदधाति' इति '[3]सूक्तस्यासूक्तेनाव्यवच्छेदाय' इति सूक्तप्रसिद्धिश्च दाशतयेषु न याज्ञसेनीषु इति ।

॥ ३४ ॥ याज्ञसेनीः स्वस्थानाः प्रवर्धेरन् यथोपसदः ॥ २-१-६२ ॥ (पू)

याज्ञसेनीषु किं दण्डकलितवदावृत्तिः उत स्वस्थानविवृद्धिः [4]उताग्नेयीभिः सर्वा विक्रियेरत् इति संशयः । याज्ञसेन्य इति लक्षणतः प्राप्ते, याज्ञसेनीः इति छान्दसः प्रयोगः । ननु दाशतयीनामुपादानमिति स्थितं ? सत्यं [5]स्थितम् । क्त्वाचिन्तेयं पूर्वपक्षावस्थायां कर्म निरूप्यते क्रमानुग्रहात् दण्डकलितवदावृत्तिरिति प्राप्ते ब्रूमः —

न दण्डकलितवदावर्तेरन् । भूयांसि कर्माणि अल्पीयांसो मन्त्राः न शक्नुवन्ति व्याप्तुं तेन स्वस्थाना एव वर्धेरन् यथोपसदः (13-2-3)

॥ कृत्स्नस्य वा विकारोऽग्निसंयोगात् ॥ २ - १ - ६३ ॥ (सि)

यथा त्रिवृदग्निष्टुदग्निष्टोमस्तोत्रविकारः कृत्स्नः आग्नेयैः मन्त्रैरवृद्धैर्विक्रियेत मन्त्रपरिमाणत्वात् । नानामन्त्राः इष्टकामन्त्रनिवृत्तौ निवर्तन्ते । यथा त्रिवृदग्निष्टुदग्निष्टोम इति सर्वस्तोत्रविकार इति ।

---

1. Mss. ततस्तु
2. S. यजते
3. सूक्तस्यसू
4. A मन्त्रभूताग्नेयीभिः
5. Mss. मसिद्धितम सत्यस्थितं

॥ ३५ ॥ दाशतयीभ्यो यावदर्थमागमयेत् यथा गायत्रीषु स्तुवत इति ॥ २ - १ - ६४ ॥ (पू)

यावन्ति मन्त्राभ्युपधानानि किं तावतामुपादानं उत सर्वासां अग्निलिङ्गानां–इति संदेहे यावन्त्युपधानानि तावतामुपादानं, [1]अर्थवत्त्वादागमस्य, यथा गायत्रीषु स्तुवत इत्युक्ते स्तोत्रनिर्वृत्त्यर्थानामेवोपादानं एवं मन्त्राणामिति ।

॥ सर्वेषां तद्व्याख्यातम् ॥ २ - १ - ६५ ॥ (सि)

सर्वे मन्त्रास्तल्लिङ्गा उपादातव्याः सामान्यश्रुतेः तद्व्याख्यातम् "सर्वे तु वेदसंयोगात् कारणादेकदेशस्य" (पू. मी. 3 - 5 - 26) इति । किं प्रत्यक्षां श्रुतिमतिक्रामेदिति ।

॥ ३६ ॥ यथाद्रव्यसन्निधि मन्त्रसंयोगात् यथा सामिधेनी-॥ विवृद्धौ काष्ठानि ॥ २-१-६६ ॥ (पू)

यत्पुनरुक्तं यावदर्थमिति मन्त्रसंयोगात् द्रव्याणामपि वृद्धिः यथैव सामिधे-[नीवृद्धौ काष्ठाभिवृद्धिः] क्त्वाचिन्तेयम् उक्तविवक्षार्था न्यायप्रदर्शनार्था । प्रतिमन्त्र-मुपधानं न्याय्यं, नानामन्त्राणां सन्निधानात् एकार्थानां विकल्पः स्यादिति प्राप्ते ब्रूमः—

॥ प्रतिसूक्तं वचनात् ॥ २ - १ - ६७ ॥ (सि)

प्रतिसूक्तमुपधानं कर्तव्यमिति । कुतः? वचनात्; 'सूक्तेन सूक्तेनोपदधातीति', 'सूक्तस्यावच्छेदाय' इति गुण(क्षण) विधानात् सूक्तेनैवोपधानं कर्तव्यम् । तस्मात् सूक्तपरिमाणार्था । नानामन्त्रान्तरविशिष्टा लोकंपृणा तस्याः संपूरणार्थत्वात् ।[2]

॥ ३७ ॥ यदृषीणामाग्नेयं तेन संवत्सरमग्निं चिन्वीतेति चयनसंयोगात् ॥ २ - १ - ६८ ॥ (सि)

[चयनसंयोगात्] तत्रैव मन्त्रविकारो नार्थान्तरे अमणोपस्थानादौ । मृन्मयानामेवेष्टकाभिधानं उत सर्वासामिति अस्यैवाधिकरणस्य प्रयोजनम् ।

---

1. अर्थार्थत्वात्
1. सूक्तेभ्योऽपीष्टकानामाधिक्ये लोकंपृणाभिरेवोपधानम्—भा. दी

॥ ३८ ॥ गायत्रचितं चिन्वीतेत्येवमादयः कर्मसंयोगास्त-
॥ द्व्याख्यातम् ॥ २ - १ - ६९ ॥ (सि)

गायत्रचितं चिन्वीत ब्रह्मवर्चसकामस्य त्रिष्टुप्चितं वीर्यकामस्य जगतीचितं पशुकामस्य इत्येवमादयः कामसंयुक्ता गुणविधय इति। तदेतत् यद्दषीणामाग्नेयं इत्येवमाद्यैरेव सूत्रैर्व्याख्यातमिति[1]।

॥ ३९ ॥ शीर्षवानग्निर्वयसां प्रतिमाश्रुतेः ॥ २ - १ - ७० ॥

किं सशिरस्कोऽग्निश्चेतव्यः उत नेति सन्दिह्यते। किं प्राप्तम् ? सशिरस्क इति। वयसां प्रतिमाश्रुतेः। 'वयसां वा एष प्रतिमया चीयते' इति श्रूयते। तद्यथा लोके "चित्रप्रतिमया चैत्रं[2] लिखेत्युक्ते चैत्रावयवानामवयवसादृश्यं च संपादयति। एवमत्रापि 'वयसां प्रतिमया अग्निश्चेतव्य' इत्युक्ते वयसां सशिरस्कत्वात् 'सशिरस्क एवाग्निश्चेतव्य' इति।

॥ मन्त्रवर्णाच्च ॥ २ - १ - ७१ ॥

"प्राच्या त्वा दिशा सादयामि, गायत्रेण छन्दसा देवतया अग्नेश्शिर उपदधामीति सशिरस्कत्वं चयनस्य दर्शयति।

॥ लिङ्गाच्च ॥ २ - १ - ७२ ॥

इष्टकाः प्रकृत्य कठाः समानन्ति व्यतिषक्तमुपदधाति इति। व्यतिषङ्गश्चाङ्ग-संयोगे सत्युपपद्यते—आत्मनि शिरसि च व्यतिषक्तमिति ब्रुवन् शिरस्सद्भावं दर्शयति।

तथाऽपरं लिङ्गं—शिरसि स्तुवते 'पक्षं चित्वा (प्रत्यंचैत्वा) पक्षयोस्स्तुवते' 'त्रिवृता शिरसि स्तुवते' इत्येव विधीयत इति।

॥ [3]धर्मिणांते [तु]समर्हणा यथा प्रतिरूप्यम् ॥ २-१-७३ ॥ (सि)

यावन्त्यङ्गानि समाम्नातानि तावत्प्रतिमास्तुतिः। यथा लोके किञ्चित् सादृश्येपि पितृप्रतिरूपः कुमार इति प्रशंसा[एवं]मन इष्टका शिर उच्यते। प्रकरणात् यथा

---

1. तत्तत्कामानां तत्तच्छन्दस्का ऋचः अकामानां तदितरच्छन्दस्का एवेति व्यवस्था— संकर्षभाट्टदीपिका

2. S चैत्र

3. Mss. धर्मिता

स्वयमातृण्णाहोमे 'एतद्वा अग्नेः शिरः' इति। यदुक्तं मन्त्रवर्णादिति। अत्रो-च्यते। इष्टका अत्र शिरश्शब्देन गुणवादेन गण्यते सन्निधानात्, यथा स्वयमातृण्णाहोमे "एतद्वा अग्नेश्शिरः" इति। अतिषक्तमुपदधातीति दीर्घत्वादतिषङ्गो यथा अतिषक्तः[2]पुरुष इति।

न केवलं द्व्यर्थयोगे व्यतिषङ्गः। किं तर्हि? दैर्घ्येपि भवति। दीर्घोऽतिषक्त इति। तस्मात् दर्शनमिति। शिरसि स्तुवत इति पूर्वार्धदेशसंयोगात् शिरसोऽभावाल्लक्षणैव। यथा तिलको मे कण्डूयत इति।

**॥ ४० ॥ त्रिवृता शिरसि स्तुवत इत्येतेन व्याख्यातम्**
**॥ २ - १ - ७४ ॥**

**॥ ४१ ॥ सुपर्णो नित्यो मन्त्रवर्णात् ॥ २ - १ - ७५ ॥ (पू)**

किं सुपर्णाकृतिः नित्या, अन्यानि काम्यानि उत सामान्यनियम इति। किं प्राप्तम्? सुपर्णाकृतिर्नित्या। मन्त्रवर्णात् दिव्यं सुपर्णं वयसा बृहन्तमिति दिव्यत्वं वयसा बृहत्वं च नियतत्वे सत्युपपद्यते। अ[न]ङ्गीकृतविशेषस्य सामान्यस्य व्यवहार-विषयत्वासंभवात् अङ्गीक्रियमाणे च विशेषे मन्त्रवर्णप्रापितसुपर्णवतो ग्रहणं न्याय्यमिति प्राप्ते ब्रूमः—

**॥ साधारणलिङ्गो वाऽविशेषात्[3] ॥ २ - १ - ७६ ॥ (सि)**

वेति पक्षनिवृत्तिः। न सुपर्णाकृतिः नियताऽग्नेः सर्वपक्षसाधारणं करोति। यतोऽविशेषेणैव ह्याम्नायते—"वयसां वा एष प्रतिमया चीयते" इति।

**प्रशंसा मन्त्रवर्णः यथा "हिरण्यपक्षश्शकुनो भुरण्युः" इति ॥**
**॥ २ - १ - ७७ ॥**

स्तुत्यर्थो मन्त्रवर्णः। सुपर्ण इति वयसां(पर्ण)पक्षाः पर्णशब्देनाभिधीयन्ते— "यथा हिरण्यपक्षः शकुनो भुरण्युः" इति।

**॥ ४२ ॥ श्येनचितिर्नित्यकाम्यो यथैन्द्रवायवे**
**॥ २ - १ - ७८ ॥ (पू)**

---

1. A. R. read अतिषक्त 2. read देव्ये

"श्येनचितं चिन्वीत सुवर्गकामः" इति श्रूयते। तत्र सन्देहः किं श्येनचितं नित्यकाम्यं उत काम्यमेवेति ? किं प्राप्तम् ? नित्यकाम्यमिति श्येनस्य पक्षित्वात्। 'वयसां वा एष प्रतिमया चीयते' इत्यनुपात्ते हि विशेषे सामान्यस्य क्रियाङ्गत्वानुपपत्तेः विशेषे श्येनात्मन्युपात्ते वयस्त्वं सामान्यम् नित्यं उपात्तमेवेति। यथा ऐन्द्रवायवाग्रतायां नित्यायामेव कामः,। इत्येवं प्राप्ते ब्रूमः—

**॥ विशेषो वा अमुं पुरुषं लिखेति ॥ २-१-७९ ॥** (सि)

वेति पक्षव्यावृत्तिः। नैतन्नित्ये काम इति। काम्य एवायं श्येनचित्। कुतः ? विशेषस्य विवक्षितत्वात्। यथा "अमुं देवदत्तं लिख" इत्युक्ते वक्तृश्रोत्रोः विशेष एव हृदि परिवर्तते। यत्र पुनः पशुना यजेतेत्यादौ सामान्ये क्रियाङ्गत्वेन चोदिते तत्संपादनार्थं कस्मिंश्चिद्विशेषे उपादीयमाने सामान्यमेवोपात्तं भवति। तन्निष्ठस्य विशेषस्य विवक्षितत्वात्। न त्वैन्द्रवायवे तथा। तस्मात् केवलं काम्य एव श्येनचिदिति।

**॥ ४३ ॥ लोकं पृणास्वददोहाभ्यां प्रतिमन्त्रमुपधानं तद्व्याख्यातम्**

**॥ २-१-८० ॥** (पू)

लोकंपृणास्वददोहाभ्यां किं प्रतिमन्त्रं उपधानं कर्तव्यं उत द्वाभ्यामपि समुच्चयेन आहोस्वित् पूर्वयोपधाय उत्तरया समभिमृशेत् इति। किं प्राप्तम् ? प्रतिमन्त्रमर्थभेदात् पृथगुपधानं कर्तव्यम्। तदुक्तं—आख्या चैवं तदर्थत्वात् इति। गुणानां सर्वमेतस्यादि....व्यानात् (?)

**॥ [1]विनियोगे नानार्थत्वात् समुच्चयः सन्निपातित्वात्**

**॥ २-१-८१ ॥** (सि)

सहप्रयोगात् क्रमवत्त्वे 'अनुचरवती भवत्यजामित्वाय अथो अनुष्टुभाऽनुचरति'। इति। अनुचरश्चाप्रधानो लोके। तद्वदत्रापि अप्रधानत्वमेवानुचरशब्दो ज्ञापयति। तथा 'द्वाभ्यां खनति' इति। 'तमुभाभ्यां सोपधानं' इति च।

**॥ लिङ्गाच ॥ २-१-८२ ॥**

---

1. S'. विनियोगेनार्थत्वं

न प्रतिमन्त्रं इति गम्यते "अष्टौ नानायजुषः त्रयोदश लोकंपृणा उपदधाति" इत्युक्त्वाऽऽह "त एकविंशतिः सम्पद्यन्ते" इति । यदि प्रतिमन्त्रमुपधानं भविष्यति नैषा सम्पत्स्यते[1] । कथं ? त्रयोदश लोकंपृणाः तावत्य एव सूददोहसः ताः षड्विंशतिरिष्टका भवेयुः । नानायजुर्भिः [2]साकमेव संख्या स्यात् । अनुचरवती भवतीति चातुल्यकार्यत्वादुपपद्यते । कथं अतुल्यता ? लोकंपृणा उपधानार्था सूददोहा अभिमर्शनार्थाः । तस्मान्नोभाभ्यामेकैकोपधानं स्यात् । नापि प्रतिमन्त्रम् । किं तर्हि ? लोकं पृणयोपधाय सूददोहसमन्त्रेणाभिमर्शनं कर्तव्यं इति ।

इति सङ्कर्षकाण्डभाष्ये द्वितीयाध्यायस्य प्रथमः पादः ।

— * —

1. A साध्यते R संवत्स्यते 2. Mss. साधनैव

## ॥ अथ द्वितीयः पादः ॥

॥ १ ॥ हृदयशूलं तस्य वहति तन्नाग्नीषोमीये करोति न सवनीये अनूबन्ध्यायां करोति सोन्ववेत्यविधिः ॥ २ - २ - १ ॥ (पू)

'तन्नाग्नीषोमीये करोति' इत्येकान्तात्प्रतिषेधो हृदयशूलस्य आहोस्विदुद्वासनाधिकारप्रतिषेधः इति। किं प्राप्तम्? प्रतिषेधः इति। "तन्नाग्नीषोमीये करोति न सवनीय" इति प्रतिषेधात् हृदयशूलं न स्यात्। न च प्रतिषेधं मुक्त्वा अन्योऽर्थः संभवति। अग्नीषोमीये विहितप्रतिषिद्धत्वाद्विकल्पः सवनीये प्रत्यक्षविधेर्बलीयस्त्वादभाव एव हृदयशूलस्येति प्राप्ते मः—

॥ सर्वेषां वा श्रपणादुद्वासनाधिकारप्रतिषेधः ॥ २ - २ - २ ॥ (सि)

सर्वेषां हृदयानां श्रपणे तन्त्रं हृदयशूलमिति स्थितमेव न्यायमनुवदति इयं श्रुतिः 'अ[ना]ग्नीषोमीये करोति' इति। सर्वधात्वर्थानुसरणात् करोतिरुद्वासनार्थः। कृतप्रयोजनस्य कर्मान्ते उत्सर्गे प्राप्ते न्यायप्राप्ततन्त्रत्वानुवादवचनमिदम्। न करोति नोद्वासयति। तदुद्वासनमुत्कृष्यते अनूबन्ध्यां यावत् तन्नोद्वासयति। अर्थविरोधाच्छब्दविपरिणामो बलीयान्।

॥ मन्त्रवर्णाच्च ॥ २ - २ - ३ ॥

मन्त्रवर्णोऽप्यमुमेवार्थमुपदर्शयति अश्वमेधे शूलसम्भवं "यत्ते गात्रादग्निना पच्यमानादभिशूलं निहतस्यावधावति" इति। सौत्राण्यां च "शूलेन मासरेण चावभृथमभ्यवयन्ति" इति। एतच्च शूलदर्शनं एकादेशप्रसिद्ध्या। गृहाणि सौत्रामण्यां पशौ न स्यात्।(?) तस्मादुद्वासनाधिकारप्रतिषेध इति।[1]

॥ २ ॥ स यूपो मन्त्रवर्णात् ॥ २-२-४ ॥ (पू)

वनस्पतौ यूप एव आहोस्विदन्या काचिद्देवतेति सन्दिह्यते। किं प्राप्तम्? यूप एवेति। कथं? अन्यादर्शनात्। सन्निधानाच्च। मन्त्रवर्णात् 'वनस्पते रशनया नियूय' इति रशनायोगो यूपस्यैवेति।

---

1. Ś adds अग्निषोमीयस्येति तदनेन व्याख्यातम्।

॥ लिङ्गाच ॥ २ - २ - ५ ॥

"तमेतं यूपमेनं भागधेयं करोति" इति यूपस्यैव वनस्पतीज्याभागित्वात् स एव देवतेति ।

॥ बर्हिः समिध इति इध्मामिः पौर्णमासीति च एतेन व्याख्यातानि प्रकरणात् ॥ २ - २ - ६ ॥

एतेन बर्हिरादिषु प्रत्यक्षा ये च देवताःस्युः प्रकृतितः प्रत्ययात् मन्त्रवर्णेभ्यश्च यथास्वमिति प्राप्ते ब्रूमः—

॥ शब्दसामान्यं वा प्रकरणे कर्माणि तत्प्रकरणे शेषाश्चोद्यन्ते ॥ २ - २ - ७ ॥ (सि)

वनस्पत्यादिशब्दवाच्या अन्या देवताः यूपादीनां च देवतादीनां च श्रुति-सामान्यमात्रत्वम् । यथा अश्वदविकानदीवच्च सरस्वती स्तूयते ।

अथ कथं पुनवरगम्यते न्याय एवैतच्छाब्दिक इति । शब्दसामान्यं वा । प्रकरणे कर्माणि तत्प्रकरणे शेषाश्चोद्यन्ते । कर्माणि पूर्वं चोद्यन्ते विधीयन्त इति वाक्यशेषः । प्रकरण इति वाक्यपरिणामः, प्रकरणादिति पञ्चाभ्यां प्रयोक्तव्यायां सप्तमीं प्रयुङ्क्ते । एतदुक्तं भवति-भावनायां हितकामेन परिपूरणम् । उपात्ते फलपदे केनेत्याकाङ्क्षानिवृत्तये धात्वर्थोपादानं यागेति । यागश्च द्रव्यं देवता त्याग इति । तदुक्तं-यजतिचोदना द्रव्यदेवता । किमियमित्युत्पन्नस्य अङ्गप्रधानात्मकस्य याग समुदायस्येतिकर्तव्यताकाङ्क्षिणः प्रकरणे बर्हिरादयः शेषाः पश्चात् यथास्वमुपकाराय चोद्यन्ते ।

ननु प्रधानकालत्वमङ्गानामेकादशे प्रतिपादितम् । सत्यमेवम् । तथाप्य-वच्छेदापेक्षया उत्तरकालत्वं यागादीतिकर्तव्यताया इति । तस्मान्न देवतात्वं यूपादी-नाम् इति ।

हव्यवाहनः स्विष्टकृत्कर्मदेवतायामुपपद्यते न यूपः । स्मृतिश्च प्रयाजानां देवताविषया अनेके । देवतामिष्ट्वा अग्निरिति शाकपूणिः । यूपपदे देवताभिधानं मन्त्रवर्णेष्वित्यविरोधः भागित्वश्रुतिश्च सामान्यापेक्षोऽर्थवादः । अथवा अवभृथे

विज्ञायते—'अपबर्हिषः प्रयाजान् यजति अपबर्हि पावनूयाजौ यजति' ति बर्हिराज्यभागेपि यागे दर्शनं अन्यास्वेव देवतास्ववकल्पने । तथा "अग्निमग्न आवह" इत्यावाहनं अग्नेरन्यां देवतामग्निं दर्शयति ।

॥ ३ ॥ पार्वणेन कालोऽभीज्येत शब्दसंयोगात् ॥ २-२-९ ॥

श्रुतिसंयोगादित्यर्थः । पर्वशब्देन श्रुत्या कालाभिधानं लक्षणया कर्म । श्रुतिश्च लक्षणातो बलीयसीति । तस्मात् कालाभीज्येति प्राप्ते ब्रूमः—

॥ कर्माभिज्या वा तुल्यशब्दानां प्रकरणविशेषात् उत्तरस्यां ततौ कर्मप्रयोगो न विद्यते विप्रतिषेधात्
॥ २-२-१० ॥

कर्माभिज्या भवितुमर्हति । कालार्थत्वे होमस्य फलपरिकल्पनादोषप्रसङ्गात् । न च तादर्थ्ये प्रमाणमस्ति । प्रकरणात् कर्मार्थत्वं, मुख्ये लाक्षणिके च समानशब्दप्रयोगः प्रमाणान्तरेण विशेषे व्यावस्थाप्यते । प्रकरणात् कर्मत्वाध्यवसानम् । प्रकरणं हि कर्मणो न कालस्य । तदुत्तरस्यां ततौ विकृतावित्यर्थः कर्मप्रयोगे समुदायाभावे न विद्यते न क्रियेतैव पार्वणहोमो विप्रतिषेधात् । चतुर्होत्रा पौर्णमासीमभिमृशेदित्यादौ वपाभिमन्त्रणं तु विद्यते अङ्गसंयोगात् । द्रव्याङ्गत्वेन चोदनाभावात् अभिमर्शनं कर्तव्यमिति ।

ननु पुनरुक्तमिदं नवमे विचारितत्वादस्य न्यायस्येति[1] । सत्यमेतत् । तस्यैवाधिकरणस्य प्रयोजनं अनेन द्वितीयेन सूत्रेणैव वर्ण्यते । यद्येवं नार्थः पूर्वपक्षसूत्रेण । किन्तु शास्त्रकाराणां शैली खल्वेषा यत् सर्वमेव पूर्वपक्षसिद्धान्तद्वारेण वस्तूपवर्णयन्तीति ।

॥ सोमे दर्शपूर्णमासप्रभृतीनां याजमानं न विद्यते (विज्ञायते) यज्ञो बभूवेत्यर्थोक्ते श्रूयते सा परिसङ्ख्या । यथा "आज्यभागौ यजति" इति गृहमेधीये
॥ २-२-११ ॥

---

1, 9-3-1 पू. मी.

सोमाङ्गभूतेष्टिषु प्राकृतं याजमानं कर्तव्यं न वेति विचार्यते । किं प्राप्तम् ? न कर्तव्यम् । प्रत्यक्षविधानात् । सर्वेष्वङ्गेषु चोदकप्राप्तेषु यत् कस्यचित् प्रत्यक्षविधानं तत् पुनः परिसंख्यानार्थं यथा आज्यभागौ यजतीति गृहमेधीये । तद्वदिदं यज्ञो-बभूवेति पुनस्संकीर्तनं अन्यपरिसंख्यानार्थमेवेति प्राप्ते ब्रूमः—

॥ स्तुतशस्त्रयोस्त्वनुमन्त्रणार्थमाम्नन्ति तत्संयोगपृथक्त्वं यथा पञ्चावत्ते ॥ २–२–१२ ॥ (सि)

यज्ञो बभूवेति स्तुतशस्त्रानुमन्त्रणमिदं अर्थान्तरसंयुक्तं नेदमैष्टिकमेव पुनरा-म्नायते । तदुभयोरपि विधानयोः परस्परं संबन्धाभावात् न परिसङ्ख्यार्थत्वमिति संयोगान्तरत्वात् । यथा चतुरवत्तपञ्चावत्तयोः इति । आज्यभागयोस्तु अविकृत-योरेव श्रवणमित्यदृष्टान्तः । अतस्तानि न चोदकप्राप्तानि याजमानानि ।

॥ ५ ॥ चतुरवत्तं जुहोतीति सर्वेज्यानामविशेषात् ॥ २–२–१३ ॥ (पू)

'चतुरवत्तं जुहोति' इत्यत्र सन्देहः किं होममात्रं चतुरवत्तं आहोस्वित् होमविशेष इति । किं प्राप्तम् ? होममात्रमिति । कुतः ? अविशेषात् । उद्दिश्य-मानत्वाद्धोमानां विशेषयितुमशक्यत्वात् होममात्रमनूद्य तत्र चतुरवत्तं विधीयते । तस्मात् सर्वहोमेषु चतुरवत्तं इति प्राप्ते ब्रूमः—

॥ अदर्विहोमानां वा लिङ्गात् ॥ २ - २ - १४ ॥ (सि)

दर्विहोमादन्यत्र चतुरवत्तं विधीयते । कथं ? चतुरवत्तहोमयोः संबन्ध-विधानात् । सर्वत्र संबन्धविधाने ज्ञातयोः संबन्धमात्रं विधीयते अनिर्ज्ञातयोस्तु संबन्धिनोः अन्तर्भाव्य तावर्थौ सम्बन्धविधानमिति । तदत्र होमो ज्ञातः, चतुरवत्तं च निर्ज्ञातं वाक्यान्तरात् तयोस्संबन्धमात्रमेव विधीयते इति चतुरवत्तं जुहोतीति सामान्या श्रुतिः वाक्यैकदेशोपात्तेन सामर्थ्येन विशेषे व्यवस्थाप्यत इति । "छन्दांसिवै देवेभ्योऽपाक्रामन् न वो भागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुरवत्तमधारयन् पुरोनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुर्गृहीतं जुहोति छन्दांस्येव तत्प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति" इति चतुरवत्तं जुहोतीति श्रुतिः[1]

1. श्रुतेः

पुरोनुवाक्याभिरभिसंबध्यमाना विशेष एवावतिष्ठति । न च दर्विहोमे पुरोनुवाक्यादिविशेषयोग इति ।

॥ ६ ॥ **पञ्चावत्तं जमदग्नीनामिति सर्वेषामविशेषात्**

॥ २–२–१५ ॥ (पू)

किं पञ्चावत्तं जामदग्न्यसंबन्धिषु सर्वहोमेषु किं वा यत्रैवावत्तं तत्रैव तेषामपीति । किं प्राप्तम् ?

ये जामदग्न्यानां होमाः तेषु संबन्धश्रुतिसामर्थ्यात् अविशेषेण सर्वत्र पञ्चावत्तं निविशते इति प्राप्ते ब्रूमः—

॥ **स्याच्चतुरवत्ते तस्यैव लिङ्गदर्शनात्** ॥ २ - २ - १६ ॥ (सि)

चतुरवत्तस्यैव विकारस्स्यात् यस्य चतुरवत्तं तस्यैव विकारः स्यादित्यर्थः । असन्निहितविकारस्यान्याय्यत्वादित्यर्थः । लिङ्गदर्शनात् ॥

किं च लिङ्गदर्शनात् "जमदग्निर्वाऽस्मिन् लोके—स न - समर्थमपश्यत् स एतं पञ्चममवदानमपश्यत् तन्निरवपत् ।" इति ब्रुवन् अधिकं चतुरवत्तेऽवदानं दर्शयति । तस्मात् अधिकारापेक्षया चतुरवत्तविकारः पञ्चावत्तमिति ।

॥ ७ ॥ **पञ्चमावत्तमाज्यात् संख्यासंयोगात्** ॥ २ - २ - १७ ॥ (पू)

पञ्चावत्तिनः पञ्चमेऽवदाने सन्देहः । किमाज्यात् पञ्चममवदेयं उत औषधादिति । किं प्राप्तम् ?

आज्यात् पञ्चममवदेयम् । कुतः ? पूरणार्थत्वात् । चतुरवत्ते हि सामान्ये चतुर्थमाज्यं तत्क्रमसंयोगात् व्यवर्धेत इति प्राप्ते ब्रूमः—

॥ **औषधाद्वा तत्संप्रदानेनाभिप्रेतम्** ॥ २ - २ - १८ ॥ (सि)

प्रधानहविषोऽवदीयेत प्रधाने हि यदभिप्रेतम् तदेवावदेयम् अवदेयं च पुरोडाशद्रव्यम् । अतो मुख्यत्वात् तत एवावदेयम् । यत्पुनरुक्तम् - संख्यासंयोगादिति । तत्रोच्यते । मध्यमेपि स तावत् घटते यथा षष्ठो भ्राता न दृश्यत इति ।

॥ **लिङ्गाच्च** ॥ २ - २ - १९ ॥

लिङ्गं खल्वप्येतमर्थं दर्शयति यथा औषधात् पञ्चममवदानमिति "पशुर्वा एष यत्पुरोडाशः यन्मध्यादवद्यति यथा हृदयस्यावद्यति एवं तत् यत्पूर्वादवद्यति यथा जिह्वाया अवद्यत्येवं तत्। यत्पश्चार्धात् यथा [1]गुदादवद्यत्येवं तत् पञ्चावत्तं पशोर्व्याप्त्यै[2] इति इयमपि श्रुतिः उक्तमेव न्या[यमनुवद]ति।

॥ अन्ततः क्रमसंयोगात् पञ्चमशब्दश्चाविप्रतिषिद्धः ॥ २-२-२० ॥ (पू)

तत् पञ्चममवदानं अभिघारणादुत्तरकालं आहोस्वित् स्वकालमिति सन्दिह्यते। किं प्राप्तम्? अभिघारणादुत्तरकालमिति। कथं आगन्तूनामन्ते निवेश इति। पञ्चमशब्दश्चायं न विप्रतिषिध्यते पञ्चनां पूरण इति। तस्मादभिघारणादुत्तरकालमिति प्राप्ते ब्रूमः :—

॥ पुरस्ताद्वाऽभिघारणात् संस्कारार्थमभिघारणम् संख्यार्थः पञ्चमशब्दः ॥ २-२-२१ ॥ (सि)

औषधात् द्वितीयमवदाय तृतीयं तत्कालमेवावदेयम् पश्चादभिघारणम्। कुतः? संस्कारार्थत्वात् अभिघारणस्य। पुनरभिघारणेन संस्क्रियेत। पञ्चमशब्दस्य संख्यार्थत्वात् यत्र तत्र स्थितेन संख्या पूर्येत इत्यविप्रतिषेधः। तस्मादौषधात् स्वकालं पञ्चममवदानमिति सिद्धम्।

॥ ९ ॥ पश्चार्धात् तृतीयं पञ्चावत्तिनः क्रमसंयोगात् ॥ २-२-२२ ॥ (पू)

पञ्चावत्तिनः तृतीयमवदानं औषधादिति स्थिते चिन्त्यते। तृतीयमवदानं पुरोडाशस्य पश्चार्धात् ग्राह्यं उत स्विष्टकृत आवापादिति। किं प्राप्तम्? पश्चार्धादिति पाठक्रमेण तृतीयस्य पश्चार्धयोगो गम्यते। तस्मात् पश्चात् ग्राह्यमिति प्राप्ते ब्रूमः—

॥ आवापस्स्विष्टकृतो द्वितीयं पञ्चावत्तिनः ॥ २-२-२३ ॥ (सि)

मध्यात् पूर्वमवदाय स्विष्टकृदवदानस्थानात् द्वितीयमवदानं भवेत् पञ्चावत्तिनः इति। लिङ्गात्, "यदुभयतोऽवद्येत् उभयतः पशुना परिवेषयेत् उत्तरार्धा-

---

1. S गुदस्य
2. S पशोराप्त्यै

देवोभे अवद्येत् । तत एव रुद्रं पशुभ्यो निरवदेत" [इति] स्विष्टकृतः आवापात् द्वितीयमवदानं आहत्य पञ्चावत्तिनो विधत्ते । तस्मादयं विधिः पञ्चावत्तिविषय इति ।

॥ १० ॥ [1]सकृदुपहतेन वनस्पतिं यजतीति संस्कारप्रतिषेधः शब्दसंयोगात् ॥ २–२–२४ ॥ (पू)

वनस्पतीज्यां प्रकृत्य समामनन्ति "सकृदुपहतेन वनस्पतिं यजति" इति । तत्र संशयः किमयं संस्कारप्रतिषेधः, किं वा पञ्चावत्तिनः तद्द्वितीयावदानप्रतिषेधः किं प्राप्तम् ? सकृच्छब्दसंयोगादुपस्तरणाभिघारणानि निवर्तन्ते ।

॥ [2]कर्म वा संसर्गार्थनिवृत्तत्वात् ॥ २–२–२५ ॥ (सि)

कथं तर्हि संसर्गार्थस्याभावात् कार्याभावादेव हि तानि निवृत्तानि । तेषु च निवृत्तेषु संस्कारेषु सकृदेवावदानं प्राप्तम् । द्विस्तु पञ्चावत्तिन इति यत्तद्द्वितीयं तस्यायं प्रतिषेधः । तस्मादयमपि पञ्चावत्तिवाक्यशेषः ।

आचार्यः खल्वपि पृषदाज्यात् चतुर्गृहीतेन चेदिति पक्षान्तरं ब्रुवन् स्वाभाविकीमुपस्तरणाभिघारणनिवृत्तिमभ्युपजगाम । तथा 'यत्पृषदाज्यस्योपहरति' । इति चोदनाविशेषमादाय अयमेवार्थोऽवधार्यते ।

॥ ११ ॥ यदपरमवदानं तत्पूर्वमिति देशतः कालतो वोभयस्य भागित्वात् ॥ २-२-२६ ॥

अनुजोऽपरःतस्य यदपरमवदानं तत्पूर्वमवदाय पूर्वार्धे स्रुचो निदध्यात् इति । 'यदपरं' इति किमयं देशतः कालतो वा वादः उत कर्मत इति विशयः । किं प्राप्तम् ? देशतः कर्मतो वा स्यात् । कुतः ? उभयस्य लक्षयितुं शक्यत्वात् । अतो विकल्प इति प्राप्ते—

॥ कर्मतो वा कर्मलक्षणत्वादवदानस्य ॥ २-२-२७ ॥

---

1. सकृदुपहृतेन भा. दी.
2. This sutra is not found in S'

अवदाय इतिवत् अवदानमिति कर्मलक्षणगुणो विधीयते अवदानमपि कर्मैव अवदीयत इत्येवमवदानविशेषविधानेन प्राकृतस्यान्यविधानं बाध्यते । तस्मात् कर्मवाद एवेति ।

**॥ १२ ॥ पूर्वपूर्वाण्यवद्येज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीः स्यात् यो वा पुरोधाकामः स्यात् अपरपूर्वाण्यवद्येत् कनिष्ठस्य कानिष्ठिनेयस्य इत्येनेन व्याख्यातम् ॥ २ - २ - २८ ॥**

अत्र पूर्वपूर्वाणीति नित्ये । निमित्तसंयोगे अपरपूर्वाणीति नैमित्तिकः क्रमविपर्यासः इति ।

**॥ १३ ॥ षोडशान्याज्यानि[1] भवन्तीत्येकेषां स विकल्पो विप्रतिषेधात् ॥ २ - २ - २९ ॥ (सि)**

'चतुर्जुह्वां गृह्णाति' इत्याज्यग्रहणानि । तेषां "तानि षोडशान्याज्यानि भवन्ति" इत्यस्य च विकल्पः, उत समस्य वाद इति । किं प्राप्तम् ? चतुर्जुह्वामित्यादिभिः आज्यैः सर्वषोडशानि विप्रतिषेधात् विकल्प्येरन् ।

**समस्यवादो वा यथा चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति ॥ २ - २ - ३० ॥**

षोडशानि भवन्तीति पूर्वेषां समस्यवादोऽयं स्यात् [2]कस्मात् ? चतुरादीनां षोडशसङ्ख्यायाश्च एकार्थसमावेशासंभवात् समस्यवादस्य न्याय्यत्वात्[3] यथा पौर्णमासाहुतीनां चतुर्दशेति । विकल्पात् समावेशस्य लघीयस्त्वात् समस्यवाद इति ।

**॥ १४ ॥ सप्तदशानि पशुकामस्य गृह्णीयादित्येतेन व्याख्यातम् ॥ २ - २ - ३१ ॥ (पू)**

[4]कथमयमपि विकल्प उत समस्यवाद इति । समस्यानां तावतामभिधानात् सङ्ख्यार्थत्वेनैकार्थत्वात् विकल्प इति प्राप्ते ब्रूमः—

---

1. S. and R read षोडशान्याख्यातानि
2. S. तस्मात्
3. S. स्यान्याप्यत्वात्
4. अग्निहोत्रप्रकरणगते वाक्ये सन्देहः

**दर्शपूर्णमासयोर्व्यपदेशात् तद्विधानात् ॥ २-२-३२ ॥ ( सि )**

तानि पञ्चगृहीतानि अग्निहोत्रप्रकरणादुत्कृष्येरन् । एतान्याज्यानि दर्शपूर्णमासयोः शेषाणि स्युः । व्यपदेशात् । यदग्निहोत्रे पयः प्रभृत्याज्यादीनि च पृथग्व्यपदेशात् तदेवं जातीयकं वचनम् विभागकृत्स्यात् ।

[1]चत्वारि पञ्चगृहीतानि । तदुक्तं—यत्रेति वाऽर्थवत्वात् स्यात्[2] ।

**॥ १५ ॥ तेषां पृथक्कृतानां निरवदानं यथाऽन्येषां हविः पृथक्त्वात् ॥ २ - २ - ३३ ॥ ( पू )**

इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत् इन्द्रायाधिराजायेन्द्राय स्वराजे इत्युक्त्वा 'पुरोडाशमधिश्रयति' इत्यधिश्रयणे कृते अवदानवेलायां पुरोडाशान् पृथक्कृत्य पृथगवदानानि तन्मध्यपूर्वार्धाभ्यां ग्राह्याणि आहोस्वित् सहैवेति सन्दिह्यते । किं प्राप्तम् ? पृथगिति । कुतः ? हविर्भेदात् । भिन्नानि हि तानि हवींषि । तस्माद्धविर्भेदात् आग्नेयवन्निरवदानमेवेति प्राप्ते ब्रूमः—

**॥ वचनात् सर्वेषां सहावदीयेत नहि वचनं किञ्चिद्वुभूषति ॥ २ - २ - ३४ ॥ ( सि )**

"सर्वेषामभिगमयन् अवद्यत्यच्छंबट्कारं" यावता हि न प्राप्नुयात् तावता छंबट्कुर्यात् यथावचनात् अध्यधिश्रयणादेव वाचनिकं सहावदानमिति ।

**॥ १६ ॥ तेषां सहप्रदानमवदानैकत्वात् ॥ २ - २ - ३५ ॥**

तानि त्रीण्यपि हवींषि सह प्रदीयेरन् उत भेदेनेति सन्देहः । किं प्राप्तम् ? सहप्रदानमिति । कथं ? अवदानैकत्वात् । अवदानैकत्वं समवदानविधिसामर्थ्यात् । सहैव प्रदानं बुद्धिस्थो वा न ह वेद इति (?)

---

1. मी. 2 - 1 - 21 भाट्टदीपिकायांतु पशुकामस्य पञ्चगृहीतं ध्रुवायां यथाप्रकृतीतरयोः इति कल्पसूत्रानुमितवचनात् प्रकृतौ सप्तदशगृहीतत्वसिद्ध्या तदनुवाद इति व्याख्यातम् ।
2. A पृथग्वचनानि

॥ [1]नाना वा देवतापृथक्त्वात् ॥ २ - २ - ३६ ॥ (सि)

[पृथग्वा प्रदानं स्यात् । राजादिगुणभेदेन देवतापृथक्त्वात् अवदानादेर्वचनाद्यौगपद्येऽपि प्रदानानि भिद्येरन्नेव । भा. दी.]

॥ अन्यार्थदर्शनाच्च ॥ २ - २ - ३७ ॥

याज्यानूवाक्याविनियोगपरवचनं प्रदानभेदं प्रकाशयति—" प्रथमामनूच्य मध्यमया यजेत् मध्यमामनूच्योत्तमया यजेत् उत्तमामनूच्य प्रथमया यजेत् एवं सर्वा अनुवाक्याः सर्वा याज्या भवन्ति " इति ।

॥ १७ ॥ एककपाले वैश्वानर्यां वपायां वा अवदानसंपत्क्रियेत प्रकृत्युपबन्धात् ॥ २ - २ - ३८ ॥ (पू)

एककपालादिषु अवदाय प्रदातव्यं उत नेति सन्दिह्यते । किं प्राप्तं ? अवदायेति । कुतः? प्रकृत्युपबन्धात् चोदकानुग्रहायेत्यर्थः । तस्मात् प्रकृतिवच्चोदनातः अवदातव्यमित्येवं प्राप्ते ब्रूमः—

॥ प्रतिषेधान्निवर्तते ॥ २ - २ - ३९ ॥ (सि)

" यजमानो वा एककपालः यदेककपालस्यावद्येत् यजमानस्यावद्येत् यजमानः प्रमीयेत सकृदेव होतव्यम् " इति ' तस्मान्नावद्यति ' इति ' जीवन्नेव देवानप्येति " इति । वैश्वानर्यां " उपस्तृणीताज्यं हिरण्यशकलेनाभिघारयति " सा पश्चावत्ता भवति " इति वपायाः प्राकृतो धर्मो विधित्सितोपि प्रतिषेधान्निवर्तते । तस्मादेतेषां होमानां निरवदानप्रतिषेध इति ।

॥ १८ ॥ त्र्यङ्गाणामर्धस्य पृषदाज्यस्य च प्रत्यभिघारणं न विद्यते शेषकार्यतयाऽर्थे श्रूयते[1] ॥ २ - २ - ४० ॥ (पू)

---

1. इदं सिद्धान्तसूत्रं ब्रह्मसूत्रभाष्येषु श्रीशङ्कराचार्यरामानुजाचार्यश्रीकण्ठाचार्यादिप्रणीतेषु " प्रदानवदेव तदुक्तं " इत्यधिकरणे (३-३-४३) स्पष्टमुदाहृतमस्ति । मातृकायांतु केवलपूर्वपक्षसूत्रं तद्भाष्यं च दृश्यते । सिद्धान्तसूत्रतद्भाष्ये न दृश्येते । अस्याधिकरणस्य नानाप्रदानाधिकरणं इति नामापि परिमलकारैः उल्लिखितं वर्तते । ततः इदं पूरितम् ।

श्रीशङ्करभाष्ये ' नाना वा देवतापृथग्ज्ञानात् ' इति सूत्रपाठः दृश्यते । सङ्कर्षकाण्डभाट्टदीपिकायां तु " नाना वा " इति प्रतीकग्रहणं दृश्यते (पु. ५२)

2. त्र्यङ्गाणां मध्यस्य पृषदाज्यस्य प्रत्यभिघारणं न विद्यते शेषकारित्वात् ॥ भा. दी. मातृका

दैवतान्यवदाय शेषप्रत्यभिघारणं कर्तव्यं न वेति विचार्यते । किं प्राप्तं ? त्र्यङ्गाद्यर्थं प्रत्यभिघारणं न कर्तव्यम् अशेषत्वात् । अशेषत्वं ह्यनिज्याशेषत्वात् शेषस्य च हविषो यातयामदोषनिर्घातात् प्रत्यभिघारणं विधीयते "किं प्रत्यभिघारयत्ययातयामत्वाय" इति । न च त्र्यङ्गादिष्वेतत् संभवति, अशेषत्वात् । इति प्राप्ते ब्रूमः :—

॥ विद्यते हविस्संस्कारत्वाद्धेतुमात्रमितरत् यथा दीक्षामोचनं नक्तं संस्थापनस्य ॥ २ - २ - ४१ ॥ (सि)

विद्यत एवात्र प्रत्यभिघारणं हविषः संस्कारत्वात् । दृष्टं संस्कारमादधत् अर्थवत्तामासादयति । प्रत्यभिधारणस्य च संस्कारार्थत्वं लोकतः प्रसिद्धं कल्प्येत[न] अयातयामार्थत्वम् । तस्मादयातयाममर्थवादमात्रम् । यथादीक्षामोचनम् अत्यक्तदीक्षेऽपि यजमाने नवमे निरूपितम् ( ९ - १ - ३१ )

कथं तर्हि उपस्तरणाभिघारणयोः कृष्णलेषु निवृत्तिः इति । उच्यते । तयोः स्नेहनार्थत्वात् तस्य च स्नेहनस्य कृष्णलेष्वसंभवान्निवृत्तिरिति । अवदानेषु पञ्चविंशतिरिति विहितकालानां समासवचनं यथा चतुर्दश पौर्णमास्यामाहुतय इति ।

॥ १९ ॥ पशोः प्रदानं यथा प्रकृतौ ॥ २ - २ - ४२[1] ॥ (पू)

पशौ किमवदानेन प्रदानान्तेनानुसमयः उत सर्वेषां [2]सममवदानं इति सन्देहः । किं प्राप्तम् ? प्रकृतौ दर्शे कृतं[यथा]तथाऽत्रापीति । कुतः ? प्रकृतिवच्चोदनया यथा अवदानेन प्रदानान्तेनानुसमयः प्रकृतौ तथाऽत्रापि स्यादिति प्राप्ते ब्रूमः—

॥ एककालानि वा लिङ्गदर्शनात् ॥ २ - २ - ४३ ॥ ( सि )

एककालानि सर्वाण्यवदानानि । कथमवगम्यते ? समवत्तशब्दात् । समवत्तशब्दश्च अकृतेषु अवदानेषु नोपपद्यते । "त्रेधा गुदं करोति त्रेधा वा एतर्हि पशुः त्र्यङ्गाणि समवत्तमवदानात्" इति त्रेधा गुदं करोतीति त्रि(वि)धा निक्षिपतीत्यर्थः । अवदानत्र्यङ्गसमवत्ते यथोत्सर्गं कुर्विति ।

---

1. R A यथा वृत्तौ
2. S R समवदानं

ननु लिङ्गमिदं ; कःपुनरत्र न्याय इति ? वाक्यसामर्थ्यमेवात्र न्यायः "दैवतान्यवदाय अथोपहृत्य अथ समवत्तधान्यां" इति अवदानानां समानकालतां विधत्ते । अथोपहृत्य अथ समवत्तधान्यामिति अथशब्दो विप्रकर्षान्नोपपद्यते । तस्मात् पञ्चावदानानि समानकालानीत्युत्सर्गः । येषु पुनः पशुषु प्रैषसामर्थ्यात् वचनाद्वा प्राकृतः प्रकरणकल्पः प्राप्नुयात् तेषु तथैव प्रचरिष्यत इति ।

॥ इति सङ्कर्षकाण्डभाष्ये द्वितीयाध्यायस्य द्वितीयःपादः ॥

—: * :—

# अथ तृतीयः पादः

॥ १ ॥ यजेतीज्यासम्प्रैषः शब्दसंयोगाद्यथा पचेतिवचनानि[1]
येयजामह इति प्रतिश्रवणे यथा अहं तु पक्ष्यामि
इति ॥ २ - ३ - १ ॥ (सि)

यज येयजामहे इति किमेतौ शब्दावुच्चारणमात्रेणोपकुर्वाते, उत प्रैषार्थ-प्रतिपत्त्यर्थाविति सन्दिह्यते। किं प्राप्तम्? अदृष्टार्थौ। प्रकृतसंयोगादेव याग-कर्तव्याप्रतीतेः। ऋत्विग्वरणस्य यागार्थत्वात् यथायागं स्मृतेः प्राप्तत्वात्। काल-स्मृतिरप्राप्तेति चेन्न। प्राकरणिकस्य कर्मकालस्मृत्यारोहणद्वारेण दृष्टार्थत्वे सति अदृष्टार्थत्वे प्रमाणाभावात्। अनारभ्यवादेन यागसंयोगश्रुतेः "स एष सप्तदशः प्रजापतिर्यज्ञमन्वायत्त" इति वचनात् अदृष्टमुपकार इति प्राप्ते ब्रूमः—

यजेति यागार्थः प्रैषः प्रकृतिप्रत्ययार्थविभागेन प्रैषार्थप्रतिपत्तेः। लोटः प्रैषार्थत्वात्, यजेरिज्यार्थत्वात् यथा पचेति पाकसम्प्रैषः। येयजामह इति [2]इष्टिप्रतिपत्तिः; **यथा 'अहं पक्ष्यामि' इति**। साधुसामर्थ्यात् उत्तमपुरुषलोभाच्च यथा अहं तु पक्ष्यामीति पाकार्थप्रतिपत्तिः॥

॥ लिङ्गाच्च ॥ २ - ३ - २ ॥

लिङ्गमप्येतमर्थं दर्शयति। "भूतं भव्यं च होत्रा यजमानोऽवरुन्ध इत्याहुः येयजामहे इत्युक्त्वा भूर्भुवस्सुवरिति व्याहृतिं पुरस्ताद्दध्यात्" इति येयजामहस्य होत्रा संयोगं दर्शयति। तस्मादपि प्रतिश्रवणार्थः।

तथाऽपरं लिङ्गम्—"यज्ञमेव तमृत्विजः संप्रदायं बिभ्रति। सोऽनुब्रूहीत्ये-वोक्त्वाऽध्वर्युः नापव्याहरेत् नो एव होताऽपव्याहरेत्। आश्रावयत्यध्वर्युः तदग्नीधे यज्ञ उपावर्तते। सोऽध्वर्युर्नापव्याहरेत् आप्रत्याश्रवणात् प्रत्याश्रावयत्यग्नीत् तत्पुनरध्वर्युं

---

1. पचतिवचनानि-भा-दी. मातृका
2. R, स्पष्ट

यज्ञ उपावर्तते । सोध्वर्युर्नापव्याहरेत् आयजेति वक्तोः यजेत्येवाध्वर्युः होत्रे यज्ञं संप्रयच्छति स होता नापव्याहरेत् पुरा वषट्कारात् होतारमेतर्हि यज्ञ उपावृत्तो भवति वषट्कारेण तमग्नौ रेतोभूतं सिञ्चति[1] "। सोऽयमवधिव्याहरणपरः[2] अन्यार्थः, कर्तृभेदेन श्रुतो यथाकालं प्रैषार्थप्रतिपत्तिविनियोगं दर्शयति ।

"सएष सप्तदशः प्रजापतिर्यज्ञमन्वायत्त" इति यज्ञसंयोगःश्रूयते "आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजमाह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार" इत्येतेषां अक्षराणामर्थप्रतिपादनद्वारेण परस्परं संबद्धानां यज्ञसंबन्धःश्रूयते । न चार्थविवक्षा प्रतीयमाना परित्यक्तुं शक्यते । तस्मात् प्रैषप्रैषार्थप्रतिपत्तिरूपेण [सम्बन्धः]

॥ २ ॥ प्रजापतिर्यज्ञमन्वेतीत्यत्र देवतानामादेशो न विद्यते अनाम्नानात् ॥ २ - ३ - ३ ॥ (पू)

तत्र प्रजापतौ देवतानामधेयं विशेषेणादेष्टव्यं उत नेति विचार्यते । किं प्राप्तम् ? देवतानामादेशो न स्यात् । कुतः ? अनाम्नात् अनभिधानात् । ये यजामह इति केवलप्रैषार्थप्रतिपत्तिः न तत्र देवतानामधेयं श्रूयते । यावान् श्रुतस्योत्सर्गे दोषः तावान् अश्रुतकल्पनायाम् । तस्मान्न विशेषेण देवतानामादेशः कर्तव्य इति प्राप्ते ब्रूमः—

॥ विद्यते वाऽन्यार्थदर्शनेभ्यः आश्राव्याह देवान् यजेति अथ इन्द्रायानुब्रूहि इन्द्रं यजेति ॥ २ - ३ - ४ ॥ (सि)

ऐन्द्रस्यावद्यन् ब्रूयादिन्द्रायानुब्रूहीत्याश्राव्य ब्रूयादिन्द्रं यजेति मारुतस्यावद्यन् ब्रूयान्मरुद्भ्योऽनुब्रूहीत्याश्राव्य ब्रूयान्मरुतो यजेति । तथाऽपरं स यत्रैतदध्वर्युराह समिधो यजेति आग्नेयमेव तद्रूपं परोक्षमग्निं यजेत्येवमादि श्रूयते । यत्तनूनपातं यज इडो यजेति ब्रूयात् जामि स्यात् यजयजेत्येव ब्रूयात् । इत्यनेनार्थात् सर्वेषु याज्यादिप्रैषेषु देवतादेशवत्तां दर्शयति ।

---

1. शतपथ 1-5-2
2. R. अनवध्याहरणपरः

ननु लिङ्गान्येतानि । का प्राप्तिः ? उच्यते । देवतोद्देशेन द्रव्यत्यागो यागः । नहि तामनुद्दिश्य यागस्सम्भवति । तस्मान्नियमेन याज्यादिप्रैषेषु देवतादेशनं कर्तव्यमिति ।

**॥ आम्नातः प्रयाजेषु देवतादेशः तस्य प्रतिषेधो वचनम्**
**॥ २ - ३ - ५ ॥**

एकेषां शाखिनां प्रयाजेष्वाम्नातो देवतादेशः तस्य प्रतिषेधो "यत्तनूनपातं यजेडो यजेति ब्रूयाज्जामि स्यात् यजयजेति ब्रूयात्" इति । तस्मादिदं दर्शनम् ।

**॥ वचनानीतराणि स्युः अर्थवत्त्वात् इतरथा वादमात्रं अनर्थकं स्यात् इति ॥ २ - ३ - ६ ॥**

विधानसामर्थ्यादेवान्यत्र देवतादेशाभाव इति विपरीतान्येतानि लिङ्गानीति ।

**॥ आम्नातो वैकेषां तद्दर्शयति अमुष्मा अनुब्रूह्यमुं यजेति**
**॥ २ - ३ - ७ ॥**

अपदिश्य देवता यजेतीति शक्यते वक्तुम् । इदमपि यागे सामर्थ्य[सिद्ध]मेव देवताव्यादेशमनुवदतीति ।

**॥ ३ ॥ देवान्यजेत्यनूयाजेषु साधारणो बहुशब्दः श्रूयते**
**॥ २ - ३ - ८ ॥ ( सि )**

" देवान् यज " इत्ययं प्रैषः किं प्रथमानूयाजविषयः आहोस्वित् सर्वेषामनूयाजानां साधारण इति सन्देहः । किं प्राप्तम् ? सर्वेषां साधारणो भवितुमर्हतीति । कुतः ? बहुवचनश्रुतेः ।

**॥ प्रथमस्य वा स्थानात् ॥ २ - ३ - ९ ॥ ( पू )**

प्रथमानुयाजविषय एवायं प्रैषः । देवान् यजेत्यनन्तरं प्रथमस्य क्रमः । तस्मात् तदर्थः स्यादिति । किं च

**॥ उत्तमयोश्च प्रैषाम्नानात् ॥ २ - ३ - १० ॥**

उत्तमयोश्चानुयाजयोः प्रैषावम्नायेते यजयजेति । अतोऽपि प्रथमस्यैवेति ।

**॥ शब्दविप्रतिषेधान्नेति चेत् पाशवत्स्यात् ॥ २-३-११ ॥**

इति चेत् पश्यसि एकस्मिन् प्रथमे अनुयाजे 'देवान् यज' इति बहुवचन-विप्रतिषेध इति, पाशवद्भवितुमर्हति । यथैकस्मिन् पाशे "अदितिः पाशान् प्रमुमोक्तु" इति बहुवदभिधानम् । एवमिहापि भविष्यति ।

**॥ प्रथमे विप्रतिषेधाद्वा साधारणः ॥ २-३-१२ ॥** (सि)

साधारण एवानूयाजानां प्रैषो भवितुमर्हति शब्दविप्रतिषेधात् बहुवचनस्यैकस्मिन् अर्थे प्रयोगो विप्रतिषिद्धः ।

किं च :—

**॥ क्रमात् पृथक् स्वलिङ्गात् सर्वेषां, क्रमाच्च लिङ्गं बलवत्तरम्**
**॥ २-३-१३ ॥**

उत्तमयोर्मन्त्राम्नानादिति यदुक्तं तत्रोच्यते—सन्निपातिकर्मणां समुच्चयोऽपि न विरुद्ध्यत इत्युक्तम् । यत्तु पाशवदिति, एकत्वात्पाशस्यागत्या तदभ्युपगतम् । इह तु अस्ति गतिः देवताबहुत्वम् । [अतः]क्रमात् सर्वेषां साधारणः प्रैष इति ।

**॥ असन्निपातित्वात् उपरवे सन्निपातित्वम् ॥ २-३-१४ ॥**

नैतदेवं, असन्निपातित्वात् । असन्निपाती प्रैषः । सोऽर्थबहुत्वे सति नायथार्थो भवितुमर्हति । उपरवमन्त्रस्तु करणमन्त्रत्वात् सन्निपाति प्रत्युपरवं भिद्यते । एकस्मन्नुपरवे बहुत्वस्याभावात् । प्रातिपदिकार्थस्य विवक्षितत्वात् प्रत्ययार्थस्याविवक्षा संख्यायाः, कर्मादिविवक्षा चेत्यगत्या अङ्गीकृता । अस्ति पुनरिह देवानां बहुत्वावगतिः । तस्मात् सर्वेषां साधारणोऽयं प्रैष इति ।

**॥ संस्कारत्वात् द्विर्वचनेऽप्रतिषेधः ॥ २-३-१५ ॥**

यदुक्तमुत्तरयोः प्रैषाम्नानमनर्थकमिति । अत्रोच्यते । संस्कारत्वात् द्विर्वचनमविप्रतिषिद्धम् । यथा "आवह देवान् यजमानाय" इति । ब्रह्मबहुत्वपक्षवदिति वा (?)

**॥ लिङ्गाच्च ॥ २-३-१६ ॥**

लिङ्गमप्येतद्दर्शयति । देवान्यजेत्युक्त्वाऽऽह—"छन्दांसि वै देवाः, छन्दांस्येव तद्यजति । यद्बर्हिर्यजति गायत्रं तद्यजति यन्नराशंसं त्रिष्टुभं तत् यत्स्विष्टकृतं जगतीं तत्" इति देवान्यजेति प्रैषमुक्त्वा गायत्र्यादीन् देवान् विभज्य निर्ब्रुवन् प्रैषस्य साधारणत्वं दर्शयति । तस्मात् स्थितं साधारणः प्रैष इति ।

अधिकरणचिन्तायाः प्रयोजनं अवभृथेष्ट्यां "अपबर्हिषः प्रयाजान् यजति अपबर्हिषावनूयाजौ यजतीति बर्हिष्यनूयाजे प्रतिषिद्धे यदा पूर्वपक्षः तदा प्रथमार्थस्य तदभावे प्रैषस्य लोपः स्यात् । सिद्धान्ते तु साधारणवैशेषिकयोः प्रैषसमुच्चयेन । द्वितीयेऽनूयाजे देवौ यजयजेति प्रयोग इति ।

**॥ ४ ॥ एकादश प्रयाजान् यजति एकादशानूयाजान् यजतीति समशः स्वस्थाना विवर्धेरन् क्रमानुग्रहात् यथोपसदः ॥ २ - ३ - १७ ॥**

सङ्ख्याविवृद्धौ प्रयाजानूयाजाः स्वस्थाना विवर्धेरन् क्रमानुग्रहात् यथोपसदः [न] दण्डकलितवदावृत्तिः न्याय्यत्वादधिकैराद्या विक्रियेरन् ।

"आदितो वा प्रवृत्तिः स्यात्" (10.5 1) इति क्रमसङ्ख्यामात्रयोः दृष्टस्य न्यायस्यापवादः ।

**॥ ५ ॥ दशमं बर्हिरनूयाजेषु तदुत्तमस्य स्थानात् ॥ २ - ३ - १८ ॥**

अनूयाजेषु दशमं बर्हिरुत्तमस्य विकारः स्यात् । कथमिति? स्थानात्, क्रमादुत्तमविकारत्वमिति ।

**॥ प्रथमस्य वा देवतासामान्यात् तदकर्मलिङ्गमितरत् ॥ २ - ३ - १९ ॥ (सि)**

न वा एतत् क्रमादुत्तमविकारो बर्हिरिति । किन्तु देवतासामान्यात् प्रथमस्यैव विकारः । देवतासामान्यं अन्तरङ्गं, उत्पत्तिविधिशेषत्वात् देवतायाः । बहिरङ्गः क्रमसामान्यप्रयोगः कालसमुत्पन्नकर्मसमाश्रयत्वात् क्रमस्य । तस्मात् प्रथम-

---

1. R रदत्तं

विकार एव दशमः । अवशिष्टास्तूपसद्यागेन स्थानतो विक्रियेरन् । चत्वारः प्रथमस्य, चत्वारो मध्यमस्य द्वावुत्तमस्य इति अपवादविषयानालीढत्वात् । अनूयाजेषु वृत्ता कथा ।

प्रयाजेषु परं वर्तते—चतुर्थोत्तमावन्तरेण षडागन्तवः प्रयाजास्तेषां समुदायेन सर्वेषामपि विकार यथा वैकृत्यस्सामिधेन्यः[इति प्राप्ते]

॥ चतुर्थोत्तमयोर्वा स्थानात् ॥ २ - ३ - २० ॥ (सि)

कार्याः प्राकृताः प्रयाजास्तेषां न समुदायेन समुदायविक्रिया, नाप्येकैकः सर्वैर्विक्रियते । तदुक्तं-एकंवा चोदनैकत्वादिति[1] । प्रच्युतस्थानत्वाच्च न स्वस्थान-विवृद्धिः । तस्मात् चतुर्थोत्तमयोः स्थानापन्नत्वात् तद्विकारत्वमागन्तूनामिति त्रय ए[कै]कस्येति ।

॥ एककर्मणा सामिधेनीसंयोगं बादरायणः तत्र विशेषो नोपलभ्यते तदुक्तं सामिधेन्य इति ॥ २ - ३ - २१ ॥

सामीधेनीकार्यस्याहवनीयसमिन्धनस्य [अ]भेदात् [2]सर्वविकारत्वमुपपद्यते इति बादरायणो मन्यते । तस्मात् [न]समो दृष्टान्त इति ।

चिन्तायाः फलं अनुमन्त्रणेष्वावहतीति ।

॥ ७ ॥ पश्वनूयाजेषु मैत्रावरुणः प्रेष्यति स वैशेषिकस्य स्थानात् ॥ २–३–२२ ॥ (पू)

पशौ सन्ति मैत्रावरुणप्रैषाः । ते किं वैशेषिकस्य विकारा उत साधारणविकारा इति सन्देहः । किं प्राप्तम् ? वैशेषिकविकारा इति । कुतः ? स्थानात् । अध्वर्यु-प्रैषापेक्षया अभिहितो द्वितीयो वैशेषिकः[3] इत्यस्मात् क्रमसामान्यात् वैशेषिक-विकारा इति ।

ननु किञ्चित्साधर्म्यमेतत् । उच्यते । किञ्चित्साधर्म्यादपि कार्यसिद्धिं न्याय-विदो मन्यन्ते—किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यात्प्रतिषेध इति । (न्या. सू.)

॥ प्रथमस्य वा शब्दसामान्यादुभयत्र देवताशब्दः श्रूयते (साधारणस्य श्रूयते) ॥ २–३–२३ ॥ (सि)

---

1. 8-2-20
2. R सविकार
3. R. adds वदति यः

साधारणस्य बर्हिषः प्रथमस्यानूयाजस्य विकारो मैत्रावरुणस्य प्रैषः। कथं? देवतासामान्यात् उभयत्र हि देवताशब्दः समानः—देवान् यज, देवं बर्हिरिति। शब्दसामान्यं च क्रमाद्बलीयः अन्तरङ्गत्वात्। तस्मात् साधारणविकार एवेति। उत्तर-(उभय)विकारेषु उभौ ब्रूयाताम्। तदर्था चिन्ता—

उत्तरविकारेष्वनूयाजेषु उभाभ्यामिज्यासंप्रैषो वक्तव्यः; प्रकृतौ उत्तरयोर्द्विःप्रैषत्वात्। उत्तरत्र साधारणो यजिसम्प्रैषः, अध्वर्युणा प्रथम एवानूयाजे सकृद्वक्तव्यः यथापूर्वं सिद्धान्तः। उत्तरविकारेषु भेदेनाध्वर्युणा वैशेषिको यजिसम्प्रैषो वक्तव्यः। एवं सति प्रथमविकारेषु च उत्तरविकारेषु च मैत्रावरुणप्रैषप्राप्तेरवैलक्षण्यं भविष्यति। कथं? साधारणविकारा एव ह्येते प्रैषाः। एवं च सर्वेऽत्र भवन्ति वचनाद्विभज्यन्ते। इतरथा हि क्वचिद्विकारः क्वचिदविकार इति वैलक्षण्यमन्याय्यं स्यात्।

चातुर्मास्येषु[1] प्रथमविकारे इज्यासम्प्रैषः उच्यते। साधारणस्य[2] सर्वार्थत्वात् सर्वसन्निधौ प्रथमस्य प्रकृतौ साधारणः प्रयुक्तः। इह पुनः प्रथमविकाराणां सन्निधौ हि प्रयुज्यते। तत्रार्थात् यजिसम्प्रैष उच्यते। देवताशब्दोऽपि कर्मण उच्यते इति सामान्येनोक्तत्वात्। तस्मादर्थसिद्धेः॥

ननु सम्प्रैषादृतेऽर्थः सिद्ध्यति। प्रतियजि तस्यानारभ्य नियमात् तस्माद्यजेत्येवोच्येतेति। यथा उभावर्थविदो मन्यन्ते तथोत्तरयोर्विकारेषु पश्चादुभौ ब्रूयातामित्यप्रयोजनं भवति। उत्तरविकारेज्याकाले हि मैत्रावरुणप्रैषस्याविद्यमानत्वात्। कृत्वाचिन्तेयम् (तदा) पश्चनूयाजेषु मैत्रावरुण इति।

॥ ८ ॥ उपप्रेष्य होतर्हव्या देवेभ्य इति प्रैषस्य प्रैषो यावदाम्नातं शब्दपूर्वत्वात् ॥ २ - ३ - २४ ॥ (पू)

उपप्रेष्य होतर्हव्या देवेभ्य इत्याहेति किं प्रैषस्य प्रैषः उत प्रैष एवायमिति। किं प्राप्तं? प्रैषविषयोऽयमुपदेश इति। कुतः? यावान् कश्चनाम्नायः स स्वाध्याय-

---

1. चातुर्मास्येषु नवानूयाजाः आद्या अष्टौ पाशुकाः प्रैषवर्जं, पाशुकैकादशेन नवमश्च कार्यः। तत्र अष्टसु आद्य चतुर्णां प्रथमविकारत्वं तत्रापि द्वितीयतृतीयचतुर्णामपि यज यजेति द्वियजित्वं इति श्रौ-सू
2. देवान् यजेति प्रैषः सर्वानूयाजसाधारण इति

विधिना कर्मावबोधार्थः शब्दपूर्वकत्वात् कर्मणाम् । शब्दैरेव कर्मविधायकैः भवितव्यम् । एवं शब्दानामर्थवत्ता ।

॥ अध्रिगुप्रैषो वा तेनापदिश्येत यथा अमृतमसि प्राणायत्वेति हिरण्यमभिव्यनितिति इति ॥ २ - ३ - २५ ॥ (पू)

अध्रिगुप्रैषस्यायं मन्त्रः । कुतः ? प्रतीकोपदेशात् । दृष्टश्चान्तेनापि मन्त्रोपदेशः यथा "अमृतमसि प्राणाय त्वा" इति अनःप्राण इत्यस्य मन्त्रस्योपदेशः । [प्र]कृतशेषत्वं चैव भविष्यति ।

॥ प्रैषो वा व्यपदेशात् ॥ २ - ३ - २६ ॥ (सि)

प्रैषेण व्यपदेशः स्यात् । नायं व्यपदेशस्यान्तेनोपदेशः किन्तु प्रैष एवायम् । यतः एनमध्वर्युराह - उपप्रेष्य होतर्हव्या देवेभ्यः इति । यमध्वर्युणा होता प्रेष्यते सोऽन्वाह अजैदग्निः असनद्वाजन्नि इति सोऽन्वाह इति होतारं प्रैषार्थप्रतिपत्तारं दर्शयति । तस्मात् प्रैष एवायमिति ।

॥ ९ ॥ होतारं ब्रूयाच्छब्दसामर्थ्यात् ॥ २ - ३ - २७ ॥ (पू)

उपप्रेष्य होतर्हव्या देवेभ्यः इत्ययमध्वर्युप्रैष इति स्थितम् । सोऽध्वर्युः किं होतारं प्रेष्यति किं वा मैत्रावरुणमिति सन्देहः । किं प्राप्तम् ? होतारमिति । कथं ? शब्दसामर्थ्यात् । होतर्हव्या देवेभ्य इति होतृशब्दः श्रुत्या होतारं ब्रूयात् लक्षणया मैत्रावरुणम् । श्रुतिश्च लक्षणातो गरीयसी । तस्मात् श्रुतिसामर्थ्यात् होतारमेव प्रैष्यमिति प्राप्ते :—

मैत्रावरुणं वा व्यपदेशात् ॥ २ - ३ - २८ ॥ (सि)

उत्तरस्यान्ते होता श्रूयते प्रैषान्ते होतृशब्दश्रवणात् होतुरन्यस्योपप्रैषव्यपदेशात् होतृशब्दोऽयं गौणो मैत्रावरुणे, यथा अध्वर्युशब्दः 'अध्वर्यून् वृणीते', इत्यत्र । तस्मात् मैत्रावरुणमेव प्रेष्येदिति ।

॥ लिङ्गाच्च ॥ २ - ३ - २८ ॥

"यदध्वर्युर्होतारमुपप्रेष्यति अथ कस्मान्मैत्रावरुण उपप्रैषं प्रतिपद्यते" इति मैत्रावरुणं प्रैषार्थप्रतिपत्तारं दर्शयति ।

॥ १० ॥ उक्थशा यज सोमस्येत्यन्येषां स्तुतशस्त्रवतां सोमानामाह अनुब्रूहि प्रेष्येति[1] होतारमाहेत्युभयलिङ्गानां शब्दसंयोगात् ॥ २-३-२९ ॥ (पू)

उक्थशा यज सोमस्येत्यन्येषां स्तुतशस्त्रवतां सोमानामाह अनुब्रूहि प्रेष्येति होतारमाह इति । किं स्तुतशस्त्रवत्सोमविषय एवायं प्रैषः उत सर्वविषय इति सन्देहः । किं प्राप्तम् ? उभयलिङ्गानामिति, कुतः ? शब्दसंयोगात् । ये स्तोत्रवन्तः शस्त्रवन्तश्च सोमास्तेष्वयं प्रैषः शब्दसंयोगात् स्तुतशस्त्रवत्सोमानाहेति ।

॥ शस्त्रवतां च नानार्थानां समासवचनम् यथा उक्थवैयाकरणानानयेति शब्दः स्तुवतां आञ्जस्यात् ॥ २-३-३० ॥ (सि)

पृथगर्थयोर्हि समासवचनमेतत् यथा केवलौक्थिकेषु केवलवैयाकरणेषु चानेतव्येषु औक्थिकवैयाकरणान् समस्य प्रतिपाद्यते । तद्वदत्रापीति ।

अथ वा सर्व एव स्तुतशस्त्रवन्तः सोमाः यान्यपि हि केवलशस्त्रवन्ति कर्माणि तान्यपि स्तोत्रवन्ति पवनोत्थानीति वचनात्, तस्मान्न केवलानीति ।

॥ ११ ॥ बहुशब्दो गणेषु शब्दसंयोगात् शेषमितरे चतुरवत्तम् ॥ २-३-३१ ॥ (सि)

उक्थशा यज सोमानां इत्यन्येषां स्तुतशस्त्रवतां सोमानाहेति श्रूयमाणे सन्देहः- किं सोममात्रे निवेशः उत गणेष्विति, किं प्राप्तम् ? प्रातिपदिकार्थविवक्षायां सोममात्रे निवेश इति प्राप्ते ब्रूमः—बहुशब्दो गणेषु, गणेष्वेवास्य निवेशः यज सोमानामिति प्रत्यक्षश्रुतेर्विवक्षितार्थत्वात् अविवक्षाकारणाभावात् प्रत्ययार्थस्य प्रधानत्वात् । तस्माद्गणेष्वेवात्र निवेशः अन्यत्रैकत्वाभावे । यथा जमदग्निषु पञ्चावत्तं अन्यत्र चतुरवत्तम् ।

---

1. मा. दी. प्रेष्येतिलिङ्गानां

॥ १२ ॥ तां पुरोऽध्वर्युर्विभजति मैत्रावरुणः पश्चादिति देशतः कालतो वा उभयस्य भागित्वात्[1] ॥ २-३-३२ ॥ (पू)

यावानदश्वसुत्यायां यजमानो मैत्रावरुणप्रदानं प्रति वाचं यच्छति—ततश्चोदिते मैत्रावरुण ऋत्विग्भ्यो वाचं विभजति होतर्यज नेष्टर्यज ब्रह्मन् यज अच्छावाक यजेत्युक्त्वा तां पुरोऽध्वर्युर्विभजति मैत्रावरुणः पश्चात् [ इति ] श्रूयमाणे सन्देहः किं देशतः कालतो वा अनियमः उत देशत एवेति ।

किं प्राप्तम् ? पुरः पश्चादिति देशतः कालतो वा एष वादः स्यात् 'सह वषट्कारेणाहवनीयं गच्छति' इति गमनसंबन्धात् उभावप्यर्थौ यत्र भागिनौ [कालतो] देशतो वा - 'तां पुरोऽध्वर्युर्विभजति मैत्रावरुणः पश्चात्' इति ।

॥ देशतो वैष वादः स्यात् वषट्कारेणाहवनीयं गच्छतीति गमनसंबन्धात् ॥ २-३-३३ ॥ (सि)

देशवाद एवायम् 'गङ्गां गच्छति' 'पाटलिपुत्रं गच्छति' इति देशवादवत् । तस्मादाहवनीयसमीपेऽध्वर्युर्विभजति सदसि मैत्रावरुणो विभजेत् ऊर्ध्वकालो मैत्रावरुणकालात् प्रातस्सवनोत्तरकालः । उत्तरयोस्सवनयोः पश्चाद्धि प्रस्थिता याज्या ऋतुयाजेभ्यः । तेष्वेव मैत्रावरुणो विभजति उत्तरकालं पूर्वस्मादध्वर्युकालात पूर्वमुत्तराभ्यां इति ।

॥ १३ ॥ ऋतुग्रहणेषु अध्वर्युः समाख्यानात् ॥ २-३-३४ ॥ (पू)

ऋतुग्रहेषु अध्वर्युर्विभजेत् मैत्रावरुणो वेति सन्देहः समाख्यानादध्वर्युर्विभजेदिति प्राप्ते ब्रूमः ।

॥ ऋतुग्रहे मैत्रावरुणो विभजते ॥ २-३-३५ ॥ (सि)

तेषु अत्र प्रैषास्समाम्नायन्ते असौ यजासौ यजेत्येव । तस्मात् प्रैषाम्नानसामर्थ्यात् मैत्रावरुण एव विभजेत् अन्यत्राध्वर्युरेव विभजेत् समाख्यानात् शेषेऽध्वर्युरित्येवं होतर्यजेति ।

---

1. उभयभागित्वात्-मा.दी

॥ १४ ॥ पुनरभ्युन्नीतेषु मैत्रावरुण उच्येत प्रकरणात्
तस्माद्धोतृशब्दो यथा यदप्रतिरथं द्वितीयो
होतान्वाहेति[1] ॥ २ - ३ - ३६ ॥ (पू)

पुनरभ्युन्नीतेष्वेव[2] किं मैत्रावरुण उच्येत आहोस्वित् होतैवेति। किं प्राप्तम्? अध्वर्युणा मैत्रावरुण उच्यते। कुतः? प्रकरणात् प्रकृतोऽसाविति, होतृशब्दश्च तस्मिन् युज्यते। सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तहोत्राः प्राचीर्वषट् कुर्वन्तीति। यद्वा विन्दति यदप्रतिरथं द्वितीयो होतान्वाहेति।

ननु च भक्त्या मैत्रावरुणे होतृशब्दो भवति। सत्यम्। मुख्यस्य मैत्रावरुणेन प्रेषितत्वात् तत्रासंभवात् भक्तिः कल्प्यते। ननु च तस्यापि प्रैष आम्नातः प्रशास्तर्यजेति। एकार्थास्तु विकल्पेरन् इति विकल्पो भविष्यति। तस्मान्मैत्रावरुण एवोच्येतेति प्राप्ते ब्रूमः :—

॥ होता वाऽग्निष्टोमचमसेषु शब्दसंयोगात् शेषोऽनारभ्यवादः
तद्व्याख्यातम् ॥ २ - ३ - ३७ ॥ (सि)

सर्वेषु चमसेषु सवनमुखीययागेषु होतर्यजेति होतैवोच्यते। शब्दसंयोगात् श्रुति[3]संयोगादित्यर्थः। होतृशब्दःलक्षणया मैत्रावरुणे; श्रुतिश्च लक्षणातो गरीयसी। क्लेशश्च न भविष्यति।

ननु च मुख्योऽन्यत्र मैत्रावरुणेन प्रेषित इति नित्येषु ग्रहेषु मध्यतः कारिणां चमसेषु मुख्यं प्रेष्यति—आदित्याश्च पुनरभ्युन्नीय.... भूयादित्युक्तम्। अपि चाध्वर्युः प्रेष्यत्यधर्माणः ते चमसा इति .... आध्वरोऽपि प्रयोग उपलभ्यते। तस्माद्धोतर्यजेति तेषु सहहूयमानेषु अध्वर्युणा होतैवोच्यते।

शेषोऽनारभ्यवाद इति तथान्येषां तद्व्याख्यातम्। अधिकारसामर्थ्यादप्युक्तश्शेषः। शेषः इतरः यथा चतुरवत्तमिति।

---

1. सद्वषट्कारेणाहवनीयं गच्छतीत्यत्र पुनरभ्युन्नीतेषु चोक्ता अतः स्तुतशस्त्रवता उक्थशायजेति प्रैषाम्नानात्। —मूले अधिकम्
2. तत्र अध्वर्युकर्तृकप्रैषगणमध्ये होतर्यज प्रशास्तर्यजेति श्रुतौ प्रैषौ। तत्रेत्यर्थः।
3. A & R read श्रुतिसंयोगात्।

अपरः सूत्रार्थः—

॥ होता वाऽग्निष्टोमचमसेषु शब्दसंयोगात् ॥ २ - ३ - ३७ ॥

अग्निष्टोमचमसा इति सर्वचमसेषु तास्सवनमुखीया अभिप्रेताः। तेषु होता अध्वर्युणोच्येत। एवं मुख्यार्थेन होतृशब्दस्संयोक्ष्यते।

॥ शेषोऽनारभ्यवादस्तद्व्याख्यातम् ॥ २ - ३ - ३७ ॥

न चैतदस्ति यदुक्तं; मुख्यो ह्यत्र मैत्रावरुणेन प्रेष्यते (तस्मात्) होतर्यजेत्यनेन। अनारभ्यवादः शेषविनिवेशेन गौणो मैत्रावरुणेन, तद्व्याख्यातम्, "अव्यक्तश्शेष" इति। दृष्टश्च गौणोऽपि प्रयोगः यथा अग्नौ तिष्ठतीति। समानलिङ्गे चास्य समानकर्तृकेन प्रशास्तर्यजेत्यनेन (विकल्पेन) विकल्पो युक्तः, प्रस्थितशेषलिङ्गेन असमानकर्तृकेन च समानकार्थयोर्वचनात् समन्वयो युक्तः।

॥ १५ ॥ आश्रुतप्रत्याश्रुते संप्रैषश्चानुवषट्कारे न विद्यते अनुवषट्करोतीति तु विप्रकर्षे नोपपद्यते ॥ २–३–३८ ॥ (पू)

किमाश्रावणादयोऽनुवषट्कारे भवेयुः न वेति विचार्यते। [न]भवेयुः अनुशब्दस्य (अ)विप्रकर्षेऽनुपपत्तेः। यदि पुनराश्रावणादयो भवेयुः अनुशब्दो विरुद्ध्येत, तस्मान्नाश्रावणादयोऽनुवषट्कारे भवेयुरिति।

विप्रतिषिद्धास्त्वेकेषां नाश्रावयतीति ॥ २–३–३९ ॥

आश्रावणादयोऽनुवषट्कारे प्रतिषिद्ध्यन्ते। प्रतिषेधश्च प्राप्तिपूर्वकः तस्मात् सन्त्याश्रावणादयोऽनुवषट्कार इति।

न, नित्यानुवादो वा न्यायसन्निधानात् ॥ २–३–४० ॥ (सि)

नैवेदमाश्रावणादयोऽनुवषट्कारे भवेयुरिति। न्यायसन्निधानात्। सन्निहितो न्यायः अनुशब्दोऽत्र विप्रतिषिद्ध्यत इति। न चायं विप्रतिषिद्धः नित्यानुवादश्रुतेः न्यायस्यात्राविशेषात्। "सोमस्य यज" "घृतस्य यज" "अग्नेः पात्नीवतस्य यज" इत्याम्नाताः। एतैस्तत्र संप्रैषाः यथाम्नानमेव भवेयुः वाचनिकत्वादिति।

॥ इति सङ्कर्षकाण्डभाष्ये द्वितीयाध्यायस्य तृतीयःपादः ॥

---

# ॥ चतुर्थः पादः ॥

## ॥ १ ॥ देवतायोगेन प्रदानात्मके चोद्यमाने आहुतिर्यथा लोके ॥ २ - ४ - १ ॥ (सि)

'आग्नेयोऽष्टाकपाल' इत्यादौ किं सङ्कल्पमात्रेणैव यागः उत प्रदानान्त इति। किं प्राप्तम्? सङ्कल्पमात्रेणैवेति। कथं? संकल्पमात्रस्य यागत्वात् देवतोद्देशेन कृते द्रव्यपरित्यागात्मके सङ्कल्पे कृतं चोदितमिति न प्रदानमादर्तव्यमिति प्राप्ते ब्रूमः:—

देवतासंयोगेन "आग्नेयोऽष्टाकपाल" इति चोद्यमानं प्रदानं आहुतिः यथा देवदत्ताय दातव्यमित्युक्ते तत्प्रदानं गम्यते, एवमाहवनीयादिदेशे अवदानावत्त-द्रव्यसम्प्रापणं याग इति। तदुक्तं—यजतिस्तु द्रव्यफलभोक्तृसंयोगादिति पू. मी ॥ २ - ३ - १४ ॥

## ॥ लिङ्गाच्च ॥ २ - ४ - २ ॥ (गु. सू.)

'उत्तरार्धे जुहोति' 'मध्येऽग्नेः[1] आज्याहुतीः पुरोडाशाहुतीश्च जुहोति' इति। तत्र जुहोतिचोदनात् आहवनीयसम्बन्धः प्रतीयते। तस्मात् प्रदानमिति सिद्धम्। अस्यार्थस्य तन्त्रस्थाने प्रतिपादितत्वात् पुनरुक्तत्वमिति। पुन[र्वचन] मुत्तरविवक्षार्थमिति।

## ॥ २ ॥ अदेवतासंयोगेन चोद्यमानेऽर्थगृहीता देवता तत्संयोगे जुहोतिशब्दो यथा भोजनशब्दो मनुष्यसंयोगे ॥ २-४-३ ॥ (सि)

अनुपात्तदेवता यत्र यजतिजुहोतिचोदना यथा 'उपांशुयाजमन्तरा यजति' 'तूष्णीमेव जुहोति' इत्यादि तत्र तत्संयोगे अनुपात्तदेवताकतया विनैव देवतया कर्म कर्तव्यं उत केनचित्प्रकारेण देवताऽङ्गीकर्तव्येति। विनैव देवतया तत्कर्म कर्तव्यम्। कुतः? देवताचोदनाभावात् उपांशुयाजमन्तरा यजतीति नात्र देवता श्रूयते। 'विष्णु-रुपांशु यष्टव्य' इत्येवमादीनां देवतापरत्वं, उक्तार्थपरत्वात्। न चाध्याहा-रादिभिः कल्प्यमाना देवता चोदिता स्यात्। न चतुर्थ्यादिकं किञ्चित् देवता-

---

2. A & R मध्येग्ने

प्रमाणमस्ति। असत्यां देवतायां यागासम्भव इति चेत् सामान्येन त्यागांशस्य विद्यमानत्वात्। तस्मात् विनैव देवतया द्रव्यमुत्स्रष्टव्यमिति प्राप्ते ब्रूमः:—

अदेवतासंयोगेन चोद्यमाने कर्मण्युपांशुयाजादौ यजतिजुहोतिचोदनयाऽर्थगृहीता देवता। यथा भोजनचोदनायां मनुष्ययोगस्सर्वत्राख्यातशब्दार्थः समाक्षिप्ताशेषकारककलाप एव वर्तते।

यथाचोक्तं पतञ्जलिना—पचतीत्युक्ते नियमार्थोऽनुवादः काष्ठैरित्यादि। पुरुषव्यापारेण सामान्येन सप्तकारकाक्षेपः। यजतिचोदनायां (पवन)[यजि]धात्वर्थेनापि देवताक्षेपः। देवतोद्देशेन द्रव्यत्यागस्य यागत्वात्।

यत्पुनरिदमुक्तम्—अचोदितत्वात् देवताऽभाव इति। **नैतदेवम्।** धातुचोदनया[1] सामान्येन चोदितत्वादिति विशेषतो विप्रतिपत्तिः। मान्त्रवर्णिके मन्त्रसंयोगेन चोद्यमाने योऽर्थो मन्त्रैःश्रूयते सा देवता प्रदानसंयोगात्। न ह्यन्यत् प्रत्यक्षं विद्यते। यत्र मन्त्रसंबन्धं कर्म चोद्यते—यथा "प्रजापते न त्वदेतान्यन्यः इति तस्यैव ग्रहैर्जुहुयात" इति तत्र मन्त्रार्थः प्रजापतिर्देवतात्वेनाभिसंबध्यते। नह्यन्यत् प्रत्यक्षविहितदेवतात्वे कारकमस्ति। सत्यपि निराकर्तृसंप्रदानत्वे देवताकारकस्य सामान्येन क्रियाक्षितस्य प्रकारान्तरेण विशेषप्रतिपत्तिरिति।

॥ ३ ॥ **सूक्तवाक एव याज्या प्रस्तरप्रहरणमाहुतिरिध्मः प्रथममाहुतीनां हूयत इत्येतेन व्याख्यातम् ॥ २-४-४ ॥ (पू)**

इध्मप्रस्तरयोः किमाहुतित्वेनारादुपकारकत्वं उत सामवायिकत्वं इति सन्देहः किं प्राप्तम्? आरादुपकारकत्वं "सूक्तवाक एव याज्या प्रस्तर आहुतिः" इति। इज्यतेऽनयेति याज्या। मान्त्रवर्णिक्यो देवताः प्रस्तर आहुतिः "इध्मः प्रथम आहुतीनामित्याहुः" (नमश्शिवायेति त्ववगम्यत इति?) इध्मे मान्त्रवर्णिकी देवता द्रव्यं इध्मः। तस्मात् प्रयाजादिवदारादुपकारकत्वमिति प्राप्ते ब्रूमः:—

॥ **प्रशंसा वा संस्कारः प्रस्तरस्य सन्निधानात् ॥ २-४-७ ॥ (सि)**

(धात्वर्थ इव) काष्ठे अग्निसंबन्धे अग्निवृद्ध्यर्थः प्रत्यक्षो गम्यते। अतोऽत्रापि सामिधेनीनिराहवनीय एवाभिधीयते। न देवताग्निः। देवताकर्मभिरपि ज्वलनस्य

---

1. R. मयातूचो etc.

संस्तुतिः दृष्टा, तद्वदुपचारात् । दधिक्रावनदीवच्च सरस्वती स्तूयते इति । तस्मादुभयोरपि सन्निपातित्वमेवेति ।

यदा चैतदेवं तदा "उपदेशो वा याज्याशब्दो हि नाकस्मात् (3-2-12) इति कृत्वाचिन्ता सा तन्त्रे । इध्मस्य निशीष्टौ प्रयाजवत् प्रसङ्गात् कार्यसिद्धौ न भेदेन[2] क्रिया यदा पूर्वः पक्षः । यदा तर्हि सिद्धान्तः तदाऽग्निसमिन्धनस्य भेदेनैव विवक्षितत्वात् भेदेनैव क्रियेतेति । मन्त्रा न किंचित्समाम्नायन्ते ।

॥ ४ ॥ अज्यानीरेता उपदधातीत्याग्रयणं निरुप्यैता आहुतीरिति तत्संयोगपृथक्त्वम् ॥ २–४–५ ॥

मन्त्राणां तुल्यसन्निधानात् तदग्नौ आग्रयणे च वाचनिको मन्त्राणां सन्निधानादनेकत्र विनियोग इति भूतार्थवादविनियोगपरं सूत्रम् । नानेनाधिकरणं शक्यं कर्तुमिति ।

॥५॥ चित्रया यजेत पशुकाम इत्युक्त्वा अथैता आहुतीर्जुहोत्येते वै देवताः- पुष्टिपतयः तयैवास्मिन् पुष्टं दधाति अग्ने गोभिर्न आगहि इन्दो पुष्ट्या जुषस्व नः इन्द्रो धर्ता गृहेषु नः इत्येतैर्मन्त्रैर्जुहुयात् आनन्तर्यात् पुष्टिशब्दश्चोभयत्र श्रूयते ॥ २-४-६ ॥

'अथैता आहुतीर्जुहोति' इत्यत्र प्राकरणिका मन्त्रा अनियमेनोपादेयाः उत पुष्टिलिङ्गा इति । प्रकरणादनियमे प्राप्ते—

उच्यते । एत एव पुष्टिलिङ्गाः । कथं क्रमलिङ्गाभ्यां, एते वै देवताः पुष्टिपतय इति पुष्टिलिङ्गमन्त्रनियम इति । इन्दो पुष्ट्या जुषस्वनः इति च ।

॥ ६ ॥ दर्विहोमे सकृद्गृहीतमर्थापत्तेः ॥ २ - ४ - ७ ॥

किमनियमः सकृत् असकृद्वा गृहीतेन दर्विहोमाः कर्तव्याः इति सन्देहे नियमकारिणोऽसम्भवादनियमे प्राप्ते ब्रूमः ।

दर्विहोमेषु सकृद्गृहीतमाज्यं भवेत् । कथं ? अर्थापत्तेः अर्थो हि ग्रहणं नासकृद्गृहीतेन दर्विहोमाः कर्तव्या इति ।

---

1. पू. मी. 3-2-21
2. A देवेन

॥ लिङ्गाच्च ॥ २-४-११ ॥

चतुरुन्नयति द्विर्जुहोति अथ क द्वे आहुती भवत इति चतुर्षु चतस्र आहुतीः [सङ्ख्याय दर्शयन्] प्रत्याहुति पृथग्ग्रहणं दर्शयति ।

॥ ७ ॥ जणेषु चतुर्गृहीतं समवायाद्यथा ध्रुवायाः ॥ २-४-१२॥ (पू)

आहुतिगणेषु किं तन्त्रमाज्यग्रहणं उत भेदेनेति सन्देहः । किं [प्राप्तम् ?] तन्त्रमिति । कथं ? समवायादाहुतीनाम् । तासां पुरस्तादगृह्यमाणविशेषत्वात् तन्त्रं स्यात् यथा ध्रुवायां सर्वार्थग्रहणमिति प्राप्ते ब्रूमः—

॥ प्रत्याहुति वा प्रदानसंयोगात् ॥ २-४-१३ ॥ (सि)

प्रत्याहुति[इष्येत] [1]आज्यग्रहणं ; प्रदानसंयोगात् गृहीतदेवतोद्देशेन[अ] प्रदायान्यत् ग्रहीतुं न शक्यते । प्रत्याहुति गृह्यमाणस्येति ध्रुवाया[यां] ग्रहणं आज्यसंस्कारत्वात् तन्त्रमेव स्यादिति ।

॥ तत्र समासे वचनं क्रियेत कर्मविभागात् ॥ २-४-१४ ॥

तत्र तेषु दर्विहोमेषु बहूनां देवतानामेकस्मिन् पात्रे गृह्येताज्यं यदि गृह्येत [हविषः] संसर्गात् कार्यं इति । (ग्रन्थपातः)

॥ ८ ॥ समिदाधानं न विद्यतेऽनाम्नानात् ॥ २-४-१५ ॥ (पू)

दर्विहोमेषु समिदाधानं कर्तव्यं न वेति विचार्यते । किं प्राप्तं ? न कर्तव्यमिति । कुतः ? न ह्येवंजातीयकेषु स्वार्थेषु वचनमन्तरेण प्रवृत्तिर्भवति । न च दर्विहोमेषु अपूर्वत्वात् अन्यतः सर्वप्राप्तिः । तस्मान्न तेषु समिदाधानम् । इति प्राप्ते ब्रूमः—

॥ समिधं प्रत्याहुति दर्शयति ॥ २-४-१६ ॥ (सि)

अग्निहोत्रे समामनन्ति "यदेकां समिधमाधाय द्वे आहुती जुहोति अथ कस्यां समिधि द्वितीयामाहुतिं जुहोति" इति एतस्यां समिधि अप्राप्तायां द्वितीयामाहुतिं कस्यां समिधि जुहोतीति ब्रूयात् इति प्रत्याहुति समिधमुचितां दर्शयति । तदेतल्लिङ्गम् ।

---

1. Mss. read प्रत्याहती द्वेत्याज्य.

कस्यां समिधि प्राप्तायां द्वितीयामिति अग्निहोत्रविषयत्वात् "अग्निहोत्रे द्वे समिधौ कार्ये आहुती" इति विहितयोरेकं परित्यजन् "तस्यां द्वितीयामाहुतिं जुहुयात् द्वे ह्येते आहुती" (इव)[इति] आहुतिद्वित्वप्रयुक्ते समिधौ ब्रुवन् तद्विषयौ समिधौ दर्शयति । न चार्थवादत्वेन प्रकृतविधिशेषत्वे संभवति अविहितस्य[1] लिङ्गतः प्रकल्पनं न्याय्यम् । तस्मादग्निहोत्रे एकस्मिन् नान्येषु दर्विहोमेषु इत्येतत्सूत्रमुल्लङ्घ्य[2] पूर्वपक्ष एवाङ्गीकृतः कैश्चित् ।

अत्रोच्यते—"कस्यां समिधि द्वितीयामाहुतिं" इति (न)सामर्थ्यादापन्नम् समिधा विना[ना]हुतिर्होतव्येति । सामर्थ्यं च शब्दैकदेशः । तस्मात् श्रुत्येकदेशः स इति । न च सामर्थ्यादाहुतिमात्रे समायन्ती समित् अग्निहोत्रेण विशेष्टुं शक्यते । प्रकरणस्याविशेषकत्वात् । लिङ्गं द्विविधम्-द्योतकं सामर्थ्यात्मकं च । द्योतके न्यायान्तरापेक्षा । सामर्थ्यात्मकं तु प्रमापकमेव भवति । अपि चैकेषामग्निहोत्रे एका समित् तदपेक्षं वचनं औचित्यात द्वे समिधौ द्वे आहुती भवत इति । यस्मात द्वे समिधाविति ब्रुवन् प्रत्याहुति समिधं दर्शयति तस्मात दर्विहोमेषु समिदाधानं कर्तव्यमेवेति ।

॥ ९ ॥ पाकयज्ञशब्दस्सर्वयज्ञानामविशेषात् यथाऽऽहुतिशब्दः ॥ २-४-१७ ॥ (पू)

किमयं पाकयज्ञशब्दः लौकिकवैदिकयज्ञमात्रस्य वाचकः उत दर्विहोमानामिति । यदा दर्विहोमानां तदा किं सर्वदर्विहोमानामुत लौकिकानामेवेति ।

किं प्राप्तम्? पाकयज्ञशब्दः सर्वेषां यज्ञानां नामधेयमिति । कथं? अविशेषात् । नहि विशेषः कश्चिदध्यवसीयते अस्यैतन्नामधेयमिति यथाऽऽहुतिशब्दः सर्वाहुतीनामेवं पाकयज्ञशब्दोऽपीति ।

॥ केषांचिद्व्यपदेशात् ॥ २-४-१८ ॥ (सि.)

'मनुर्वै पाकयज्ञीय आसीत् स इमं इतरं यज्ञमपश्यत्" इति इतरव्यपदेशात् कस्यचिदेव यज्ञस्य वाचकः पाकयज्ञशब्द इति ।

---

1. R. reads अवहितस्य
2. R. reads सूत्रमुल्लिख्य

॥ १० ॥ सर्वदर्विहोमानां स्याल्लिङ्गसंयोगात् ॥ २-४-१९ ॥ (सि)

पाकमभिनिर्वर्त्य यज्ञः पाकयज्ञः सोमयागादयमन्य इति [प्राप्ते] विज्ञायते अन्यो दर्विहोमः लिङ्गसंयोगात् "यद्वै चातुर्मास्यानां पाकयज्ञः सैव तदेषां पशव्यं गृहमेधीयो ह्येषां पाकयज्ञे[ज्ञो]नेध्माबर्हिर्भवति न सामिधेनीरन्वाह न प्रयाजा इज्यन्ते" इतीध्मादीनामिष्टयङ्गानामभावे पाकयज्ञत्वं ब्रुवन् दर्विहोमेषु पाकयज्ञ-शब्दं दर्शयति। तस्मात् दर्विहोमः पाकयज्ञ इति।

॥ ११ ॥ सर्वेषामविशेषात् ॥ २-४-२० ॥ (पू)

लौकिकवैदिकानां सर्वेषां दर्विहोमानामेषा संज्ञा स्यात् अविशेषात्।

॥ लौकिकानां वा तेषां एतन्नामधेयम् ॥ २-४-२१ ॥ (सि)

लौकिकानां दर्विहोमानामेषा संज्ञा स्यात् लोके द्विरेतेष्वेव प्रयोगदर्शनात् "शिबीनां च पाकयज्ञः उशीनराणां पाकयज्ञ" इति।

॥ लिङ्गाच्च ॥ २-४-२२ ॥

लिङ्गमपि लौकिकानामेव दर्विहोमानां पाकयज्ञं[ज्ञशब्दं]दर्शयति "यदाऽन्यस्य हविषः स्रुच्यवद्यति सर्वमेव तदग्नौ जुहोति। अथ कस्मात् द्विर्जुहोति द्विर्निमार्ष्टि द्विःप्राश्नाति उत्सृज्याचामति निर्लेढीति तदस्य पाकयज्ञस्य" [इति]। अतः पाकयज्ञस्यैवायं धर्म इति व्यपदेशात्[न] वैदिकमग्निहोत्रं पाकयज्ञसंज्ञमिति।

॥ १२ ॥ धर्मोपदेशो विप्रतिषेधात् यथावदेतत् ॥ २-४-२३ ॥ (सि)

पाकयज्ञानां वा अनया श्रुत्या धर्म उपलभ्यते।[1] यदि पुनर्नोपदिश्येरन् एषा श्रुतिर्विप्रतिषिध्येत। तेनैषा श्रुतिरुभयकारिणी "यद्येतां नालभेत वायव्यस्यैव शिर उपदध्यात्" इति। पक्षे पश्वनालम्भं शिरउपधानं चोभयमेषा श्रुतिः [प्रापयति] एवमेषा श्रुतिरगत्या उभयकारिणी।

यदि पुनः शास्त्रान्तरोन्नीता वा 'द्विर्जुहोति' इत्यादीनां धर्माणां केषामपि पाकयज्ञेषु प्राप्तिः स्यात् (तस्मात्)[तदा]तस्य पाकयज्ञस्यैव इति श्रुतिः यथाप्राप्तानु-वादी[दिनी]भवति न विप्रतिषेधाद्विकारत्वायेति।

---

1. अत्र ग्रन्थपातः स च "उत तेषां सन्निपातिभिरङ्गैः नैराकाङ्क्ष्यमिति सन्देहे सन्निपात्यङ्गैरेव नैराकाङ्क्ष्यमिति प्राप्ते ब्रूमः। द्विर्जुहोति इत्यादिभिः अङ्गानि।" इति ऊह्यते

आधारं प्रकृतिं प्राह दर्विहोमं तु[मेषु]बादरिः ।
अग्निहोत्रं तथाऽऽत्रेयः काशकृत्स्नस्तु पूर्णताम् ॥

तस्मात् अनुवाद एवेति ।

॥ १३ ॥ प्राचीनप्रवणे यजेतेत्यधिकरणनिर्देशः स्यात् ॥ २-४-२४ ॥ (सि)

"प्राचीनप्रवणे वैश्वदेवेन यजेत" इति किमयं अग्निविकारः उत विहारविकारदेशोपदेश इति संशये किं प्राप्तम्? अग्निविकार इति। प्राचीनप्रवणे यजेतेत्यधिकरणनिर्देशः स्यात् अन्तरङ्गत्वात् यथा "पदे जुहोति" इत्येवमग्निविकारः एवमत्रापीति प्राप्ते ब्रूमः:—

प्राचीनप्रवण इति विहारदेशोपदिदिक्षा न देशोऽग्निविकारः। कथमिति? देशोपदेशसरूपत्वात् वचसः। प्राचीनप्रवण इति देशो विधीयते न होमाधिकरणम्। यथा पर्वतान्ते यजत इति। एवमत्रापि। केचित्तु कार्यसामान्यस्य आहवनीयविकारं मन्यन्ते। तदयुक्तम्। आहवनीयादिकार्यस्य शास्त्रैकसमधिगम्यत्वात्। तदुक्तं—न देवताग्निशब्दक्रियमन्यार्थसंयोगात् इति।

॥ लिङ्गाच्च ॥ २-४-२५ ॥

यदीदमग्निविकारः स्यादाहवनीयो न दृश्येत। दृश्यते तु "यजमानो वा एककपालः स्वर्गो लोक आहवनीयः यदेककपालमाहवनीये जुहोति यजमानमेव स्वर्गं लोकं गमयति" इति।

॥ १४ ॥ पदे जुहोति वर्त्मनि जुहोति वल्मीकवपायां जुहोतीत्येतेन व्याख्यातम् ॥ २-४-२६ ॥ (पू)

पदादिरग्निदेशः उताग्निविकार इति। किं प्राप्तं? पूर्वेण न्यायेन देशविकार इति प्राप्ते ब्रूमः:—

॥ अग्निविकारा वा जुहोतिसंयोगेन चोद्यमाने अर्धशब्देन विधीयन्ते यथा उत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायेति देशशब्देन विधीयन्ते ॥ २-४-२७ ॥ (सि)

वाशब्दात् पक्षो विपरिवर्तते। न पदादिभिर्देशो विक्रियते। किन्त्वग्निविशेषविधानात् आहवनीयादिविधेस्सावकाशत्वात् जुहोतियोगात् प्रयोगशब्द-

संयोगात् अर्थशब्देन विधीयन्ते इति। यजतेरधिकार्थप्रापकेण जुहोतिशब्देन विधीयमानस्य अधिकरणविकारत्वं ऐक्षिष्ट हि—यथा उत्तरार्धे जुहोति दक्षिणार्धे जुहोतीत्यादौ। तद्वदत्रापि जुहोतिशब्देनासेचनं गम्यते। तस्य चाधिकरणत्वमग्नेः। पदादयोऽपि तत्र श्रूयन्ते। तस्मादग्निविकार इति। कार्यापत्तेश्चाग्निधर्मत्वात् पदादीनाम् इति। "चतुष्पथे जुहोति" इति विधाय एष वा अग्नीनां पड्वीशो नाम अग्निवत्येव जुहोति इति चतुष्पथस्य अन्येन प्रकारेणाग्निमत्तां ब्रुवन् पदादीनामग्नि-विकारत्वं द्योतयति।

पूर्वेणास्य लिङ्गं पुनरुक्तं मन्यमानाः अस्य सूत्रस्यापरं पाठमाहुः—

**॥ १४ ॥ चतुष्पथे जुहोतीत्यनेन व्याख्यातम् ॥ २-४-२८ ॥ (पू)**

अस्मिन्नयाये अधिकरणातिदेशार्थं सूत्रम्। पूर्ववदत्र पक्षोपन्यासः विकार-श्चेति। "चतुष्पथ एकोल्मुकमुपनिधाय जुहोति" इति (इत्येकेषां विकल्पः।) विप्रतिषेधात् केवलचतुष्पथे होतव्यं एकोल्मुके वा इति विकल्पः उतोल्मुकमुपनि-धायैवेति।

किं प्राप्तम्? विकल्प इति। कुतः? विप्रतिषेधात् श्रुत्योरेकार्थतयैव। उल्मुकोऽप्यग्निः पड्वीशोऽप्यग्निरेव। अतः तुल्यार्थत्वात् विकल्प एवेति प्राप्ते ब्रूमः—

**॥ प्रशंसा वा अग्निवत्येव जुहोतीति यथा ब्राह्मणवान् ग्राम इति ॥ २-४-३० ॥ (सि)**

सत्स्वप्यन्येषु ब्राह्मणवत्सु ग्रामेषु योऽनेकब्राह्मणवान् सोऽभिधीयते ब्राह्मण-वानिति। एवमत्रापि प्रशंसार्थत्वमिति।

**॥ १५ ॥ प्रत्यञ्चोऽवभृथेन चरन्तीति प्राङ्मुखाः कर्माणि कुर्युः तद्व्याख्यातम् ॥ २-४-३१ ॥ (सि)**

किं विहारस्य [1]प्रत्यङ्मुखतोच्यते [उत कर्तॄणामिति] किं प्राप्तम्? प्रत्यञ्चो-ऽवभृथेन चरन्तीति। प्रत्यङ्मुखं विहारं कृत्वा पश्चात् विहारस्य प्राङ्मुखाः सन्तः प्रचरेयुः। तद्व्याख्यातम्-प्राङ्मुखानि कर्माणि कर्तव्यानीति। अथवा तद्व्याख्यातम् कर्तॄणां प्रत्यङ्मुखत्वे विधेये विहारपरिवृत्तिः प्रत्यङ्मुखता च सह विधीयेयाताम्। तत्र वाक्यभेदः भवतीति।

---

1. A. R-प्राङ्मु

॥ तद्व्याख्यातम् ॥

प्रत्यङ्मुखात् विहारसंयोगात् प्रत्यङ्मुखा वा कर्तारो भवेयुः **विहारसंयोगात्** विहारं परिवर्तमानमनु (वक्तारोति) कर्तारोऽपि विपरिवर्तन्ते । यथा हस्तिनि अश्वे वा परिवर्तमाने तत्स्थाः प्राणिनोऽपि परिवर्तन्ते तद्वदत्रापीति । प्रत्यञ्चोऽवभृथेन चरन्तीति विहारपरिवृत्तिमाप्नुयात् । तामनु कर्तारोऽपि विपरिवर्तन्त इति न तद्विकारत्वविधिरिति "न प्राची वै द्विरूपत्वात् पितृयज्ञो हि भवति न दक्षिणा यज्ञोऽभ्युदेति त्वन्तरोभयोः[1] भवति । अत्रेज्यन्ते देवाश्च पितरश्च" इति इदमन्यार्थदर्शनं उक्तन्यायस्य दृढिम्नः कारणमिति ।

**॥ १७ ॥ 'पृथिव्यै स्वाहान्तरिक्षाय स्वाहा' इति मन्त्रान्ताम्नातः स्वाहाकारः प्रदानार्थत्वात् तौ ह्यर्थौ श्रुत्या संयुज्येते ॥ २-४-३३ ॥**

मन्त्रान्ताम्नातः स्वाहाकारः प्रदानार्थो भवेत् श्रुत्या प्रदानार्थता चोदिता चेति "स्वाहाकारेण वषट्कारेण वा देवेभ्योऽन्नं प्रदीयते" इति प्रातिसूत्रमेतदुत्तरविवक्षार्थमिति ।

**॥ १८ ॥ पुरस्तादपि मन्त्राः श्रूयमाणाः तदर्थाः प्रदानसंयोगात् यथा देहि ब्राह्मणाय ब्राह्मणाय देहीति ॥ २ - ४ - ३४ ॥ (सि)**

"स्वाहा वाचे स्वाहा वाचस्पतये" इति पुरस्तान्मन्त्रैः[न्त्रेभ्यः]श्रूयमाणः स्वाहाकारो न प्रदानार्थः उत प्रदानार्थ इति । किं प्राप्तम् ? वैदिकानां यथाम्नानं कार्यनिष्पादकत्वमिति ; गिरापदस्थाने इरापदवत् [वा]विनियोगः । तदुभयमपि[न]पुरस्ताद्वर्तिनि स्वाहाकारे । तस्मान्न तस्य प्रदानार्थत्वमिति स्वस्थानप्रच्युतेः । स्वमन्त्रान्ते व्यवस्थितस्य स्वाहाकारस्य वषट्कारस्य वा प्रदानार्थत्वं दृष्टम् । न चात्र दृष्टम् । तस्मान्न प्रदानार्थत्वमिति । सत्यपि कर्णालङ्कारशब्दे कर्णदेशात् प्रच्युते कर्णशोभाजनकत्वं न दृष्टं तथेहापीति प्राप्ते ब्रूमः—

पुरस्तादपि मन्त्रस्य हविः[2] प्रदानार्थ एव स्वाहाकारः । प्रदानग्रहणे स्वाहाकारेण वषट्कारेण वा देवेभ्योऽन्नं प्रदीयत इति । यत्र यत्र स्वेन कार्येण दृष्टेनादृष्टे

1. त्ववन्तरोद्धत्योः R. A.
2. A. R. पयः

कार्यमपास्य संबध्यते यथा देहीत्ययं शब्दो देहि ब्राह्मणाय, ब्राह्मणाय देहीति देशान्तरसंबद्धोऽपि अनुवदन् अन्यमर्थं न भजते एवमत्रापीति ।

॥ आम्नायाच्च ॥ २-४-३५ ॥

आम्नायोऽप्येतं दर्शयति "पुरस्तात्स्वाहाकृतयो वा अन्ये देवाः उपरिष्टात्स्वाकृतयोऽन्ये" इति निजदेशस्यापि स्वाहाकारस्य प्रदानार्थत्वं दर्शयति ।

॥ १९ ॥ स्वाहाकृत्य ब्रह्मणा ते जुहोमि स्वाहाकृतमिति प्रयतं जुहोमि[1] स्वाहाकृतमिन्द्राय ते जुहोमि स्वाहाकृतः पुनरप्येति देवान् इत्येतेन व्याख्यातम् ॥ २-४-३६ ॥ (पू)

एतेऽपि स्वाहाकाराः प्रदानार्था भवेयुः पूर्वेण न्यायेन रूपसामान्यादिति प्राप्ते ब्रूमः :—

॥ अप्रदानार्था वा स्तुत्यर्थः श्रूयते ॥ २-४-३७ ॥ (सि)

अप्रदानार्था एते स्वाहाकाराः विशेषणत्वात् [2]अङ्गीकृतनिष्ठाप्रत्ययार्थेन स्वाहाकाराः द्रव्यार्थतयोपादीयन्त इति द्रव्यस्तुतिद्वारेण वाक्यार्थसमवाये सति स्वाहाकारस्य न प्रदानार्थत्वे प्रमाणमस्ति । तस्मादेवंजातीयकाः स्वाहाकारा न प्रदानार्थाः इति ।

॥ २० ॥ वषट्ते विष्णवास आकृणोमीत्येतेन व्याख्यातम् ॥ २ - ४ - ३८ ॥ (सि)

"वषट्ते विष्णवास आकृणोमि" इत्यत्रापि किं वषट्कारः प्रदानार्थः उत नेति सन्देहः एतेन व्याख्यातमित्यधिकरणातिदेशः । पूर्वाधिकरणे यौ पूर्वोत्तरपक्षौ तावेवात्रापीति ।

सत्यपि देवतासंबन्धे 'वषट्ते आकृणोमि' इति करोतिसमन्वयो वषट्कारस्येति ।[3]

---

1. Bhatta Dipika ms. omits this portion of the Sutra.
2. A. & R. नाङ्गी
3. अत्रापि वषट्कारस्य न स्वातन्त्र्यं तस्य आकृणोमीत्यनेनान्वयादित्यर्थः

॥ २१ ॥ स्विष्टकृद्विकारे याज्यायां देवतानिगमाः स्युः प्रकृत्युपबन्धात् ॥ २-४-३९ ॥ (सि)

स्विष्टकृद्विकारे वनस्पतौ याज्यायां देवतानिगमाः स्युः नेति विचार्यते । किं प्राप्तम् ?

वनस्पतौ याज्यायामविशेषेण[देवतोप]बन्धः । प्रकृतावपि दर्शपूर्णमास-स्विष्टकृति एवमुपलक्षिताः । प्रकृतिवदत्रापि भवेयुरिति प्राप्ते ब्रूमः :—

॥ उपलक्षणप्रधानास्तूपलक्षिताः पुनः प्रैषे ॥ २-४-४० ॥ (सि)

उपलक्षणप्रधान एव[प्रैषे तेषां] उपलक्षितत्वान्नोपलक्षणान्तरमपेक्षन्ते । तस्मा-दर्थाभावान्न स्युरिति याज्यानुपलणम्[1] ।

अन्यः पुनरेषोऽर्थः । अन्यार्थं प्रैषसंयुक्तं पूर्वार्थे देवतोपलक्षणं अन्यकार्य-भेदात् एते निगमा इति । स्विष्टकृतो याज्या एतेन व्याख्याता । प्रकृतेपि स्विष्टकृति याज्यायां देवतोपलक्षणस्यान्यार्थत्वात् । तस्मात् प्रकृतावपि याज्यायां देव:[भेदः] ।

॥ २२ ॥ स्वाहेत्यालेखनः प्रदानकर्मा चतुर्थीविभक्तेः ॥ २-४-४ ॥ (पू)

'चित्तं च चित्तिश्चाकूतं चाकूतिश्च' इत्यादि समाम्नातम् । किं प्रथमान्त-मेव प्रयोगकाले प्रयोक्तव्यम् उत चतुर्थ्यन्तं विपरिणमयितव्यम् । "स्वाहाकारेण वा वषट्कारेण वा देवेभ्योऽन्नं प्रदीयते" इति प्रदानार्थत्वात्स्वाहाकारस्य संप्रदाने चतुर्थीति नियमो भवतीति चतुर्थ्यन्तं विपरिणमयितव्यमिति । अपि च स्मृतिः चतुर्थीमेव नियमयति "नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्चेति" तस्माच्चतुर्थ्यन्तस्य प्रयोगं आलेखनो मन्यते स्मेति ।

॥ यथासमाम्नानमित्याश्मरथ्यः प्रवचनलक्षणत्वान्मन्त्राणाम् ॥ २-४-४२ (सि)

यथासमाम्नानं एवंजातीयकमित्याश्मरथ्यो मन्यते स्म । कुतः ? प्रवचन-लक्षणत्वान्मन्त्राणाम् । समाम्नायलक्षणो मन्त्रः ये यथा समाम्नायन्ते ते तथैव प्रयोक्तव्या इति ।

---

1. R. याज्यार्थानुपलक्षणम्

विभक्त्यन्तरितव्यत्ययोऽपि छन्दसि दृष्टः बहुलवचनात् । तस्माद्यथासमाम्नानं प्रयोग इति ।

॥ २२ ॥ चित्ताय स्वाहा चित्त्यै स्वाहेत्येकेषां विकल्पो विप्रतिषेधात् ॥ २-४-४३ ॥ (सि)

किमेतयोर्मन्त्रपाठयोश्शाखान्तरीययोः समुच्चयः आहोस्विद्विकल्प इति सन्देहः । किं प्राप्तं ? समुच्चय इति ।

कुतः ? विकल्पस्यान्याय्यत्वात् । मन्त्रान्तरतया समुच्चयोपपत्तेः ॥ [इति प्राप्ते] 'येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्' इत्यनुपात्तसङ्ख्यानां होमानां मन्त्राणां प्रत्ययमात्रभेदात् एकार्थत्वात् असति समुच्चये विकल्प एवेति । अथवाऽस्य विकल्पो विप्रतिषेधादिति । स एष प्रथमाचतुर्थ्योः स्वार्थप्रत्ययत्वे सत्यपि प्रातिपदिकोच्चारणयोः समुच्चयविप्रतिषेधात् विकल्पः प्रयोगे स्यात् ।

॥ २३ ॥ भूतानामवेष्टिभिरिष्टका उपदध्यात् अर्थवादसामान्यात् ॥ २-४-४४ ॥ (पू)

भूतेष्टका उपदधाति अत्रात्र वै मृत्युर्जायते यत्र यत्र वै मृत्युर्जायते तत एवैनमयजतीति[1] । तत्र सन्देहः किं राजसूयसमधिगतैः पृथिव्यै स्वाहेत्यादिभिः भूतानामवेष्टिमन्त्रैः इष्टका उपधातव्याः आहोस्वित् प्राकरणिकैः ब्राह्मणविहितैः "पृथिव्यसि जन्मना" इत्यादिभिरुपधानं कर्तव्यमिति । किं प्राप्तम् ? राजसूयसमधिगतैरिति । कुतः ? अर्थवादसामान्यात् भूतानामवेष्टिभिरिति । तुल्यशब्दत्वाच्च । तुल्यश्चोभयत्र भूतशब्दः भूतानामवेष्टयः भूतेष्टका इति । तुल्यत्वमेवमर्थवत्त्वमासादयेत् यदि राजसूयप्रकरणसमधिगताभिः प्रतीयेरन् इति प्राप्ते—ब्रूमः

॥ अग्नौ वा येऽब्राह्मणा मन्त्रास्तद्व्याख्यातम् ॥ २-४-४५ ॥ (सि)

अग्नौ ये मन्त्रसमाम्नाये पठिता मन्त्रास्ते अब्राह्मणाः अविद्यमानब्राह्मणविनियोगा इत्यर्थः । प्रकरणात् प्राकरणिकैः "पृथिव्यसि जन्मना च साग्निना गर्भमाधत्तां सा मया संभवेत्" इत्येवमादिभिरेवोपधानं कर्तव्यं भूतेष्टकानाम् । तदुक्तम्—**तदाख्यं वा प्रकरणोपपत्तिभ्यामिति**[2] ।

यत्पुनरर्थवादसामान्यादिति, तत्रोच्यते ।

1. तै. सं. 5-6-3-1 2. जै. सू. 3-2-21

॥ नानार्थयोरर्थवादसामान्यं यथा क्रतुषु पृथक्त्वम् ॥ २ - ४ - ४६ ॥

पृथग्भूतयोरेव तदर्थसादृश्यम् यथा क्रतुपृथक्त्वे अर्थवादसादृश्यम्। उत्सन्नयज्ञो वा एष यदग्निः इति उत्सन्नयज्ञो वा एष यदग्निहोत्रं इति च ।

॥ एतेन तुल्यशब्दत्वं व्याख्यातम् ॥ २ - ४ - ४७ ॥

तुल्यशब्दाभिधेयत्वं नानाभूतयोरपि दृष्टम् । यथा कुण्डपाये जुहोतौ अग्निहोत्रे चेति ॥

॥ २४ ॥ मन्त्रागमे सस्वाहाकारः प्रतीयेत वाक्यसंयोगात् ॥ २ - ४ - ४८ ॥ (सि)

भूतानामवेष्टिमन्त्रैः केवलैरेवोपधानं कर्तव्यम् उत स्वाहाकारेणेति । किं प्राप्तम् ? स्वाहाकारैरिति । कुतः ? वाक्यावयवत्वात् । वाक्यैकदेशत्वात् स्वाहाकारस्य मन्त्रेषु प्राप्तेषु तदेकदेशभूताः स्वाहाकाराः कथं न प्राप्नुयुरिति प्राप्ते ब्रूमः—

॥ अस्वाहाकारा वा प्रदानार्थस्वाहाकारेभ्यः ॥ २-४-४९ ॥ (पू)

पुनरेषोऽर्थः अस्वाहाकाराः प्रतीयेरन् । (न) प्रदानार्थो हि तत्र स्वाहाकारः न चोपधानं [प्रदानं]; अस्वाहाकारास्तु उपधाने प्रत्येतव्याः । कुतः ? प्रदानार्था हि तत्र स्वाहाकाराः प्रतीयेरन् । [तेन] न प्रदानार्थस्वाहाकारा एव मन्त्राः प्राप्नुयुरिति ।

स्थितं तावदपर्यवसितम् ।

अन्तरा चिन्त्यते ।

॥ २५ ॥ प्रप्रैषेण यजतीत्येतेन व्याख्यातम् ॥ २-४-५० ॥ (पू)

प्रदानार्थत्वाद्वषट्कारस्य वषट्कारेणैव प्रदानमृतुग्रहेषु इति प्राप्ते ब्रूमः—

यथा अस्वाहाकारेण उपधानं एवं 'होता यक्षत् होतर्यज' इत्येतौ वर्जयित्वा अन्यैः केवलैरेव कर्तुः प्रैषैरिज्यापि ।

स्थितादुत्तरम् ।

॥ स्याद्वा इष्टकासु स्वाहाकारो यथा मुष्टिकरणे ॥ २-४-५१ ॥ (सि)

अवेष्टके यथा अन्ते मन्त्राम्नानसामर्थ्यात् मन्त्रे समाम्नातः स्वाहाकारः मन्त्रावयवत्वादवयविनि मन्त्रे प्राप्नोत्येवेति । यथा अप्रदानमुष्टिकरणे मन्त्रसमाम्नानात्

स्वाहाकारः[1] एवमिदमपीति । ननु मन्त्रेऽनवधानं किन्तु प्राकरणिकैरेव.... कथमुक्तम् । सत्यमेवं, कृत्वाचिन्तेयम् ।...देतेन तत्कथमिति (?)[2]

**॥ २६ ॥ ऋताषाड़ृतधामेति यथार्थविनिष्कर्षोऽर्थपृथक्त्वात् यथा सूक्तवाकानाम् ॥ २ - ४ - ५२ ॥ (पू)**

" ऋताषाड़ृतधामाग्निर्गन्धर्वस्तस्यौषधयोप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा " इत्यत्र पुंसंयुक्ताः स्त्रीसंयुक्तार्थमन्त्राः प्रतिहोमं यथार्थं विनिष्कृष्य प्रयोक्तव्याः उत व्यतिषक्तानामेव मन्त्राणां प्रयोगः स्वाहाकाराभ्यास इति ।

किं प्राप्तम् ? विनिकृष्य इति । कथं ? अर्थपृथक्त्वात् । पृथगर्था एते मन्त्राः लिङ्गात् यथार्थं विनिष्कर्षमर्हन्ति वाक्यात् व्यतिषङ्गेण प्रयोगः । वाक्याच्च लिङ्गं बलवत्तरमिति । किन्तु अर्थप्रकाशनद्वारेण उपकारमातन्वतां मन्त्रपदानां दर्शपूर्णमासवाचिनामपि निष्कर्षो दृष्टः तद्वदत्रापीति प्राप्ते ब्रूमः—

**॥ यथासमाम्नानं वा व्याख्यातम् ॥ २ - ४ - ५३ ॥ (सि)**

यथासमाम्नानमेव प्रयुज्येरन् एवंजातीयकानि मन्त्रवाक्यानि । कुतः ? प्रवचनलक्षणत्वात् मन्त्राणाम् । समाम्नातारो यथा समामनेयुः तथा ते प्रतिपत्तव्याः व्यतिषक्तपदांश्च मन्त्रात् समाधीयते । तस्मात् व्यतिषक्तपदेष्वपि मन्त्रेषु व्यवधारणकल्पनं यथाभिधानसामर्थ्यस्याविरोधात् । यथा लोके

कान्तं पृच्छामहे तन्वीपुलकोत्तम्भकारिणम् ।
द्रुतमायस्तनेत्रान्तं गतःक्वेति प्रियस्तव ॥

इत्यत्र श्लोके पुंलिङ्गान्तानि पदानि यथा संबध्यन्ते एवमत्रापीति ।

यत्पुनरुक्तं सूक्तवाकवदिति । युक्तं तत्र कालभेदात् विनिष्कर्षः न त्वेवमत्र कालभेद इति व्यतिषक्ताभिधानसामर्थ्यात् व्यतिषक्ताभिधानजनिकामेव पूर्वमध्यवसीयते । कर्मविभागात् स्वाहाकारमात्रस्याभ्यास इति ।

---

1. स्वाहोरोरन्तरिक्षात् इति मुष्टीकरोति आ. श्रौसू. 10.1
2. All mss. do not supply good reading

॥ २७ ॥ षड्जुहोतीति पर्यायवादो यथा सावित्राणि जुहोतीति ॥ २ - ४ - ५४ ॥ (सि)

षड्जुहोति इति किमयं पर्यायवादः आहोस्वित् आहुतिवाद इति [ किं प्राप्तं ? आहुतिवाद इति ] कथं ? सङ्ख्यायाः पृथक्त्वविनिवेशात् षडाहुतीर्जुहोतीति ।

ननु कर्म सङ्ख्यया न संबध्यते । व्यवहारादर्शनात् पञ्चकर्माणीति । तेन नात्रापि संबध्यत एवेति प्राप्ते—

ब्रूमः । पर्यायवादोऽयं भवितुमर्हति । कुतः ? श्रुत्यविरोधात् । एवं हि [ द्वयो ] रेतयोः श्रुत्यविरोधो भविष्यति । षडाहुतीरिति द्वे द्वे आहुती एवं [एकं] कृत्वा निर्दिशति । 'सावित्राणि जुहोति' इति आहुतिगणवादः । एवमत्रापि 'द्वादश जुहोति' इति वादेपि स्यात् यथा चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायां इति एकविषयतया समस्यवादोऽयं अविरोधाद्वाक्यप्रकरणयोरिति ।

॥ २८ ॥ [1]भुवनस्य पत इति सप्तमीमाहुतिं जुहोतीति ॥ २ - ४ - ५३ ॥ (सि)

किमयमपि पूर्ववदाहुतिवादः ? पर्याय इति पूर्वाधिकरणातिदेशः पूर्वोत्तरयोः पक्षयोः समानत्वात् । सप्तमीमाहुतिं पर्यायवत् त्रयोदशीमित्यनुवाद इति ।

॥ २९ ॥ भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोतीति दशेत्येकेषां दर्शनात् पञ्चस्वव्युत्यवादो यथा- [षड्भि]रुपतिष्ठते इति ॥ २-४-५६ ॥ सि)

केषांचिच्छाखिनां दशाहुतयस्समाम्नाताः अन्येषां पञ्च । तदेतयोर्वाक्यभेदेन आहोस्वित् एकवाक्यतया द्वे द्वे एकवत्कृत्वाऽपर्यायवादः । किं वाऽव्युत्य इति ।

किं प्राप्तम् ? दशाहुतीर्जुहोतीति भिन्ना । पञ्चाहुतीर्जुहोतीति भिन्नविषयत्वात् नैकवाक्यत्वम् । सङ्ख्ययोश्च एकार्थत्वात् विप्रतिषेधाद्विकल्प इति विध्यनुवादयोश्च विधिर्ज्यायानिति प्राप्ते ब्रूमः

भुवनस्य पते स नो भुवनस्य पते इति द्वे द्वे आहुती समानरूप्यात् एकपर्यायीकृत्य पर्यायवाद एवायम्' [यथा] एकशाखाधीतानां 'षट् जुहोति' इति

---

1. This Adhikarana is not found in B. Dipika.

पर्यायवादः। तथा समानरूपत्वात् नानाशाखाधीतानां पञ्चसु इत्यवयुत्यवादः महत्यां सङ्ख्यायामुपात्तायां तदन्तर्भूतानां सङ्ख्यानामुपादानमस्तीति दृष्टम्। तद्व-दत्रापि स्यादिति। संभवति चैकवाक्यत्वे वाक्यभेदेन विकल्पस्यान्याप्यत्वात्।

यत्पुनः शाखान्तरीयस्यावयुत्य वाद इति। उच्यते। शाखान्तरीयाणामपि विधीनामेकवाक्यत्वस्य प्रतिपादितत्वात्। वाक्यैकवाक्यतायां चावयुत्यवादेन स्तुत्यर्थ-त्वमुपपद्यत एवेति।

**॥ ३० ॥ स्वाहाकारवषट्कारनमस्काराः प्रदानार्था यथान्यत्र ॥ २-४-५७ ॥ (पू)**

"क्वचिच्छ्रूयते—भूतं भव्यं भविष्यद्वषट्स्वाहा नम" इति। अस्मिन् वाक्ये वषडादयः प्रदानार्था भवन्ति आहोस्विन्नेति सन्देहः। यथा अन्यत्र वषडादयः प्रदा-नार्था एवमत्रापीति। ननु सामान्यतो दृष्टमेतत्। नेत्युच्यते। वषडादीनां प्रदा-नार्थत्वं वाक्यगम्यत्वात् कथमन्यत्रापनेतुं शक्यते। तस्मात् प्रदानार्था इति प्राप्ते ब्रूमः।

**अप्रदानार्था वाक्यसंयोगात् यथा मुष्टिकरणे स्वाहाकारः स्वाहाकारः ॥ २-४-५८ ॥ (सि)**

अप्रदानार्था वा वषडादयो भवेयुः। कथं? वाक्यसंयोगात्। वाक्या-वयवत्वात्। वाक्यैकदेशे श्रूयमाणा वषडादयो भूतादिभिः आनन्तर्यात् संबध्यमानाः प्रदाने नाभिसंबध्यन्त इति।

अथवा [1]अन्यार्थसंयोगाद्वषडादीनां भूतादिभिः ऋगादिभिश्च संबन्धः अन्य-विशेषणविशेष्यभावे स्तुत्यर्थत्वमेवैषामिति। दृष्टश्चाप्रदानात्मकेपि कर्मणि स्वाहाकारः यथा मुष्टीकरणे। द्विरभ्यासश्चाध्यायपरिसमाप्त्यर्थ इति।

**॥ इति श्रीदेवस्वामिनः कृतौ सङ्कर्षकाण्डभाष्ये चतुर्थःपादः**

**अध्यायश्च**

**॥ परिसमाप्तः ॥**

—:*:—

---

1. S नार्थसंयोगाव

# अथ तृतीयाध्यायस्य प्रथमः पादः

आदितः पञ्चदशोऽध्यायः

॥ १ ॥ विक्रमसन्निपातौ[1] दर्शपूर्णमासयोः इज्याकालस्त-
त्संयोगात् ॥ ३ - १ - १ ॥

कालनामधेयं श्रूयते । अहोरात्रसम्मितौ कालौ दर्शपूर्णमासाविति । किं तत्राविशेषेण यागः कर्तव्यः आहोस्वित् परस्मिन् सन्निकर्षे परे वा विप्रकर्षे इति ।

किं प्राप्तम् ? अविशेषेणेति । लोके सकलस्याहोरात्रस्यामावास्यापौर्णमासी-शब्दवाच्यत्वात् । तत्र च यागः श्रूयते—अमावास्यायां अमावास्यया यजेत पौर्णमास्यां पौर्णमास्या यजेतेति । अर्थविशेषेणाहोरात्रस्य सन्निकृष्टकालेषु कर्तव्य इति प्राप्ते ब्रूमः—

त्रिक्रमसन्निपातौ दर्शपूर्णमासयोरिज्याकालः । विक्रमो विप्रकर्षः सूर्या-चन्द्रमसोः सन्निपातः तयोरेव सन्निपातः तौ विप्रकर्षसन्निपातौ दर्शपूर्णमासयो-र्यागकाल इति शिष्टास्स्मरन्ति । स्मृतिश्च नः प्रमाणम् । तेन च कालेन कर्मण-स्संबन्धात् कर्मण्यपि कालनामधेयश्रुतिर्लक्षणया न विरोत्स्यति । अथवा प्राप्तिस्तूत्तर-विवक्षार्थमिति ।

॥ २ ॥ द्वाविज्याकालौ वचनात् ॥ ३ - १ - २ ॥

अमावास्यायां पौर्णमास्यां च एकमेवाहर्यजनीयम् आहोस्वित् द्वे अहनी[2] इति सन्दिह्यते । किन्तावत्प्राप्तम् । एकमेवाहः, लिङ्गदर्शनेभ्यः । यस्मिन्नहनि [परो विप्रकर्षः] परस्सन्निकर्षो वा तदेवैकमहर्यजनीयम् अन्यपरेभ्योऽध्यवसीयते । "तस्मात् सदृशीनां रात्रीणां अमावास्यायां च पौर्णमास्यां च देवा इज्यन्ते" इति अमावास्यायां पौर्णमास्यामिति द्विवचननिर्देशात् एकमेवाहर्यजनीयमिति । "ते वा एते मध्ये अहनी यजनीये दर्शपूर्णमासौ" इति च द्विवचननिर्देशात् एकमेवाहर्य-जनीयमिति ।

---

1. अत्र तृतीयान्तं सूत्रं दृश्यते । मुद्रितभाट्टदीपिकायां तु विक्रमसन्निपातौ इत्येव प्रतीकग्रहणमुपलभ्यते ।
2. A T R द्वे आहवनीते

तथाऽपरं लिङ्गं—द्वादश वै संवत्सरस्य पौर्णमास्यः द्वादशामावास्याः इति। यदैकमेवाहर्यजनीयं अभविष्यत् तदा द्वादश पौर्णमास्यो द्वादशामावास्या इति दर्शनमवकल्पेत। यदि पुनर्द्वे अहनी स्यातां ततश्चतुर्विंशतिपौर्णमास्यो वा भवेयुः चतुर्विंशत्यमावास्या इति।

ननु लिङ्गान्येतानि। का प्राप्तिरिति उच्यते। पौर्णमास्यामित्येकवचनस्यावृ(त्ति)[त्त]त्वं न्याय्यमिति। ते एते अहनी इति द्विवचननिर्देश इति। तस्मात् सन्निकर्षविप्रकर्षयुक्त(ः)कालौ यागकालावित्येव (य)इज्याकाल इति। [इति प्राप्ते]

द्वाविज्याकालौ वचनात्॥

तत्र यज्ञे यत्रैनं पश्चादस्तमितं पुरस्तात् आदित्योऽभ्युदेति स वै संप्रत्येव यजेत इति संप्रति वृत्रहननादिति। "यदहरेष पुरस्तान्न पश्चान्न दृश्येत तदहरुपवसेत् श्वो न दृष्टा" इति चेत्यादिभिर्वाक्यैः अस्तमितमनमितं दृष्टाऽदृष्ट्वेति श्रूयमाणं इज्याकालद्वित्वं दर्शयति।

ननु लिङ्गमेतदसाधकम्। उच्यते। अस्ति वाचनिकी प्राप्तिः। या पूर्वा पौर्णमासी सा अनुमतिः योत्तरा सा राकेति। या पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूरिति पूर्वोत्तरव्यपदेशात्। संज्ञाभेदाच्च इज्याकालद्वित्वमध्यवसीयते। स्थितं तावदपर्यवसितम्। अन्तरा चिन्तान्तरं प्रक्रम्यते—

### ॥ ३ ॥ रात्रौ यज्ञे शब्दसंयोगात्॥ ३ - १ - ३॥ (पू)

अमावास्यायां अमावास्यया यजेतेति किं रात्रौ यागः कर्तव्यः आहोस्वित् अहनीति सन्देहः। किं प्राप्तम्? रात्राविति। कथं? शब्दसंयोगात् "तस्मात् सदृशीनां रात्रीणां अमावास्यायां च पौर्णमास्यां च देवा इज्यन्ते" इति रात्रीणामिति शब्दश्रवणात् रात्राविज्येत।

नन्वत्र[1] सप्तम्यश्रवणात् सदृशीनां रात्रीणामिति कालविधानं गम्यते। **सत्यं**, अत्र विधेयान्तराभावात् षष्ठ्यन्तमपि अविवक्षितप्रत्ययार्थप्रातिपदिकार्थविधानमेव युक्तम्। अपि च सदृशानां ब्राह्मणानां मध्ये यज्ञदत्तो विरूप[2] इत्युक्ते यज्ञदत्तोऽपि

---

1. A. R. S. ननु
2. S निरूपः

ब्राह्मण इति गम्यते । एवमत्रापि सदृशीनां रात्रीणाममावास्यायां पौर्णमास्यां च रात्रावेव देवता इज्यन्त इति संबन्धाद्गम्यते । तस्माद्रात्राविज्येति प्राप्ते ब्रूमः ।

॥ अहनि वा तद्व्याख्यातम् ॥ ३ - १ - ४ ॥ (सि)

अहन्येव वा स्यादिज्या—तद्व्याख्यातम् । 'उदगयने आपूर्यमाणपक्षे पुण्याहेषु दैव्यानि कर्माणि कर्तव्यानि' इति । यत्पुनरिदं प्रातिपदिकार्थमात्रविधानमिति । तत्रोच्यते । रात्रिशब्दस्य प्राप्तार्थत्वात् अविधेयत्वम् । कथं ? अनुवादसरूपत्वाद्वाक्यस्य । तदुच्यते ।

॥ प्रक्रमाभिधानाद्रात्रिशब्दो यथाऽन्यत्राहोरात्रसम्मितः पञ्चाहेनागतः इति ॥ ३ - १ - ५ ॥

अनुवादसरूपे च वाक्यावयवे न समुदायो विवक्ष्यते । तत्र कदाचित् अहस्तः प्रक्रमः कदाचिद्रात्रितः । यथा अन्यत्र लोके पञ्चाहेनागतः पञ्चरात्रेणागतः ।

॥ लिङ्गाच्च ॥

अहनीज्येति गम्यते । ते वा एते पूते मेध्ये अहनी यजनीये दर्शपूर्णमासाविति । यथा "पूर्वेद्युरधिगृह्णाति उत्तरं चाहर्यजते" इति अहश्शब्दयोगात् अहन्येव याग इति गम्यते ।

॥ ४ ॥ उदिते [1]सूर्ये तन्त्रप्रक्रमः प्रधानसंयोगात् ॥ ३ - १ - ६ ॥ (पू)

दर्शपूर्णमासयोः किं प्रधानवदङ्गान्यपि अहन्येव प्रयोक्तव्यानि उताङ्गेष्वनियम इति । प्राप्तं प्रधानस्याहःकालत्वात् [2]तत्कालत्वं नियमेनाङ्गानामिति । एवं प्राप्ते ब्रूमः । यस्य [3]अगृहीतं हविरभ्युदियात् अथ यस्य गृहीतं हविरभ्युदियादित्युक्तेष्टेः अगृहीते गृहीते वा हविरभ्युदितेष्टेर्निमित्तमाशङ्क्य अनुदितेपि दर्शपूर्णमासयोस्तन्त्रप्रक्रमं सामर्थ्यात् दर्शयति । द्विवचनममावास्यायां विप्रतिषेधात् । यथा "यद्येतान्नालभेत" इति ।

---

1. आदित्ये
2. S तत्कालत्वनियमो नाङ्गाना
3. R निरुप्तं हविर

अमावास्यायां वाचनिकः प्रक्रमकालः न लैङ्गिकः वचनन्यायविप्रतिषेधात् । यदितु अहनीति न्यायेन अहनि तन्त्रं प्रक्रम्येत यस्य गृहीतं हविरिति वचनं विप्रतिषिध्येत । तस्मादेतद्वचनमुभयकारि यथा यद्येतान्नालभेत इति ।

॥ यजनीये वा तद्व्याख्यातम् ॥ ३ - १ - ७ ॥

इदं पदोत्तरं सूत्रम् " विक्रमसन्निपातौ इज्याकाल " इत्युक्तम् । न च तौ नियोगतोऽहन्येव भवतः । तस्माद्रात्राविज्येति । सूत्रेणोत्तरम्—यजनीये वा तद्व्याख्यातम् । अहर्यजनीयः कालः न रात्रिरित्युक्तम् । तदहन्येव यजेत । यत्पुनरुक्तं विक्रमसन्निपातौ न नियोगतोऽहन्येव संभवत इति । अत्रोच्यते । सन्निकर्षविकर्षा-[त्मकः]कालः परमसूक्ष्मः तेन कर्म न व्याप्तुं शक्यते । किन्तु तमन्तर्भाव्य कर्म क्रियते । यदि पूर्वाह्णे संभाव्येत ततो नितरां शोभनम् । यदि पुनरपराह्णे रात्रौ वा तदहरुपोष्य श्वोभूते यागः कर्तव्य इति, बहिर्भूताद्धि यागकालादन्तर्भूतो यागकालो ज्यायानिति ।

॥ ५ ॥ एतेन सोमकालो व्याख्यातः ॥ ३-१-८ ॥

अतिदेशसूत्रमेतत् । यथा दर्शपूर्णमासयोः विक्रमसन्निपातौ प्रधानसन्निकृष्टौ एवं सोमे कर्तव्याविति—**स्थितादुत्तरः**—

॥ विक्रमसन्निपातयोर्वा स्यात्[1] तत्संयोगात् न ह्यन्यत् प्रत्यक्षं विद्यते ॥ ३–१–९ ॥ (सि)

विक्रमसन्निपातयोरिज्याकालत्वम् । एक एवेज्याकालः विक्रमः सन्निपातो वा । तेन कालेन श्रुत्या यागः संयुज्यते । 'पौर्णमास्यां यजेत' 'अमावास्यायां यजेत' इति । मास इति चन्द्रमसो नामधेयम् । पूर्णो मासो यस्यां तिथौ सा पूर्णमासी एकवचसा[2] । अमेति सहार्थे । सह यस्यां तिथौ सूर्याचन्द्रमसौ वसतः सा अमावास्या । सापि न द्वयोरह्नोः तौ सह वसत इति सूर्याचन्द्रमसोर्गतिविशेषस्य (अ)द्वयस्य व्याप्तयसंभवात नेज्याकालद्वित्वमिति ।

यत्पुनः द्वाविज्याकालौ वचनादिति ; न ह्यन्यत् प्रत्यक्षं विद्यते । यदि ह स तत्र यजेतेत्यादिलिङ्गदर्शनं कारणत्वेनोपन्यस्तं तदुभयोरावयोस्साधारणत्वाद-

1. भाट्टदीपिका reads विक्रमसन्निपातयोर्व्यासया
2. A एको वचसा

विशेषकम्[1]। उत्तरस्यामिति च रात्र्यपेक्षं वचनं भविष्यति। तस्मात् एक एवेज्याकाल इति।

॥ ६ ॥ यदि मन्येत स्वपूर्णामिति नान्यद्धविरन्तरं निर्वपेत्
पौर्णमासीमेव यजेत श्वोभूत इति सर्वेष्टीनामविशेषात् ॥ ३-१-१० ॥ (पू)

नान्यद्धविरन्तरं निर्वपेदिति किं सर्वास्विष्टिष्वयं प्रतिषेधः किं वा अविहितकालविशेषासु नैमित्तिकास्विति। किं प्राप्तम्? सर्वेषामयं प्रतिषेध इति। कथं? **अविशेषात्**। नान्यद्धविरन्तरं निर्वपेदित्यविशेषा श्रुतिः कथं विशेषे व्यवतिष्ठेत। तस्मात् सर्वेषां यागानामयं प्रतिषेध इति प्राप्ते ब्रूमः—

॥ दोषसंयुक्तानां वा कल्पत्वात् ॥ ३-१-११ ॥ (सि)

कालस्य दोषनिमित्ततया नैमित्तिकहविरभिस्यन्दननाशनिमित्तासु अयं प्रतिषेध इति। स चेष्टिपशुसोमाग्रयणेषु। (अ)शास्त्रलक्षणत्वात् पौर्णमासीकालस्य "य इष्ट्या पशुना सोमेन आग्रयणेन यक्ष्यमाणोऽमावास्यायां कर्म पश्चान्नैमित्तिकं कर्तव्यमिति।

॥ ७ ॥ न यवानां आग्रयणं विद्यत इत्यौडुलोमिः तासामितरेणेत्ये[2]कवच्छ्रूयते ॥ ३-१-१२ ॥ (पू)

आरण्यश्यामाकैः तासामाग्रयणं कर्तव्यम्। यथा ये फालकृष्टास्तासामितरेणेति। तत्र किं यवानामाग्रयणं न विद्यते आहोस्वित् विद्यत इति।

किं प्राप्तम्? औडुलोमिमतेन न विद्यत इति। कथं? आरण्यानां श्यामाकैराग्रयणं कृतं भवति। फालकृष्टानामितरेणेत्येकवच्छ्रूयते। एकमेव व्रीहीति ग्राम्याणामाग्रयणं स्यादिति। "संवत्सराद्ध्येतदधिभवति [3]इति च नोपपद्यते[4]। यदि च व्रीहिभिरिष्ट्वा संवत्सरात्पुनर्व्रीहिभिरेवेज्येत ततस्संवत्सरात् अध्येतदवकल्पते। वसन्ते यवैराग्रयणं संवत्सरादधिभवेत् तत्रैतद्दर्शनं नावकल्पेत।

---

1. R अवैशेषकं
2. R त्येतत्
3. इति वा, स. ऽ.
4. वसन्ते यवैः आग्रयणकरणे तु वत्सरमध्य एव तदावृत्तेस्तद्विरोधः—भा.दी.

ननु सप्तविधद्रव्यैराग्रयणे[1] व्रीहिद्रव्य(साध्यत्वात् ग्रहणे) [साध्याग्रयणे] विषमं दर्शनं भविष्यति। तत्रापि संवत्सरात् व्रीहियवात् न द्रागिति। उच्यते। प्रकरणात् कर्मप्रतीतेः द्रव्यद्वारा तु कर्मप्रतिपत्तिर्विलम्बिता तस्मादुपपद्यत एतद्दर्शनमिति। तस्माद्यवानामाग्रयणं न विद्यत इति प्राप्ते ब्रूमः—

॥ उभाभ्यामाग्रयणेनेति प्रत्यक्षश्रुतेः ॥ ३ - १ - १३ ॥ (सि)

द्वे ग्राम्याग्रयणे व्रीहियवद्रव्यके। द्वे ग्राम्याग्रयणे स्यातां मरुतः, इति प्रत्यक्षश्रुतेः। का पुनरत्र श्रुतिः ? "उभाभ्यामाग्रयणेन" इति। "द्वौ बालचूतौ मध्यौ व्रीहयश्च यवाश्च। तस्मात्ताभ्यामुभाभ्यामग्निहोत्रं जुहोति। उभाभ्यां दर्शपूर्णमासाभ्यां यजेत उभाभ्यामाग्रयण" इति फालाफाल[2]कृष्टविषयमेतदुभाभ्यामिति चेन्न; प्रकृतत्वात् व्रीहियवप्रतीतेः। अर्थवादोपपत्तेश्च। यवसाधनके सति आग्रयणार्थवादः उपपद्यते। "द्विर्वा एष आदित्यः संवत्सरादावर्तते। तमेताभ्यामाग्रयणाभ्यां अर्वाञ्चञ्च पराञ्चं च अभियजते"। अर्वाञ्चञ्च पराञ्चञ्चेति दक्षिणोत्तरे अयने विवक्षिते। व्रीहियवद्रव्यसाध्ययोः[3] कालसन्निकर्षात्। कालविधिपरश्चान्यार्थो व्रीहियवयोराग्रयणं दर्शयति। "व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत न यवेभ्यः यवैरिष्ट्वा यवैरेव यजेत न व्रीहिभ्यः व्रीह्याग्रयणेनेष्ट्वा व्रीहिभिरेव दर्शपूर्णमासौ कर्तव्यौ। यवैरिष्ट्वा यवैरेव न व्रीहिभ्य इति दर्शपूर्णमास[द्रव्य]नियमपरोऽप्ययं विधिः यवैराग्रयणं दर्शयति।

॥ ८ ॥ सर्वेषां प्राशन्यो यथा भक्षाणामविशेषात् ॥ ३-१-१४ ॥ (पू)

त्रयाणामेव तेषां श्यामाकव्रीहियवानां ऋचः तिस्रः प्राशने[श्रूयन्ते] "अग्निः प्रथमः प्रश्नातु स हि वेद यथा हविः शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः" इति श्यामाकानां प्राशनमन्त्रः। "भद्रान्नः श्रेयः समनैष्ट देवाः। त्वया वसेन समशीमहि त्वा। स नो मयोभूः पितो आविशस्व शं तोकाय तनुवे स्योनः" इति व्रीहीणाम्, "एतमुत्यं मधुना संयुतं यवं सरस्वत्या अधि मनावचर्कृषः इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन् मरुतः सुदानवः" इति यवानाम् इति

1. A T R सत्वविधवैराग्रयणे
2. फलाफालकृष्ट
3. A T R व्रीहियागद्रव्य

मन्त्रत्रयाम्नानम्। किं मन्त्रवतामेताः प्राशिन्यः अमन्त्रवतश्च भक्षणात[दौ]उत मन्त्रवतामेवेति सन्देहे।

सर्वेषां भक्षणामेता ऋचः प्राशिन्यो भवेयुः अविशेषात् यथा सोमे सर्वभक्षाणामविशेषेण भक्षणमन्त्रवत्ता।

॥ मन्त्रवतां वा ॥ ३ - १ - १५ ॥ ( सि )

सामान्यमन्त्रवतां वा भक्षाणामेताः प्राशिन्यो भवेयुः न सर्वभक्षाणाम्। सामान्याद्धिकारो गम्यते अपूर्वत्वात्।

**॥ ९ ॥ अनिष्टाग्रयणस्य नवाशनप्रतिषेधः आरण्यफालकृष्टानां वाक्यसंबन्धात् ग्राम्याणां न स्यात् ॥ ३-१-१६ ॥ (पू)**

आग्रयणमेव प्रकृत्य श्रूयते—"आनि .... वा एष देवानां य आहिताग्निः तस्य देवा अन्नं स यद्यनिष्टाग्रयणेन नवस्याश्नीयात् देवानां भागं प्रति क्लृप्तमन्यदार्तिमार्च्छेत् तस्मान्नानिष्टाग्रयणेन नवस्याशितव्यं" इति।

तत्र सन्देहः—किं फालकृष्टानामेव अनिष्ट्वा नवाशनप्रतिषेधः आहोस्वित् सर्वग्राम्याणामिति। किं प्राप्तम्? फालकृष्टानामेवेति। याः फालकृष्टाः तासामियम्। एवं कृतं भवति। याः फालकृष्टाः तासामितरेणेति फालकृष्टव्यतिरेकेण अन्येषां ग्राम्याणां इतरेणेति नवांशः स्तूयते। फालकृष्टः श्रुतिवृत्तो भवति। इतरथा ग्राम्यान् लक्षयेत्।

॥ वाक्यसंयोगाच्च ॥ ३ - १ - १७ ॥

आरण्यश्यामाकैस्तासामाग्रयणं कृतं भवति याः फालकृष्टास्तासामितरेणेति फालकृष्टव्यतिरेकेणान्येषां भक्षणं अनियतं स्यादिति प्राप्ते ब्रूमः—

**॥ ग्राम्यारण्यव्यपदेशो वा फालकृष्टाभिशख्यातं लभेदन्यथा[1] सर्वग्राम्याणां पृथग्व्यपदेशः स्यात् प्रत्यक्षत्वादारण्याभिधानस्य ॥ ३-१-१८ ॥ ( सि )**

यथा आरण्यानां सर्वेषां नवाशनं प्रतिषिध्यते तद्वत् सर्वेषां ग्राम्याणां फालकृष्टशब्देन एकदेशवृत्तिना 'छत्रिणो गच्छन्ति' इति छत्रिशब्दवत् सर्वग्राम्याणामभिधानं स्यात् इति। तस्मात् सर्वग्राम्याणामेवायं प्रतिषेधः।

---

1. Mss. दन्यथो

## ॥ १० ॥ शाकपक्वौषधीनां प्राशने यथाकामी स्यात् ॥ ३ - १ - १९ ॥ (सि)

शाकपक्वयवौषधीनां किं अविशेषेण प्रतिषेधः, आहोस्वित् यागयोग्यस्याशन-प्रतिषेध इति। सस्यं नाश्नीयादिति तस्याशनप्रतिषेधात् शाकादीनामपि प्रतिषेध इति प्राप्ते ब्रूमः—शाकपक्वयवौषधीनां प्राशने यथाकामी स्यात्। कथं ? यादृशं याग-योग्यं तादृशं अनिष्ट्वाग्रयणो नाश्नीयादिति प्रतिषेधः। तस्मात् हरितयवादिप्राशने याथाकाम्यम्। अग्रपाकस्य यागनिमित्तत्वात्।

## ॥ लिङ्गाच्च ॥ ३ - १ - २० ॥

"देवा ओषधीषु पक्वास्वाजिमीयुः तानिन्द्राग्नी प्रथममुदजयताम्" इत्यादिषु पक्वास्विति पाकेन ता विशिनष्टि। तस्माच्छाकादीनां प्राशने याथाकाम्यम्। पाकस्य यागनिमित्तत्वं स्यादिति देवानां भागं प्रति क्लृप्तं समर्प्याद्यात् इति भागस्य भावात् यागयोग्यस्याशनप्रतिषेधः। तस्माच्छाकादिष्वनियमः।

## ॥ ११ ॥ तेन शमीधान्यं व्याख्यातम् ॥ ३ - १ - २१ ॥ (सि)

शमीधान्यमपि मुद्गादि कृत्वा आग्रयणं भोक्तव्यं उत अनियमेनेति सन्देहे अधिकरणातिदेशः। शमीधान्यमपि नियमेनोपभोक्तव्यम् भोजनसंयोगात्। व्यञ्जनार्थं हि तत्। न केवलमश्यते। तेन नानिष्टनवस्याशितव्यं इति अशनप्रतिषेधः।

ननु शमीधान्यमपि केवलमश्यते। सत्यम्। अन्याभावात् केवलं भुञ्जते। तस्मात् शमीधान्यमनियमेन भोक्तव्यमिति।

## ॥ १२ ॥ प्राशितेऽग्नीनादधानो न कृतप्रसवत्वात् ॥ ३ - १ - २२ ॥ (सि)

यः प्राशितयवोऽग्नीनादधीत सः किमाग्रयणेन अधिकृतः उत नेति। फलार्थ-त्वात साग्नित्वाच्च अधिकृत एवेति प्राप्ते ब्रूमः—

प्राशिते नवे कृतेऽग्रपाके निमित्तेऽग्नीनादधानः नाधिकृत एवाग्रयणेन स्यात्। कुतः ? कृतप्रसवत्वात्। प्राशिते कृतमनेनानाहिताग्निन्यायेनाग्रयणम्। न कृते पुनः कर्तव्यम् तस्मान्नासावधिकृत इति।

॥ १३ ॥ अविद्यमानोऽभोक्ष्यमाणश्चाधिकृतौ सस्यसंयोगात् ॥ ३-१-२३ ॥ (सि)

सर्वमनुष्याणां द्रव्यलिप्सा विहिता। यस्याग्रपाको न विद्यते यश्च न बुभुक्षेत तावनधिकृतौ उताधिकृताविति सन्दिह्यते।

यश्चाविद्यमानाग्रपाको योऽपि न बुभुक्षेत तावप्यधिकृतौ सस्यसंयोगात्। अग्रपाकद्रव्यसाध्यमेतत् कर्म फलार्थं न द्रव्यप्रयुक्तं नापि नवभोजनप्रयुक्तम्। न चाविद्यमाननवपाकस्य जीवनं सम्भवति। सर्वपुरुषाणां द्रव्यलिप्सामन्तरेण जीवनासंम्भवात्। असत्यामपि बुभुक्षायां यागः कर्तव्य एवेति। संवत्सरादर्वागपि प्रतिपाकमाग्रयणं प्राप्नोतीति चेन्न इन्द्राभिषेकजस्य तस्य विवक्षितत्वात्। तथा च संवत्सरादेतद धिभवतीत्यर्थवादो घटत इति।

॥ १४ ॥ अत्राग्रयणाभ्यासः प्रकरणात् ॥ ३-१-२४ ॥ (पू)

[व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत न यवैः] किमयमत्राग्रयणाभ्यासः आहोस्वित् अन्तरालस्थयोः द्वयोर्दर्शपूर्णमासयोर्द्रव्यनियम इति।

किं प्राप्तम्? आग्रयणाभ्यास इति। कुतः? प्रकरणात्। आग्रयणप्रकरणे परिपठितोऽयं विधिः आग्रयणार्थ एव स्यात्। वाक्यसामर्थ्याच्च आग्रयणयागः व्रीहिभिरिष्ट्वा व्रीहिभिरेवैतमभ्यसेदिति गम्यते। तस्मादाग्रयणाभ्यास एवायमिति प्राप्ते ब्रूमः—

॥ दर्शपूर्णमासयोरन्तरालसंयोगान्न ह्यन्यदन्य[1] क्रमं विद्यते ॥ ३-१-२५ ॥ (सि)

अन्तरालसंयुक्ततया दर्शपूर्णसयोरेष नियमः चोद्येत। तस्यावधिराग्रयणविधेरन्तरालस्य कार्यं भवति। न च दर्शपूर्णमासाभ्यामन्यदेवंलिङ्गम् किञ्चिदन्तराले कर्म विद्यते। तस्माद्दर्शपूर्णमासयोरेवायं द्रव्यनियम इति।

॥ १५ ॥ स विकल्पः स्यात् व्रीहियवयोर्यथाग्निहोत्रे ॥ ३-१-२६ ॥

द्रव्याणां आग्रयणकर्मणि श्यामाकव्रीहियवानां विकल्पः यथा अग्निहोत्र— द्रव्याणां दधिपयःप्रभृतीनामिति। केवले कर्मण्युत्पन्ने अग्रपाके निमित्ते पश्चात

---

1. Ś न्यत्प्रत्यक्रमं

द्रव्यविधिः एकार्थत्वाद्विकल्पनिमित्तम् । द्रव्यसंबन्धभेदाच्च वाक्यभेदः स्यादिति । न च विशिष्टविधिः, एकार्थविधाने सति अनेकविधिशक्तिकल्पना । अर्थापत्तिक्रमत्वात् सस्यपृथक्त्वाद्यापत्तेः । सिद्धान्तः — निमित्तसंयोगाच्छ्यामाकानां अग्रपाकनिमित्तं वर्षासु कर्म, व्रीहीणामग्रपाकनिमित्तं शरदि, यवानां वसन्ते इति सर्वाणि चैतानि विशिष्टविधानानि। पक्तिभेदाच्चावर्तते । न त्वेवमग्निहोत्रहविः । 'अर्वाञ्चश्च पराञ्चश्च' इति विकल्पे विप्रतिषिद्धम् । तस्मात् समुच्चयः । विकल्पे सत्यपि शरदि विकल्पोऽयं स्यात् । ततश्च संवत्सरादधि भवतीति विप्रतिषिद्धम् । इतरथा पुनर्विप्रतिषिध्यते ।

॥ १६ ॥ स षण्मासादध्यधिभवेत् ॥ ३–१–२७ ॥ (पू)

संवत्सरो ह्येतदधि भवतीत्यत्र सन्देहः—किं पार्वणस्य गणितसंवत्सरस्य वादः आहोस्वित् सस्यपक्तिवाद इति । किं प्राप्तं? पार्वणस्य[1]वाद इति । एतेनैव लोके सर्वत्र संवत्सरव्यवहारदर्शनात्, यथा संवत्सरादागतो देवदत्त इति ।

॥ लिङ्गदर्शनाच्च ॥ ३ - १ - २८ ॥

द्वादशमासास्संवत्सरः इति गणितसंवत्सर एव द्वादशमासः, न सस्यपक्तिर्द्वादशमासात् । तस्मात् गणितसंवत्सर एवेति प्राप्ते ब्रूमः—

॥ सस्यपक्तेर्वाऽविप्रतिषेधात् ॥ ३ - १ - २९ ॥ (सि)

यथा 'संवत्सरे सस्यानि पच्यन्ते' इत्यादौ सस्यपाककालो य उचितः तस्य संवत्सरादग्रे पाकेऽपि । इज्यार्थश्च एवं न विप्रतिषिध्यते । दृष्टश्च सस्यसंपत्तेः संवत्सराभिधानं लोके यथा संवत्सरे सस्यानि पच्यन्ते इति । यथा द्वादशमासास्संवत्सर इत्यत्र । पाको ह्ययं संवत्सरे । अतः तत्र गुणवादेन शब्दस्य [प्रवृत्तिः ।][2]

---

1. पर्वणि समाप्यमानः पार्वणः

॥ अपूर्वत्वात् तथासोमे ॥

2. त्रिंशन्मासानि चातुर्मास्यानि विज्ञायन्ते 'त्रिंशद्वै रात्रयो मासाः एकैकया वा आहत्य वा देवेत्त्वात् दशद्वाशरात्रीरयुतं तावती संवत्सरस्य रात्रिस्तावती सङ्ख्याता इति चतुर्मास्यानां त्रिंशन्मासवत्वं दर्शयति । इदमधिकमुपलभ्यते मातृकासु ।

॥ १७ ॥ पार्वणमासानि विज्ञायन्ते ॥ ३ - १ - ३० ॥ (सि)

[1]पार्वणमासानि चातुर्मास्यानि । कस्मात् ? पार्वणसंवत्सरात् षड्भिरहोभिः सावनस्य संवत्सरस्यातिरेकात् । ये वै त्रयस्संवत्सरास्तेषां षट्त्रिंशत्पौर्णमासा ये द्वे तयोश्चतुर्विंशतिः त इमाश्चतुर्विंशतिमुपपद्यन्ते एष वै त्रयोदशमासः तमेतं संपादयति तमतियजत इति षडहातिरेकं(त्वं) दर्शयति । पञ्चसु सावनेषु संवत्सरेषु पार्वणमासं एकमुपजायमानं अनुद्दश्य पञ्चानां संवत्सराणां षष्टिपूर्णमासाननुक्रम्य एष वै त्रयोदशो मास इति उत्सृज्यौ मासौ प्रत्येकमेकवचनेन निदर्शयति । सावनाच्च षड्भिः सौर्यस्य पञ्चवर्षस्य षष्टिःसौर्यस्य मासा एकषष्टिसावनाः द्विषष्टिःपार्वणास्तयोश्च मासयोः उत्सर्गात् द्विषष्टिपार्वणमासं दर्शयति । तस्मात् पार्वणमासांस्त्रीनिष्ट्वोत्स्रष्टव्ये सति उत्स्रष्टव्यमासमुत्कृष्य संवत्सरान् मासांश्चोत्सृजति कर्ममध्ये नोत्स्रक्ष्यामीति । तच्चार्धतृतीयेषु उत्स्रष्टव्यमिति(त्रिंशत् ) संदर्शयति । त इमे षट्त्रिंशन्मासाः ता इमाश्चतुर्विंशतिमेव संपद्यन्त इति । तेषां षट्त्रिंशत् तयोर्विंशतिरिति वा त्रयोदशमासानवसाय कर्मयुक्तानामेव पर्वणां मासानाचष्टे । तस्मात् पार्वणाश्चत्वारो मासाः पर्वान्तराळकालः ।

॥ त्रिंशद्वै सावनस्य विप्रतिषेधात् पार्वणस्य यथा यद्येतान्ना-
लभेत इति ॥ ३ - १ - ३१ ॥

त्रिंशद्वै रात्रयो मासा इति च सावनस्य यान्यहोरात्राणि तेषु विप्रतिषेधात् पार्वणस्य यान्यहोरात्राणीति । यदि तेषु गौणाः कल्पिष्यन्ते श्रुत्या विरोधः ।

तथा 'यद्येनान्नालभेत' इति पश्वालम्भः शिर उपधानेन सहोच्यते । एवमिहाऽपि रात्रीणां सङ्ख्यापरिमाणे ।

॥ मासो वा ॥ ३ - १ - ३२ ॥

त्रीनिष्ट्वा चतुर्थमुत्सृजेत् अत्र संवत्सरप्रकरणात् चतुर्थमिति संवत्सरोऽभिप्रेतः त्रीनित्यधिकृतत्वात् इति प्राप्ते ब्रूमः—मासो वा । "एष वै त्रयोदशमासस्तमेवैतं

---

1. अत्र फाल्गुन्यां पौर्णमास्यां चातुर्मास्यमारभ्य चतुर्षु चतुर्षु मासेषु अन्यानि पर्वाणि विहितानि, तत्र कीदृशो मासो ग्राह्यः सावनो वा चान्द्रो वेति सन्देहे सावनमास इति पूर्वपक्षः बहिरेव द्रष्टव्यः । सिद्धान्तस्तु सूत्रेणोच्यते ।

सम्पादयति तमतियजते" इति चतुर्थं तृतीयमित्युक्त्वा एष वै त्रयोदशमास इति मासशब्देनापदेशात् मासोऽभिप्रेतः। तस्माच्चतुर्थमिति सप्तम्यर्थे द्वितीया। [यथा]

चतुर्थं पञ्चमं वापि पञ्च शाखा[:] फलानि चा।
यो जीवयत्यतद्धर्मं सचातितरमोदकः॥(?)

इति। कर्मप्रवचनीयलोपो वा चतुर्थं संवत्सरं प्रतीति।

॥ द्वौ पशाविष्ट्वा तृतीयमुत्सृजेदिति अनन्तरं यथा पुरस्तात्॥ ३-१-३३॥ (सि)

यथा त्रीनिष्ट्वा चतुर्थमुत्सृजेत् इति अन्तराऽऽम्नातं एवमत्रापि स्यात्।

॥ १९ ॥ आदेर्वा कर्मणोऽपवर्गात्॥ ३-१-३४॥ (पू)

यथा पञ्चानामेव कर्तव्यः षष्ठं न करिष्यामि इति आदिश........न्यमारभ इति। स हि वाक्यार्थः। षष्ठस्य कर्मणः आरम्भप्रतिषेधोऽयम्। पञ्चभिर्वर्षैः कर्मापवर्गात् षष्ठस्य कर्मणः आरम्भप्रतिषेधः। [इति प्राप्ते]।

॥ विज्ञयते च स त्रिषु त्रिषु संवत्सरेषु मासमुत्सृजेदिति। तेन मन्यामहे एतद्वचनमभ्यासो विप्रतिषेधात् यथा दाक्षायणयज्ञे॥ ३-१-३५॥ (सि.पू.)

स त्रिषु संवत्सरेष्विति पञ्चभ्यो वर्षेभ्य ऊर्ध्वमित्यवगम्यते। सति हि अभ्यासे एतद्वचनमुपपद्यते इति न्यायो गम्यते। तद्धि त्रिषु त्रिषु संवत्सरेष्विति वा। द्वातृतीयेष्वित्यर्थः। दश पार्वणमासोऽत्र गौणः संवत्सरोऽभिप्रतः। तस्य उक्तो विनियोगः द्विरिष्ट्वा त्रिरिष्ट्वेति। तस्मात् यावज्जीविकाभ्यासवाक्यशेषोऽयम्। चातुर्मास्यानां पञ्चवर्षप्रयोगे च यावदर्थः करोति।

॥ २० ॥ पञ्चसु चातुर्मास्येषु वैश्वानरपार्जन्ये पञ्चहोता च नापद्यन्ते एकोपक्रमत्वात् यथा आरम्भणीया॥ ३-१-३६॥

प्रक्रमसंयोगादेतेषां नैकवाक्यत्वाच्चोपक्रमस्य न प्रतिकर्म आवर्तेरन्। यथा दर्शपूर्णमासयोरारम्भणीया। तदुक्तं सकृद्वाऽऽरम्भ संयोगात् (पू. मी. ९-१-५५।)

॥ २१ ॥ यदि वसन्ता यजेत द्विरुपस्तृणीयात् द्विरभिघारयेत् ओषधयो वै शब्द ओषधीष्वेव पशून् प्रतिष्ठापयति यदि प्रावृषि यजेत सकृदुपस्तृणीयात् द्विरभिघारयेत् द्विष्या (?) पशून् अभिजिघन्तीति वैश्वदेवस्य प्रकरणात् ॥ ३ - १ - ३७ ॥ (पू)

वैश्वदेव एवैष वादः प्रकरणात्। तस्यापि पशुकामपक्षेषु प्रावृट्कालेषु प्रयोग उपपद्यते।

॥ वरुणप्रघासानां लिङ्गसंयोगात् यथा विप्रतिपन्नेषु ॥ ३-१-३८ ॥ (सि)

एतदन्यत् प्रत्यक्तमं विद्यते प्रावृषि वरुणप्रघासैरिति। प्रावृट्कालेन लिङ्ग-संयोगात् वरुणप्रघासान् प्रतिकृष्येत। तथा विप्रतिपत्त्यर्थं बहिः स्थित इति। यदुक्तं पशुकामपक्ष इति नहि तत्प्रत्यक्तमम्। तद्यथा जटिलं भोजयेदित्युक्ते अप्रकृतोऽपि जटिलः जटिलवचनलक्षितो भोज्यते। न प्रकृतोऽपि[अ] जटी लक्ष्यते। तद्वरुणप्रघासलिङ्गमेव।

॥ २२ ॥ वैश्वदेवेन पशुकामो यजेत यस्मिन् ऋतौ प्रभूतं गोषु पयः स्यादिति सर्वमविशेषात् ॥ ३ - १ - ३९ ॥ (पू)

हेमन्ते वसन्ते वा यस्मिन् ऋतौ स्वायां गवि बहु पयः स्यात तस्मिन् यजेताविशेषात्।

॥ वसन्तानां वा तस्य कालत्वाद्वैश्वदेवस्य यथा यस्मिन् ऋतौ बहुव्रीहिः स्यात् तस्मिन् यष्टव्यमिति वसन्त एव यजेत ॥ ३ - १ - ४० ॥ (सि)

प्रकृतेज्यादौ ऋतुशब्दो वर्तते। यथा यस्मिन् ऋतौ यस्य बहुव्रीहिः स्यात् तस्मिन् यष्टव्यमित्युक्ते नान्यकाल इज्येत प्रकृतवृत्तित्वादृतुशब्दस्य।

॥२३॥ वैश्वदेवस्य कालाभ्यासः प्रतिषेधे न विधीयते ॥३-१-४१॥ (पू)

वैश्वदेवेन यजेत पशुकामो न वरुणप्रघासैर्न साकमेधैः न शुनासीरीयेणेति (वैश्वदेवाङ्गमितरेणेति) वैश्वदेवः केवलं फलाय विधीयते। इतरेषां प्रतिषेधात् वैश्वदेवाङ्गमितराणि स्युः।

॥ वैश्वदेवस्याभ्यासः विहितस्य स्थाने
कालोत्कर्षः ॥ ३-१-४२ ॥ (सि)

इतरेषां पर्वणां स्थाने आपशुलाभाद्वैश्वदेवाभ्यासो विधीयते। कथं? न वरुणप्रघासेनेति—वैश्वदेवेनेति ह्यर्थः। तस्मात् नाप्यनङ्गत्वात् प्राप्तानां प्रतिषेधी स्यात्। तानि पशुलाभादुत्तरकालं उत्कृष्यन्ते। तस्माद्वैश्वदेवस्य कालाभ्यासः प्रतिषेधेन विधीयते। विज्ञायते च "यदा सहस्रं पशून् प्राप्नुयात् अथ वरुणप्रघासैर्यजेत् अथ साकमेधैरथ शुनासीरीयेण" वैश्वदेवेनैतस्मात् कालादित्यर्थः।

आपशुप्राप्तेर्वैश्वदेवेन तेषां स्थाने [यजेत] प्राप्य चानन्तरं वरुणप्रघासादि-[भिरि]ति स्वकालादित्यस्य वाक्यस्यार्थः।

॥ २४ ॥ मासमग्निहोत्रं जुह्वति मासं दर्शपूर्णमासाभ्यामिति स्वकालः
स्यात् प्रकृत्युपबन्धात् ॥ ३-१-४३ ॥ (पू)

स्वे स्वे काले प्रयोगः। एवं प्रकृत्यनुग्रहस्यावैगुण्यम्।

॥ अहरहर्वा चोदितत्वात् यथा त्रिवृता मासं ततः अहरहः
सकृदग्निहोत्रं हूयेत ॥ ३-१-४४ ॥ (सि)

यथा "त्रिवृता मासं" इति त्रिवृदहः क्रियते कर्मणां त्रिंशद्विषये तद्वदिह त्रिंशत्कृत्वोऽभ्यसेत्। चत्वारोऽभिप्लवाः पृष्ठ्यहः षडहः स मास इति मासशब्दे प्रकृते त्रिंशत्कर्माणि विधीयन्ते। नाहानि। इहापि तेषां कर्मणां विषये तेनैव शब्देन विधानात् तावन्त्येव कर्माणि विहितानि इहापीति पश्यामः। तस्मादिहापवर्गः त्रिंशत्कृत्वोऽभ्य(सेदिति।) स्येति।

इति श्रीदेवस्वामिनः कृतौ सङ्कर्षकाण्डभाष्ये
तृतीयस्य अध्यायस्य प्रथमः पादः॥
॥ कालपादः समाप्तः॥

—: * :—

## ॥ द्वितीयः पादः ॥

### ॥ १ ॥ तत्सर्वार्थमविशेषात् ॥ ३ - २ - १ ॥ (पू)

अस्मिन् पादे अपूर्वत्वात्तथा सोम[1] इत्यारभ्य अपादसमाप्तेः भावदासमेव भाष्यमिति । आधाने ब्राह्मौदनिकस्याग्नेः समारोपणमाम्नाय मन्थनं विधीयते "शल्कैस्तां रात्रिमग्निमिन्धीत । तस्मिन्नुपव्युषमरणी निष्टपेत् यथा ऋषभाय वाशितान्या विच्छायति तादृगेव तत् । अपोदूह्य भस्माग्निं मन्थति । सैव साग्नेः सन्ततिः" इति । तदेतत् ब्राह्मौदनिकस्य मन्थनं सर्वार्थं उत गार्हपत्यार्थमिति ।

किं प्राप्तम् ? अविशेषात् । न तत्र कश्चिद्विशेषो गम्यते—एतदर्थमेतन्निर्मन्थनमिति ? निर्मथितं विभज्य सर्वेऽग्नय आधीयेरन् इति । अपि च कार्यप्रयुक्तं मन्थनं, कार्यं चाग्नयः प्रयोजनप्रयुक्तत्वात् अपूर्वाविशेषात्[2] सर्वाग्न्यर्थं मन्थनमिति प्राप्ते ब्रूमः—

### ॥ गार्हपत्यार्थं ब्राह्मौदनिकं स्यात् गार्हपत्येन संवत्सरमासीतेति तत्संयोगात् ॥ ३ - २ - २ ॥

गार्हपत्यार्थं ब्राह्मौदनिकस्य मन्थनं स्यात् । ब्राह्मौदनिके गार्हपत्यत्वश्रावणात् गार्हपत्ये संवत्सरमासीतेति भविष्यद्गार्हपत्ययोगात् । गार्हपत्यशब्दसंयोगात् स्वार्थे [ष्यत्रि]कारणे कार्यवदुपचारात् । तस्मात् कृत्स्नेन निर्मथितेन गार्हपत्य एवाभिधीयते ।

### ॥ २ ॥ लौकिक इतरे यथान्यानि द्रव्याणि ॥ ३-२-३ ॥ (पू)

लौकिक इतरेऽग्नय आधीयेरन् उत गार्हपत्यादिति सन्देहः । लौकिकं स्यात् सर्वार्थत्वादित्यनेन न्यायेन यथा अन्यानि द्रव्याणि व्रीह्यादीनि तथा तेऽप्यग्नयः लोकवत् लौकिकोपायैः [आधीये]रन्निति प्राप्ते ब्रूमः—

### ॥ गार्हपत्याद्वा आहवनीयो लिङ्गात् ॥ ३-२-४ ॥

"अयं चापरो भूः असौ पूर्वो भुवः तमपरमाधत्ते भूर्भुवः सुवरिति उभावेतौ सहाधत्ते एषो ह्येतस्य योनिः एतस्माद्ध्येषोऽधिप्रणीयते" इति गार्हपत्यादाहवनीय

---

1. This Sutra is not found in this pada. But it is in pada 1.
2. अपूर्वविशेषात्

आधेयः । एषो ह्येतस्य योनिरिति गार्हपत्यं आहवनीयस्य प्रकृतिं दर्शयति । एतस्माद्ध्येषो विह्रियते इति गार्हपत्यादेव विहारं दर्शयति ।

ननु लिङ्गमिदं का प्राप्तिरिति । उच्यते । आहवनीयादयः शब्दाः संस्कारवचनाः गार्हपत्यात्तस्याधानं संस्कारः । तस्मिन्नसति आहवनीयत्वमेव न स्यात् इति ।

अपि च शब्दसंस्पर्शमन्तरेण लौकिकस्योपादानं स्यात् इह गार्हपत्यादाहवनीयस्यादानमिति ।

॥ ३ ॥ आहवनीयात् सभ्यावसथ्यौ ॥ ३-२-५ ॥ (पू)

किमेतौ सभ्यावसथ्यौ आहवनीयात्, उत लोकत इति सन्देहः । किं प्राप्तम् ? आहवनीयादिति । कथं ? सहाधानवचनात् । "भूर्भुवस्स्वरिति उभावेतौ सहाधत्ते सहि तस्य योनिः । तस्मात् सोऽभिप्रणीयत" इति । एतच्च सहाधानमाहवनीयात् सभ्यावसथ्यविषयम् । न गार्हपत्याहवनीयविषयम् । तयोरुपादानोपादेययोः सहाधानासम्भवात् । अपि च 'यदेव तृतीयं ज्योतिस्तदेव तेनाप्यते' इति तेन पूर्वेणाहवनीयः[येन] तृतीयं ज्योतिराप्यते इति एतमेवार्थं दर्शयति । तस्मादाहवनीयादेव सभ्यावसथ्याविति प्राप्ते ब्रूमः—

॥ पृथक्प्रकल्प्येतां वा शब्दपृथक्त्वात् यथा ऋत्विजः ॥ ३ - २ - ६ ॥ (सि)

पृथगेव तौ लोकतः कल्प्येते । कुतः ? नामभेदात् । यथा ऋत्विजां पृथक् प्रक्लृप्तिः नामभेदात् । लोके सभ्यावसथ्यसंज्ञा । तस्माल्लोकतश्च प्रक्लृप्तिरिति ।

यदेव तृतीयं ज्योतिः तदेव तेनाप्यते इति उत्तरवैदिकस्यैतद्दर्शनम् । स हि तस्मात् प्रणीयते । विशेषग्रहणात् । इतरयोस्सहितयोर्लोकत इति । सोऽभिप्रणीयत इति एकवचनं द्वयोः सभ्यावसथ्ययोः असमञ्जसं स्यात् । प्रकृतत्वादौत्तरवेदिकस्य सोऽभिप्रणीयत इति सर्वनाम्ना परामर्शः । तयोर्लोकतः प्रक्लृप्तिरिति ।

॥ ४ ॥ [1]आम्नातं दक्षिणाग्नेः ॥ ३ - २ - ७ ॥

दक्षिणाग्निरपि किं लोकतः आधेयः उत गार्हपत्यादिति सन्देहे—प्रकल्पनमाम्नातम् । विशेषाग्रहणात् प्रयोगस्वभावत्वाच्च लोकत इति प्राप्ते ब्रूमः ।

1. B. D. reads आम्नातत्वात् ।

॥ 'निर्मन्थ्यात् दक्षिणाग्निमादधीत' इत्येक[केषां] दर्शनम् ॥ ३ - २ - ८ ॥ (सि)

सर्वाग्नियोनित्वात् गार्हपत्यादेवाधानमिति ॥

॥ ५ ॥ व्याख्यातं धारणम्[1] ॥ ३ - २ - ९ ॥ (पू)

सर्व एवाग्नयो धार्या उत नेति विचार्यते। किमिति युक्तम्? धारणं व्याख्यातम्—द्रव्यस्याकर्मकालनिष्पत्तेरिति[2]। धृते आहवनीये कर्म शक्यते कर्तुं नान्यथा। तस्माद्धारणीय एवाहवनीय इति प्राप्ते ब्रूमः—

॥ अनुगच्छेद्वाऽऽहवनीयो लिङ्गात् ॥ ३ - २ - १० ॥ (सि)

कर्मापवर्गे अनुगच्छेद्वा आहवनीयो गार्हपत्ये। कुतः? लिङ्गात् "नान्तराग्नी वीयात् यदन्तराग्नी वीयात् यजमानस्यामेध्यं तदनुसंसीदेत् अथो रुद्रस्य धनुः घातुकं यात्। कामं हुते सञ्चार्यं पश्चाद्धि स तर्हि गत" इति "पश्चाद्धि स तर्हि गत" इति आहवनीयस्य कर्मापवर्गेऽ(व)स्थानं दर्शयति।

इदमपरं लिङ्गम्—उद्धरेदेव। सायं उद्धरति प्रातः इति प्रतिकर्मोद्धरणं दर्शयति। तस्मादुद्धृतोऽनुगच्छेत्।

ननु लिङ्गमेतत् का प्राप्तिरिति? उच्यते। अजस्रपक्षे चाहवनीयस्य कर्मापवर्गे धारणस्याम्नानमिति।

॥ ६ ॥ प्रत्यर्थमाधानमिति ॥ ३ - २ - ११ ॥ (पू)

संस्कारस्य कर्मापवर्गेऽपवर्गात् अर्थप्रयुक्तत्वाच्च सम्मार्जनवत् प्रतिकर्म कर्तव्यमाधानमिति प्राप्ते ब्रूमः—

॥ तुल्यश्रुतित्वाद्वा इतरैराहितस्य धारणयोगात् वचनाद्यथा समारोप्य ॥ ३ - ३ - १२ ॥ (सि)

सकृदाहितस्याहवनीयस्य धारणयोगः। कथं? सर्वेषामग्नीनां आधानश्रुतेस्तुल्यत्वात्। यथा गार्हपत्यस्य सकृदाहितस्य जागरणं अरणिर्वा धारणं तथैवास्या-

---

1. Ś. reads जागरणम्। 2. पू. मी. ११-३-२

प्याहवनीयस्य गतिः—अरणौ वा धारणोपाय इति। ननु गार्हपत्यमसौ त्यक्त्वा गच्छेदित्येतन्नोपपद्यते। सत्यमेवम्। न तत् प्रत्यक्षादिगोचरं किंतु शास्त्रसंवेद्यं अग्नीनां गमनं यथाऽरणिगमनमिति।

अथवा तुल्यो धारणे योगः अग्नीनां वचनात् प्रतिपत्तेः आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च इति। आहवनीयश्चेदपूर्वः प्राप्नुयात् धारणमितरैर्न तुल्यमाहवनीयस्येति। न च प्रतिपत्तिः आहवनीयाधानं प्रयोजयेत्। अपि वा प्रतिपत्तित्वात्तन्त्रंस्यात् (पू. मी. ११-४-३४) इति न्यायेनेति। संमार्जनस्य सन्निपातित्वात् प्रतिकर्म प्रवृत्तिः।

॥ ७ ॥ दक्षिणाग्नेरेतेन व्याख्यातम् (३-२-१३) (सि)

प्रत्युद्धरणमाधानं सकृद्दक्षिणाग्नेरिति पूर्वाधिकरणेन व्याख्यातम् इत्यतिदेशः।

॥ ८ ॥ पूर्वं गार्हपत्यादाहवनीये उद्धृते पुनरनुगते तत वोद्ध्रियेत तद्गतत्वात् ॥ ३-२-१४ ॥

प्रतिकर्म प्रादुष्करणं कर्तव्यमित्युक्तम्। तत् अरणीत उत गार्हपत्यादिति सन्दिह्यते। तत्सिद्ध्यर्थं चेदं निरूप्यते। किमाहवनीयः कर्मापवर्गे प्रतिगच्छन् अरणिं प्रतिगच्छति, किं वा गार्हपत्यमिति। किं प्राप्तम्? अरणितः प्रादुष्करणमिति। कथं? अग्नेररणियोनित्वात्। प्रकृतौ च विकारप्रतिसंसर्गदर्शनात्, यथा-पृथिव्यां घटादीनाम्। [न हि] आहवनीयस्य गार्हपत्यो योनिः। निष्क्रमणाद्योनिररणिरग्नेः। कार्यं चाग्निः। कार्यस्य च कारणे प्रतिसंसर्गः। तस्मादरणितो मन्थनमिति प्राप्ते ब्रूमः—

गार्हपत्यादुद्धृतेऽप्याहवनीये पुनरन्यस्मै कर्मणे तत एवोद्धरणं नारणितः। गार्हपत्यमेव कर्मापवर्गे प्रतिगतत्वादाहवनीयस्य। शास्त्रेणाधिकारो गम्यते न लोकतः। शास्त्रेण च गार्हपत्यादाहवनीयस्याशासनं गम्यते। तस्मात् गार्हपत्यादेव प्रतिकर्मोद्धरणं गम्यते।

॥ लिङ्गाच्च ॥ ३-१-१५ ॥

'गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरति' इति। अग्निहोत्रे गुणविधिपरमेतद्वाक्यं प्रतिकर्मोद्धरणं प्राप्तं दर्शयति।

॥ ९ ॥ अहोमार्थेष्वाहवनीयः श्रूयमाणोऽनवेतः शब्दनित्यत्वात्
॥ ३-२-१६ ॥ (सि)

" आहवनीयमुपतिष्ठते " इति श्रूयमाणे संशयः—किमुद्धृत्योपस्थेयं आहोस्वित् आयतनस्थ एवेति । [किं प्राप्तं ? अनुद्धृत्येति]

अनुद्धृतस्यापि शास्त्रतः आहवनीयत्वानपायादिति प्राप्ते—

उच्यते । आहवनीयशब्दो विकृतमायतनस्थानं ब्रूते । शब्दार्थसंबन्धस्य नित्यत्वात् । न च होमेनाहवनीयः क्रियते । सिद्धे ह्याहवनीये होमविधानात् । यथा होमे तथा कार्यान्तरे शब्दार्थयोरव्यभिचारस्य अनन्यथात्वात् ।

॥ १० ॥ अपवृत्ते कर्मणि धार्यमाणो लौकिकोऽर्थसंयोगात्
यथा समारूढे ॥ ३-२-१७ ॥

अपवृत्ते कर्मणि धार्यमाणं ज्योतिः वैदिकं न वेति विचार्यते । शास्त्रारोपित-वैदिकबुद्धज्योतिषः शास्त्रादेव तद्बुद्ध्यपगमस्य न्याय्यत्वात् । न शास्त्रं स्पष्टमस्य अपवृत्ते कर्मणि ज्योतिर्वैदिकं न भवतीति । यद्यपि आहवनीयादयश्शब्दाः संस्कार-वचनाः तथापि अधिकरणज्योतिस्संस्काराणां ज्योतिर्भावित्वात् तत ज्योतिर्वैदिकमेवेति प्राप्ते ब्रूमः—

अपवृत्ते कर्मणि धार्यमाणोऽग्निः लौकिक एव स्यात् । कथं ? अर्थसंयोगात् । अकार्ययोगित्वात् । संस्काराणां कार्यापवर्गेषु प्रतिगमनात् । यथा समारोपणे कृते विद्यमानमपि ज्योतिर्लौकिकं एवमपवृत्ते कर्मणि ।

॥ लिङ्गदर्शनाच्च ॥ ३-२-१८ ॥

"कामं हुते सञ्चर्यं पश्चाद्धि स तर्हि गत" इति कर्मापवर्गे प्रतिगमनमग्नेर्दर्श-यति । "अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत् अपर आदीप्यानुद्धृत्य इत्याहुः तत्तथा न कार्यं यद्भागधेयमभिपूर्वं उद्ध्रियते किमपरोऽभ्युद्ध्रियेतेति तान्येवावक्षाणानि सन्निधाय मन्थेत्" इति उपशान्ते न प्रवृत्ते कर्मणि अप्रतिगमनमाह । तस्मात्कर्मापवर्गे विद्यमानमपि ज्योतिर्लौकि-कमेवेति ।

॥ ११ ॥ एतेन सोमो व्याख्यातः ॥ ३ - २ - १९ ॥ (पू)

सोमे दीक्षणीयादिषु प्रतिकर्म उद्धरणं कर्तव्यं उत दीक्षणीयाग्निरेव धारणीय इति ।

किं प्राप्तम् ? एतेन सोमो व्याख्यात इति पूर्वाधिकरणसिद्धान्तेन प्रतिकर्मोद्धरणमिति प्राप्ते ब्रूमः —

॥ दीक्षणीयाग्निर्धार्येत संस्कारयोगात् देवतापरिग्रहणं श्रूयते ॥ ३ - २ - २० ॥ (सि)

दीक्षणीयाग्निरेव धार्येत, न प्रतिकर्मोद्धरणम् कुतः ? संस्कारसंयोगात् देवतापरिग्रहणार्थलक्षणसंस्कारो दीक्षणीयायां श्रूयते "देवता एवोभयतः परिगृह्य यजमानोऽवरुन्धे" इति । परिगृहीतदेवतावरोपितसंस्कारश्चाहवनीयो यद्यनुगच्छेत् संस्कारो विच्छिद्येत । नचैतद्दीक्षणीयायामुद्धरणं अप्राकृतसामर्थ्यत्वेन, अपूर्वत्वात् । तेनैव च प्रसङ्गादिष्टिषु कार्यसिद्धेः । तस्मात् सकृदुद्धृत एवासौ आसोमसमाप्तेराहवनीयो धार्यते ।

॥ लिङ्गदर्शनाच्च ॥ ३ - २ - २१ ॥

"गार्हपत्ये यजमानस्य व्रतमधिश्रित्य अपूर्वमग्निमुपच्चरन् परेणाहवनीयं व्रतमाहृत्य प्रयच्छति अपरेणाहवनीयं" इति सकृदुद्धृतमाहवनीयं दर्शयति[1] ।

॥ १२ ॥ तदुत्तरवेद्यां कृत्स्नं प्रणयेद्धोमसंयोगात् स आहवनीयः ॥ ३ - २ - २२ ॥ (पू)

[सोमे प्राञ्चमग्निं प्रणयन्तीति प्रणीयमानः आहवनीयः] सकल एव प्रणीयेत उत एकदेशमिति ।

किं प्राप्तं ? सकलमिति । कथं ? होमसंयोगात् यस्मात् औत्तरवेदिक आहवनीयस्सर्वहोमानामधिकरणं; अतः कृत्स्नं उत्तरवेद्यां प्रणयेयुरिति ।

---

1. भेदो नास्तीत्यर्थः

॥ शेषं वा कुर्याल्लिङ्गात् ॥ ३ - २ - २३ ॥ (सि)

" तस्मात् पश्चात् प्रति पूर्वमग्निमभ्युदेति " " पूर्वमग्नि " इति शालमुखीयो यस्तस्मिन्नेव अग्निशेषं दर्शयति । तस्मादेकदेशमेव प्रणयनं न कृत्स्नमिति । उद्यत-होमश्चाधीयते—" न वा कृत्रिमः कश्चिदागमः पूर्वो यत्सन्नपरो भवासि ।" " घृतेन त्वं तनुवो वर्धयस्व " " मामाहिंसीरधिगतं पुरस्तात्स्वाहा " इति । पूर्वो यत्सन्नपरो भवासीति सति अग्निशेषे उपपद्यते । तथाऽपरं लिङ्गम् —" एतमाहवनीयमाहवनीयात् प्राञ्चं प्रणयन्ति " इति पञ्चमी निर्देशात् । ध्रुवं च यदपादाने तत्र पञ्चमी भवति । सत्येवाग्निशेष उपपद्यते ।

॥ १३ ॥ आहवनीयविभागस्य पुरस्ता-
दुद्ध्रियते ॥ ३ - २ - २४ ॥ (पू)

किं शालामुखीयप्रहृतावुभावाहवनीयौ उत शालामुखीयो गार्हपत्य इति ?

उद्धृत आहवनीयस्स एव द्विधा कृतः तस्मादुभावप्याहवनीयावेताविति ।

॥ गार्हपत्यो वा शेषो लिङ्गात् ॥ ३ - २ - २५ ॥ (सि)

" सम्मार्ष्टि गार्हपत्यौ " इति प्राजहितशालामुखीययोः । गार्हपत्याद्धृत आहवनीयः स एव द्विधा कृतः । तस्मादुभावप्याहवनीयावेताविति गार्हपत्यशब्दाभि-धेयत्वं गम्यते ।

ननु लिङ्गमेतत् । का प्राप्तिः ? प्रहृते होमाम्नानात् । " सर्वाण्याहवनीय-कार्याणि प्रहृते कर्तव्यानि शालामुखीये गार्हपत्यकार्याणि " ।

( वर्णकान्तरम् )

॥ १४ ॥ आहवनीयविभागः स पुरस्तादुद्ध्रियते । (पू)

किमेक एवाहवनीयः [1]प्रहृतशालामुखीयभेदेन हि मन्यते । आहोस्वित् प्रहृत आहवनीयः गार्हपत्य इतर इति ।

---

1. प्रहृतः—उत्तरवेदिगतः आहवनीयः

आहवनीय एवायं द्विधा व्यवहृत इति मन्यामहे । गार्हपत्यात्प्रणीतस्य ज्योतिषो द्विधाकरणात् । यथा वरुणप्रघासेषु वेदिभेदेन द्विधा कृतोऽप्याहवनीय एव तद्वदत्रापीति प्राप्ते ब्रूमः—

॥ गार्हपत्य एव तच्छ्रूयते ॥ (सिद्धान्तसूत्रे पाठान्तरम् ) (सि)

गार्हपत्य एवायं शालामुखीयः । तत्र गार्हपत्यशब्दः श्रूयते । सम्मार्ष्टि गार्हपत्याविति । प्राजहिते शालामुखीयगार्हपत्ययोगो न विरोत्स्यते ।

॥ १५ ॥ सर्वेषां गार्हपत्यानामविशेषात् ॥ ३ - २ - २७ ॥ (पू)

स्थितमिदं शालामुखीयो गार्हपत्य इति । तत्र सर्वाणि गार्हपत्यकार्याणि न वेति विचार्यते। किं प्राप्तम् ? सर्वाणि । कुतः ? विशेषाभावात् । अयमत्र पदार्थः कर्तव्यः, अयं नेति विशेषो न गम्यते। गार्हपत्यश्चेच्छालामुखीयः तत्र सर्वाणि कर्तव्यानीति प्राप्ते ब्रूमः—

॥ श्रुतिभूतान [नां दार्शिक] प्रकृतेश्चाधिकारात् ॥ ३ - २ - २८ ॥ (सि)

शालामुखीयस्य दीक्षणीयानन्तरकालं प्रणयनं सोमार्थमित्युक्तम् । सोमप्रकरणे यानि कर्माणि श्रूयन्ते "द्वाभ्यां गार्हपत्ये जुहोति" इत्येवमादीनि तावन्त्येव तत्र क्रियेरन् । प्रकरणात् । यानि च दर्शपूर्णमास [प्रकृतिकानि] तेषामपि नात्यन्तविकारित्वं स्वेन गार्हपत्येन संबन्धात् ।

॥ लिङ्गदर्शनाच्च ॥ ३–२–२९ ॥

"प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्ति अन्वनांसि प्रवर्तयन्ति अथवा अस्यैष धिष्णियो हीयते सोऽनुध्यायति स ईश्वरो रुद्रो भूत्वा प्रजां पशून् यजमानस्य शमयितोर्यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणं हरेत् तेनैवैनं भागिनं करोति" इति पशुश्रपणेनैव प्राजहितस्य भागित्वं ब्रुवन् अन्येषां गार्हपत्यकार्याणां शालामुखीये करणीयत्वं मन्वीतेति ।

॥ १६ ॥ आहवनीयात् (धिष्णियान्) विहरेद्धोमसंयोगात् ॥ ३ - २ - ३० ॥ (पू)

आहवनीयादाग्नीध्रीयं प्रत्युद्धर्तव्यं उत शालामुखीयादिति सन्दिह्यते । किं प्राप्तम्? प्रहृतादाग्नीध्रीयमुद्धरेदिति । कुतः? होमसंयोगात् । प्रहृतस्य प्रकृतहोमार्थत्वात् अन्यस्यापि होमार्थस्य तत एव विहरणं न्याय्यमिति प्राप्ते—

॥ शालामुखीयाद्वा देशसंयोगात् ॥ ३-२-३१ ॥ (सि)

शालामुखीयादेव प्रणयनम्—

" अग्निप्रथमाः प्राञ्चोऽभिप्रव्रजन्ति सोमप्रथमा वा "

" अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहि " इति " अग्निप्रथमाः प्राञ्चोऽभिप्रव्रजन्ति " इति (यत)[प्राग्गमन] विधानात् । अग्नीषोमाभ्यामिति सह सोमेन प्रणयनविधानात् शालामुखीयादाग्नीध्रं परेयुरिति ।

अपरं दर्शनम्—आहवनीयैकदेश एव आग्नीध्रीयःहोमसंयोगात् यावदस्योद्धरणं तावत् अनभिव्यक्तत्वमेव शालामुखीयेऽस्य । गार्हपत्यार्थं अवितत्वात् आहवनीयशेषस्य; उद्धृतेऽस्मिन् गार्हपत्याविर्भावात् । तथा च स्मृतिः—' एषोऽत-ऊर्ध्वं गार्हपत्यो भवति ' इति ।

॥ १७ ॥ आहवनीयात् धिष्णियान् विहरेद्धोम-
संयोगात् ॥ ३-२-३२ ॥ (पू)

" अङ्गारैर्द्वे सवने विहरति शलाकाभिस्तृतीयं सशुक्रत्वाय " इति श्रूयमाणे सन्देहः—किमाहवनीयात् द्विसंयुक्तात् [उत आग्नीध्रीयादिति । तत्र] आहवनीयाद्धोमविहरणं युक्तम् अर्थसामान्यात् । तस्मादाहवनीयात् धिष्णिया विह्रियेरन्निति प्राप्ते ब्रूमः—

॥ आग्नीध्रीयाद्वा आम्नायतः ॥ ३-२-३३ ॥

यत एवं प्राप्ते वचनं ' आग्नीध्रीयात् धिष्णियान् विहरति ' इति । होमसंयोगोऽत्र न विरुद्ध्यते । तस्याहवनीयैकदेशत्वात् । अनुसवनमाग्नीध्रीयादेव धिष्णिया विह्रियेरन्निति ।

॥ १८ ॥ अनुसवनं सवनसंयोगात् ॥ ३-२-३४ ॥ (पू)

धिष्णियान् प्रकृत्य श्रूयते—[1]अङ्गारैर्द्वे सवने विहरति शलाकाभिस्तृतीयं" इति। किं प्रतिसवनमेव विहरणं उत चतुर्थमर्हति इति सन्दिह्यते। किं प्राप्तं ? प्रतिसवनमेवेति। कुतः ? सवनसंयोगात् प्रतिसवनं सकृदेव विह्रियेरन्।

अङ्गारैर्द्वे सवने विहरति शलाकाभिस्तृतीयं इति वचसो[गुणवि]धिपरत्वान्न विहरणेयत्तावधारणार्थत्वमिति। उच्यते। सत्यं; यदि विहरणान्तरं अभविष्यत् (भविष्यति) तस्यापि गुणो व्यधास्यत्। न तु विधीयते। तस्मान्नास्ति सः। ननु समुत्कर्षणं चतुर्थस्य विहरणस्यैको गुणो विधीयते। नेति ब्रूमः, पात एवैतत्। "समुत्कर्षयित्वा ज्योतिष्मतीः कृत्वा" इति प्रागुत्कर्षणमात्रं विधीयते न हि विहरणान्तरम्। तस्मात् प्रतिसवनमेव विहरणमिति प्राप्ते ब्रूमः—

## ॥ चतुर्थं वा अग्निष्टोमसामलिङ्गात् ॥ ३-२-३५ ॥ (सि)

"साम वा अग्निष्टोमः तस्य वा हितास्तनवो यद्धिष्णियाः" इत्यग्निष्टोमसाम प्रकृत्य ज्योतिष्मतीः कृत्वेति ब्रुवन् विहरणान्तरमेव[2] दर्शयति। नहि धिष्णियेषु प्रतिजागरणं संभवति। कार्यकालत्वाद्विहरणस्य।" "एतावतीर्वा अग्नेस्तनूः षोढा सप्त सप्त एता एव प्रीणाति।" इति न चाग्निष्टोमसामकालविहरणमन्तरेण अग्नितनूनां द्विचत्वारिंशत्सङ्ख्या पूर्येत। तस्याश्च पूरणं श्लोकद्वयेन पूर्वाचार्यैः विहितम्।

महाग्नयश्चत्वारः शामित्राश्च त्रयः पृथक्।
निर्मन्थ्याश्चापि चत्वारः त्रयश्चोपयजः पृथक् ॥
प्रातस्सदसि षड्धिष्ण्या मार्जालीयश्च (सक) सप्तधा ॥

तस्मादस्ति चतुर्थं विहरणम्। इति।

## ॥ १९ ॥ [3]अनुसवनं व्याघारणमविशेषात् प्रत्यङ्ङासीनो धिष्णियान् व्याघारयतीति ॥ ३-२-३६ ॥ (सि)

तृतीयसवने व्याघारणं कर्तव्यं उत प्रतिसवनमिति। किं प्राप्तम् ? 'धिष्णियान् व्याघारयति' इत्यविशेषश्रुतेः प्रतिसवनं व्याघारणमिति।

---

1. A & R इत 2. प्रकरणान्तरमेव मा.
3. B. reads तृतीयसवने विशेषश्रुतेः प्रतिसवनं विह्रियेरन् विप्रतिषेधात्।

॥ तृतीयसवने चाविशेषलिङ्गात् ॥ ३ - २ - ३७ ॥

तृतीय एव घृताहुतिं प्राप्स्यसि न सोम्याः प्रस्तुतो युष्मान् सोमेन समयं ममार्हथ(?) इति [1]तृतीयसवने विशेषश्रुतेः प्रतिसवनमेव विह्रियेरन्निति ।

॥ विप्रतिषिद्धो वा एकवाक्ययोगात् कालहविषोरिति बादरायणः ॥ ३–२–३८ ॥ (सि)

एकस्मिन् वाक्ये कालहविषोर्विधिः विप्रतिषिद्धः वाक्यभेदप्रसङ्गात् । यदि तृतीयसवनं कालो नियम्येत तदा हविर्न विधियेत अथ हविर्न काल इति ।

॥ २० ॥ तस्मात्तेषु जुह्वतीत्यर्थः[2] ॥ ३–२–३९ ॥

· अनुसवनं व्याघारणं धिष्णियानामनुमतमिति स्थितम् । अधुनेदं विचार्यते— किं सोमेनैषां व्याघारणं कर्तव्यम् उताज्येनेति । सोमेनाहवनीयं, आग्नीध्रीयं होत्रीयं मार्जालीयं च, आज्येनेतरत् । कुतः ? लिङ्गात् । "तेषां ये नेदिष्ठं पर्यविशन् ते सोमपीथं प्राप्नुवन् आहवनीय आग्नीध्रीयो होत्रीयो मार्जालीयः" इति प्रकृत्य "तस्मात्तेषु जुह्वति" इति अवसाने प्रकृतस्य सोमस्य तेषु जुह्वति सोममित्यर्थः । आहवनीयग्रहणं च प्राप्तेः अविध्यर्थः । यथा चक्री च सद इति (?) । विहित प्रतिषेधात् सोमेनाज्यं विकल्पते । "अभिघार्य वषट् करोति द्विर्ह्येतेन सोमपीथेनार्ध्यन्ते" इति निन्दार्थवादसामर्थ्यात् प्रतिषेधोऽवसीयते । आज्येनेति विधिः विहितप्रतिषिद्धत्वात् सोमेनाज्यं विकल्प्येत व्याघारण इति ।

॥ २१ ॥ तेषां वायव्यं पात्रं चमसो वा प्रकरणात् यथा शूर्पेण जुहोतीति ॥ ३–२–४० ॥

धिष्णियानां व्याघारणे वायव्यं [पात्रं] ग्रहचमसमिति । कथं ? प्रकरणात् । प्रकृतत्वादित्यर्थः । सर्वत्र द्रव्यविधौ प्रकृतद्रव्यातिक्रमप्रमाणाभावात् यथाऽस्यैव ग्रहणमेवमत्रापीति प्राप्ते ब्रूमः—

---

1. तृतीयसवने आज्येन व्याघारणम् इतरयोः सोमेनेत्यर्थः । न तु सामान्यविहितस्य व्याघारणस्य तृतीयपरतया उपसंहारः—भा.दी.

2. B ms. reads तस्माद्धोमैक वाक्ययोगात्

"[1]परिप्लवमानात् द्रोणकलशात् परिप्लवया राजानमादाय प्रत्यङ्ङासीनो धिष्णियान् व्याघारयति" इति वचसा .... .... [परिप्लवाया एव व्याघारणेपि करणत्वम् । ]

॥ २२ ॥ सोमे होमेष्वाज्यं हविश्चोदनापृथक्त्वात् ॥
३ - २ - ४१ ॥ (सि)

सन्ति सोमे 'वैसर्जनानि जुहोति' इत्येवमादयः दर्विहोमाः । ते किं सोमद्रव्यकाः आहोस्वित् आज्यद्रव्यका इति सन्देहः । किं प्राप्तम् ? सोमद्रव्यका इति । उत्पत्तावुपात्तद्रव्यविशेषात् । [अद्र]व्यस्य च होमस्य सन्निहितद्रव्याकाङ्क्षत्वाच्च । दर्विहोमानां प्रधानद्रव्यमेव होमेषु इति प्राप्ते ब्रूमः—

सोमे ये दर्विहोमास्तेषु आज्यं हविः स्यात् कुतः ? चोदनापृथक्त्वात् । प्रधानयागेषु चोदितद्रव्यं न दर्विहोमेषु प्राप्नुयात् विधिभेदात् । यत्र चोदितस्तत्र स्यात् । तेनानादिष्टद्रव्याणां आज्यद्रव्यं स्यादिति । तथा च न्यायमूला शिष्टाचारस्मृतिः "आज्यद्रव्यं हविरनादेशे" इति ।

॥ लिङ्गाच्च ॥ ३-२-४२ ॥

'धिष्णियव्याघारणसम्पातेनाज्येन पात्नीवतं श्रीणाति' इत्याज्यद्रव्यका दर्विहोमाः । तेप्यत्र दर्शयति ।

॥ २३ ॥ स वैव स्यादित्याहवनीयस्यायं
वादः ॥ ३-२-४३ ॥ (पू)

सदसो ह्यनन्तरे वाक्ये "अस्यैष धिष्णियो (विह्रियते)ह्रीयते सोऽनुध्यायति स ईश्वरो रुद्रो भूत्वा प्रजां पशून् यजमानस्य शमयितोः यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणं हरेत् तेनैवैनं भागिनं करोति । यजमानो वा आहवनीयो यजमानं वा एतद्विकर्षन्ते यदाहवनीयात् पशु श्रपणं हरन्ति सवैव स्यान्निर्मन्थ्यं वा कुर्यात् यजमानस्य सात्मत्वाय" इति । किमाहवनीयस्य सवैव स्यादिति वादः आहोस्वित् प्राजहितस्य वेति ।

1. अत्र सिद्धान्तसूत्रं न दृश्यते

किं प्राप्तं ? आहवनीयस्येति । कथं ? आहवनीयस्य वाक्ये प्रक्रान्तत्वात् । "यजमानो वा आहवनीयो यजमानं वा एतद्विकर्षन्ते यदाहवनीयात् पशुश्रपणं हरन्ति[1]" इति वाक्यात् तेनैवायं वाद इति प्राप्ते ब्रूमः

॥ प्राजहितस्य वाऽपदेशात् अर्थवादप्रतिषेधाच्च ॥ ३-२-४४ ॥ (सि)

प्राजहितस्य वाऽयं वादः (अभेदव्यपदेशात्) निर्मन्थ्येन तुल्यवद् व्यपदेशात् स वा स्यात् निर्मन्थ्यो वेति । निर्मन्थ्यस्य चा सन्दिग्धम[ना]हवनीयत्वं आहवनीये विप्रतिषिध्येत । अपि चायमर्थवादो यजमानस्य सात्मत्वायेति यजमानो वा आहवनीय इत्युक्त्वाऽऽह - किं तेनैव आहवनीयेनैव तस्य सात्मत्वं सम्भवति अन्येनान्यसात्मत्वा-सम्भवात् । प्राजहितस्यायं वाद इति ।

॥ पशौ शालामुखीयः स तदर्थः प्रकृतौ न सोमे गार्हपत्य-
कर्म विद्यते ॥ ३-२-४५ ॥ (सि)

[2]निरूढे पशौ शालामुखीयः स्यात् । प्रकृतौ हि अग्नीषोमीये तस्य पश्वर्थता दृष्टा। न हि प्रधानसोमे गार्हपत्यसंयोगोऽस्ति । तस्मादङ्गार्थ एव सोमे इति ।

॥ २५ ॥ पश्विष्ट्यामाहवनीयो धार्येत संस्कारसंयोगात्
स दीक्षणीयया व्याख्यातः ॥ ३ - २ - ४६ ॥

पशाविष्टिमुभयतः केचिदधीयते । केचिदन्यतरतः । पश्विष्ट्यपवर्गे किमु-त्स्रष्टव्य आहवनीयः उत धारणीय इति । किं प्राप्तम् ? अर्थप्रयुक्तत्वादुद्धरणे [णस्य] इष्ट्यपवर्गे लौकिको जात इत्युत्स्रष्टव्य इति । [ब्रूमः] पश्विष्ट्यामुद्धृत आहवनीयो धारणीयः संस्कारसंयोगात् । स दीक्षणीयया व्याख्यातः दीक्षणीयाहवनीयवद्धा(दुद्ध)रणीयः इत्यधिकरणातिदेशः[3] । तस्याः पश्विष्टेः अन्ततः आम्नातपशोः पूर्वप्रयोगे देवतासंस्कारत्वात (यदादीक्षणीयायाः) । तस्मादासाङ्गपशुयागसमाप्तेराहवनीयो धार्य इति ।

---

1. Bhatta Dipika आहवनीयग्रहणे यजमानस्यैव विकर्षणं स्यादिति विनिन्द्य यजमानस्यात्मलाभाय विधीयमानस्याग्नेः आहवनीयातिरिक्तत्वावश्यंभावात् ।

2 अत्र पूर्वपक्षः वरुणप्रघासेषु प्राजहितादेवोत्तरवेदिप्रणयनवत् निरूढपशावपि संभवान्न शालामुखीयो भवेदिति प्राप्ते—भा. दी.

3 15.2-10 एतेन सोमे etc.

॥ २६ ॥ पूर्वेद्युः काले पशावुत्तरवेदिकेऽग्निहोत्रं जुहुयादाह-
वनीयत्वात् ॥ ३ - २ - ४७ ॥

पशौ पूर्वेद्युः काले प्रणयने कृते अग्निहोत्रं तत्रैव हूयेत । औत्तरवेदिकस्य तदा नियतत्वात् । पूर्वस्य च तस्यां अवस्थायां गार्हपत्यत्वात् । तस्मादौत्तरवेदिक एवाग्निहोत्रं हूयेतेति ।

( मध्ये चिन्ता )

॥ २७ ॥ अग्निहोत्रस्य शालामुखीये श्रपणं
प्रसङ्गात् ॥ ३-२-४८ ॥ ( पू. )

पशौ, किं शालामुखीये अग्निहोत्रं श्रप्यते स्वस्य गार्हपत्यस्य विद्यमानत्वात् उत प्राजहित इति । किं प्राप्तम् ? शालामुखीय इति, तस्य अधुना गार्हपत्यत्वात् । सर्वकर्मार्थत्वाच्च । तस्य तन्त्रमध्येविधानतया प्रसङ्गाच्च शालामुख एवेति प्राप्ते ब्रूम :—

॥ प्राजहिते विद्यमानत्वात् ॥ ३-२-४९ ॥ (सि)

प्राजहित एवाग्निहोत्रं श्रूयते [श्रप्येत] स्वस्य गार्हपत्यस्य विद्यमानत्वात् । असति स्वद्रव्ये परप्रसङ्गोपजीविता स्यात् । यादृक्षं स्वद्रव्योपयोगे सुखं न तादृक्षं प्रसङ्गोपजीवने । तस्मात् प्राजहित एव अग्निहोत्रं श्रप्येत इति ।

॥ २८ ॥ शामित्रे पशुपुरोडाशस्य श्रपणं
प्रसङ्गात् ॥ ३-२-५० ॥ (पू)

पशुपुरोडाशं प्रति सन्देहः—किमयं शामित्रे श्रपयितव्यः उत शालामुखीय इति । किं प्राप्तम् । शामित्र इति । कथम् ? पशुतन्त्रस्य शामित्रे प्रसक्तत्वात् तन्त्रमध्येऽस्य विधानाच्च शामित्र एव पशुपुरोडाश इति प्राप्ते ब्रूमः

॥ शालामुखीये प्रयुक्तत्वाद्द्रव्यस्य प्रयुक्ते
प्रसङ्गात् ॥ ३-२-५१ ॥ (सि)

शालामुखीय एव पशुपुरोडाशः श्रप्येत । प्रयुक्तत्वाच्छालामुखीयस्य अन्येषु गार्हपत्यकार्येषु । सति स्वे द्रव्ये गरीयसि न च परकीयं लघीयोऽप्युपादीयते । न

हि देवदत्तः [स्वीये सति] परकीयक्षौममादित्सति । तस्माच्छालामुखीये अप्येतेति । षशुपुरोडाशः अप्येत । तन्त्रान्तेप्ययमनपक्रान्तोऽग्निः प्रणयनसाकल्यवचनायेति ।

॥ २९ ॥ द्व्यहे त्र्यहे उत्तरवेदिः क्रियेत प्रकृत्युपबन्धात् ॥ ३ - २ - ५२ ॥ (पू)

वैकृतेषु च यथा[प्रकृति]उत्तरवेदिकालः उत नेति भवति विचारणा ।

किं युक्तम् ? अग्नीषोमीयविकारे द्व्यहः । कथं ? प्रकृतिः यस्मिन् काले कृतः तत्रैव विकारः कर्तव्यः चोदकप्राप्तेः— [इति प्राप्ते]

स्वकालत्वात् सद्यस्काल एव पशुः वरुणप्रघासश्चोत्तरवेद्यामग्निहोत्रं सश्चष्टे ॥ ३ - २ - ५३ ॥ (सि)

"अपि वा स्नात्वा उप्त्वा केशश्मश्रूणि अरण्योरग्नीन् समारोप्य उदवसाय निर्मथ्य पौर्णमासेन यष्टव्यम् । न ह्यवकल्पते उत्तरवेद्यामग्निहोत्रं जुहुयात्"[1] इति । न ह्येतदवकल्पते यदुत्तरवेद्यामग्निहोत्रमित्युत्तरवेद्यामग्निहोत्रहोमपरिसङ्ख्या[ त्वयया ] वरुणप्रघासवत् सद्यस्कालत्त्वाध्यवसानान्न प्रकृतितः उत्तरवेदिकालप्राप्तिः । प्रधानत्वादग्निनिधानादे[रे]केषां प्रकृताविव वत्सापाकरणं सद्यस्कालमेव । (काले वत्सापाकरणं प्रतिनिदध्युः । वेदिदोषमुक्त्वा दोहकाल एतेषां विहितः) । तदपेक्षं चैतत् सद्यस्कालत्वं प्रकृतित एव ।

॥ ३० ॥ पशुवरुणप्रघासेषु[2] दर्शपूर्णमासविकारत्वाच्छालामुखीयो न स्यात् ॥ ३ - २ - ५४ ॥ (पू)

वरुणप्रघासेषु शालामुखीयः स्यान्न वेति संशये दर्शपूर्णमासविध्यन्तग्राहित्वात् न वरुणप्रघासानां तत्र शालामुखीयस्य प्रतीतिः । नापि प्रत्यक्षविधिः स्पष्टः । तस्मान्न वरुणप्रघासेषु शालामुखीय इति प्राप्ते ब्रूमः—

---

1. आ. श्रौ 8-8-23
2. S' प्रघासानामिति

॥ विद्यते तद्व्याख्यातम् ॥ ३–२–५५ ॥ (सि)

भवेद्वा शालामुखीयो वरुणप्रघासेषु । तद्व्याख्यातम्–तदेतदुक्तं तन्त्रे–अर्थं कर्म वा कर्मशब्देन विधीयते[1]; प्राकृतं वाऽनामत्वादिति[2] च । प्रतिपादितमेतत् । वस्तुतो विशिषवि[धि]रेवाङ्गीकृत इति ।

॥ ३१ ॥ संस्थिते सोमे शालामुखीयाग्नीध्रीयोत्तरवेदिकाः समारोप्य नित्यं धार्यन्ते ॥ ३ - २ - ५६ ॥ (पू)

शालामुखीयादयः सोमापवर्गे समारोप्या न वेति सन्देहः । कर्मापवर्गे अर्थनियोगतः समारोप्येरन् कर्मयुक्ते नियमेन धारणाम्नानात् ।

॥ अनुगतेषु प्रायश्चित्तमाम्नातम् ॥ ३–२–५७ ॥

अनुगतेषु च शालामुखीयादिषु वह्निषु प्रायश्चित्ताम्नानात् तेषामेव धारणम् । कर्मापवर्गे समारोपणमिति निश्चीयते । "यदा आहवनीय उद्वायेत् आग्नीध्रादुद्धरेत् । आग्नीध्र उद्वायेत् गार्हपत्यादुद्धरेत् गार्हपत्य उद्वायेत अत एव पुनर्मन्थेत्" इति तेष्वेव प्रायश्चित्तमाम्नातमिति ।

॥ प्राजहितं वा सर्वार्थत्वात् आधानस्य[3] सोमलक्षणं इतरेषां तत्सोमापवर्गेऽपवृज्येरन् यथाऽग्निहोत्रा-दुद्धरणम् ॥ ३ - २ - ५८ ॥ (सि)

प्राजहितमेव समारोपयेत् तदाधानस्य तद्धारणस्य सर्वार्थत्वात् । सोमलक्षण-मिति । इतरेषां सोमार्थत्वाद्विहारान्ते सोमापवर्गेऽपवृज्येरन् यथाऽग्निहोत्रार्थमुद्धृतोऽग्नि-होत्रापवर्गेऽपवृज्यते[4] तद्वत् । अत्रापि परयोः प्रायश्चित्ताम्नानयोः कर्मार्थोपयोग उपपद्यत एवेति ।

॥ ३२ ॥ [5]गतश्रियश्शालामुखीयं नित्यत्वात् ॥ ३ - २ - ५९ ॥

---

1. cf 4-2-2
2. पू. मी. 7-3-21
3. R आयास्ये
4. Ś परित्यज्यते
5. शालामुखीयद्वितीयं

अजस्रपक्षे शालामुखीयं समारोपयेयुः, नित्यत्वात्, सर्वकर्मार्थितया तद्धारणस्य। अविशेषेण चैकेषां आहवनीयस्य धारणमाम्नातम्। तदप्यनेन व्याख्यातम्।

॥ ३३ ॥ दीक्षिताग्नेः समारोपणं न विद्यते अग्निहोत्रानन्तर्यात् तत्पुनः प्रतिषिद्धं तस्य ॥ ३-२-६० ॥ (पू)

किं दीक्षितस्य सतः प्रयास्यतोऽग्निसमारोपणं न वेति चिन्त्यते। किं प्राप्तं? न कर्तव्यम्। कथं? अग्निहोत्रानन्तर्यात्। "प्रातरग्निहोत्रं हुत्वा समारोपयेत्"इति वाक्यात् अग्निहोत्राङ्गं समारोपणम्। तच्चाग्निहोत्रं प्रतिषिद्धं दीक्षितस्य। 'सकृन्न दीक्षितो जुहोति' इति। यथा अनन्तरे धारणप्रायश्चित्ते। यथा अग्न्यङ्गं सौत्रामणी तद्वदत्रापीति।

॥ विद्यते चाप्रयाणसंयोगात् ॥ ३-२-६१ ॥ (सि)

प्रयास्यन् समारोपयतीति न च तत् प्रयाणाङ्गम् नाप्यग्निहोत्राङ्गम्। किन्तु प्रयाणे निमित्ते समरोपणमाग्निनयनोपायः। नचानन्तर्यमङ्गकारणं असति प्रमाणे। किन्तु श्रुत्यादिप्रमाणकलापोपनीतं तादर्थ्यमङ्गकारणम्। यथाऽग्निहोत्रानन्तरभाविनो वास्तोष्पतीयस्य प्रमाणाभावान्नाग्निहोत्राङ्गत्वमेवमत्रापीति।

॥ ३४ ॥ [1]प्रत्यग्न्यरणिभेदो द्रव्यपृथक्त्वात् ॥ ३-२-६२ ॥ (पू)

अग्निसमारोपे द्रव्यपृथक्त्वं निर्दिदिक्षितं नेति संशयः। किं प्राप्तम्? प्रत्यग्नि दाह्यद्रव्यपृथक्त्वात् अग्निपृथक्त्वात् असंसर्गस्य विधित्सितत्वात्, प्रत्यग्नि अरणिभेद-इति।

॥ लिङ्गाच्च ॥ ३-२-६३ ॥

'सहारणिभिस्तरन्ति' इत्यरणिबहुत्वदर्शनं तु अरणिभेदे सत्युपपद्यत इति।

अरणिभ्यामित्येकेषां स विकल्पो विप्रतिषेधात् ॥ ३-२-६४ ॥

'अरणिभ्यां सह तरन्ति' इत्येकेषामाम्नानम्। तस्मात् द्वित्वबहुत्वयोर्विकल्प इति।

---

1. इदं सूत्रं भाट्टदीपिकामातृकायामुपलभ्यते।

**॥ इतरस्य वा धर्मविधित्सा यथा रथाङ्गेन तरन्तीति ॥ ३-२-६५ ॥**

अरणिप्रातिपदिकार्थोऽत्र करणं विधीयते नारणिगतसङ्ख्या विवक्षिता इति । अरणिभिरिति यद्यपीयं तृतीया न कारकलक्षणा तथापि सहयोगलक्षणत्वादप्राधान्यम् तदाह - तरणस्य धर्मविधित्सया रथाङ्गेन तरन्तीति । तदविवक्षितसङ्ख्यस्य प्रातिपदिकमात्रस्य तरणे प्रतीतिः । एवमत्र । कारकविभक्तिमन्तरेण कथं क्रियाङ्गतेति चेत् । द्रव्याणां कर्मसंबन्धे गुणत्वेनाभिसंबन्धस्योक्तत्वात् ।

न च तरणक्रियायाः कर्त्रा सम्बन्धः, कारकाणां परस्परसंबन्धाभावात् । तस्मात्तरणे द्वित्वबहुत्वश्रुतिरकारणम् । अरणिद्वित्वबहुत्वे वाचनिक्यौ ॥

**॥ ३५ ॥ उख्याग्नेर्न समारोपणं पात्रसंयोगात् ॥ ३-२-६६ ॥ (सि)**

उख्याग्निः समारोप्य नेतव्यः उत सह पात्रेणेति । किं प्राप्तम् ? समारोप्य नेतव्यः । नह्यग्नेः क्वचिदपि प्रत्यक्षं नयनमस्ति । तस्मात् समारोप्यैव नेतव्यमित्येवं प्राप्ते ब्रूमः—उख्याग्नेर्न समारोपणं पात्रसंयोगात् । उख्यसमाख्यानात् पात्रेणापि युक्तः उख्य एव । यदि पुनः समारोप्यते पात्रे(णापीज्यत)[ण वियुज्यत] इति समाख्याविरोधः स्यात् ।

**॥ ३६ ॥ अपरयोस्तु विद्यते विप्रतिषेधात् ॥ ३-२-६७ ॥ (सि)**

गार्हपत्यसमारोपणं न वेति चिन्ता । साग्निचित्ये कृते पूर्वेण न्यायेन वैलक्षण्यात् प्रत्यक्षमेव नयनमिति प्राप्ते ब्रूम :—

तुशब्दात्पक्षो विपरिवर्तते । अपरयोर्धर्मविप्रतिषेधात् साग्निचित्येपि समारोपणं स्यात् । यथा उख्ये समाख्याविरोधो नैवमितरयोरिति । 'उपर्यपराग्नी समारोपयन्ती'ति प्रकृतावजस्रपक्षेऽस्ति प्रत्यक्षं नयनम् । तस्यैव चोदकप्राप्तस्यायमनुवाद इति ।

**॥ ३७ ॥ आत्मसमारोपणे अरण्योश्च विकल्पो विप्रतिषेधात् ॥ ३-२-६८ ॥ (पू)**

आत्मन्यरण्योश्च किं समुच्चयेन उत विकल्पेनेति। आत्मसमारोपणस्यात्मनि संस्कारत्वात् विकल्पस्य चातिदुष्टत्वात् समुच्चय एवेति प्राप्ते ब्रूमः।

॥ एकार्थत्वात् समुच्चयः विप्रतिषेधाद्विकल्प इति ॥ ३-२-६९ ॥ (सि)

ननु [सन्तर्दन] पूर्वपक्षेण (३-३-११) गतमेतदधिकरणम्। सत्यमेवम्। प्राप्तिसूत्रमेतत् उत्तरविवक्षार्थमिति।

॥ ३८ ॥ आत्मसमारूढे विप्रतिषेधात् ॥ ३-२ ७० ॥ (पू)

लौकिकेऽग्नौ [प्रत्यवरोह] मन्त्रजपः [आत्मनि] अरण्योर्वा उपनयने स्यात्। (स्यमन्थेत्) [यद्यपि] 'यस्याहिताग्नेरग्निर्मथ्यमानो न जायते' इत्यविशेषेण मथनश्रुतेरात्मगतमग्निमरण्योरुपावरोह्य मन्थेत्। मन्थनश्रुतेरविशेषेण प्रवृत्तत्वात् "यस्याहिताग्नेरग्निर्मथ्यमानो न जायते यत्राग्न्यं दीप्यमानं परापश्येत् तत आहृत्य होतव्यम्" इति "यस्याहिताग्नेरग्निर्मथ्यमानो न जायते" इति च अविशेषेण वचनं श्रूयते। अथाप्युपवेषवत् प्रत्यक्ष एव नियम्येत। यथा "उपवेषेणाङ्गारमपोहति" इति प्रकरणादविशेषेणेति प्रसक्ते असम्भवात् सान्नाय्यपक्ष एव नियतः। एवमिदं[1] मन्थनं अरणिसमारोपपक्षे स्यादिति। तस्मादात्मसमारोपणपक्षे लौकिक एवाग्नौ प्रत्यवरोहणमिति।

एकार्थत्वाद्वा नियम्येत श्रुतेरविशिष्टत्वात् ॥ ३-२-७१ ॥ (सि)

आत्मनि समारोपितस्य लौकिकाग्नौ अरण्योर्वा प्रत्यवरोहणमर्थतः प्राप्तम् अविशेषेण मन्थनविधानान्यथानुपपत्त्या अरण्योरेव प्रत्यवरोहणं व्यवतिष्ठते। यत्पुनरुपवेषवदिति—युक्तं स्वल्पवेषस्यानुनिष्पादने नियमः सान्नाय्यपक्षे स्यादिति।

संसर्गे वापि दोषः स्यादिति (पू. मी. १२-४-२२) अवरोह्यस्य वैदिकस्याग्नेः लौकिकाग्निना संसर्गे दोषमाह।—'यस्याहिताग्नेस्सतो ग्राम्येणाग्निना संसृज्येरन्' इति आहवनीये होमाः श्रूयन्ते। आहवनीयस्य होमाधिकरणतया श्रूयमाणत्वात् यदाहवनीये जुहतीति न लौकिकस्य होमाधिकरणत्वं स्वरवमन्तरेण संभवति। न

---

1. Ś यथेदमपि

2 A सवर R स्वाम

चैकार्थत्वात्समुच्चयात् प्रत्यवरोहणद्रव्ययोः समुच्चयः। विप्रतिषेधात्। एकेनाप्यर्थ-सिद्धिरिति।

कालविशेषनियमाशङ्किनो नियमादिदं आशङ्कितोत्तरं सूत्रं यत् अग्निर्मथ्य-मानो न जायते होमकालातिक्रमश्चाशङ्क्यते, यथा तत्र लौकिके होमो दृष्टः तथा तस्मिन्नेव विषये लौकिके प्रत्यवरोहणमिति। तत्र,

कालविशेषस्य अग्न्यजन्मनिमित्तं वचनात् (न) लौकिके नैवं प्रत्यवरोहण-निमित्तप्रतिपत्तिः। तस्मादरण्योरेव प्रत्यवरोहणं न लौकिकेऽग्नाविति। मन्थने च विप्रतिपत्तेः 'न यस्य' वचसां च विप्रतिपद्यमानत्वे मन्थनं सामर्थ्यादरण्योरेव। तस्मादात्मसमारोपणे प्रत्यवरोहणमरण्योरेव।

केचिदविप्रतिपत्तिमार्याणां मन्थने वर्णयन्ति। दर्शनाच्च मन्थनमेव स्यादिति सूत्रकारः। केचिल्लौकिके प्रत्यवरोहणं स्मरन्ति। अस्मृतिस्सा हेतुदर्शनप्रभवत्वात्। सुकरं लौकिके प्रत्यवरोहणं, दुष्करं मन्थनम्।

तदनृतवतं [तदनृतमिति] केचन। तत एषा स्मृतिरिति। श्रुतेः स्मृत्यनु-मानमिति केचित्॥ न॥ हेतोः अकृतत्वात्[1] न जात्या कश्चिदलौकिकोऽस्ति। प्रत्यवरोहणसंस्कारादयमेवालौकिक इति चेन्न; संस्कारत्वेनाविधानात्।

अथ यथा प्रतिगतेनाहवनीयेन गार्हपत्यवुध्यवस्थसंसर्गे न दोषः तद्वदत्रापीति चेत्।

न, अत्र संसर्गस्य प्रत्यक्षात्। शास्त्रार्थस्य संसर्गे न दोषः। लघीयसामपि विधीनां गरीयोभिर्विकल्पो दृष्टः यथा एकविंशतिः सर्ववेदसं वेत्युच्यते।

त्रिधानान्यथानुपपत्त्या भवति। एवमत्र लौकिके प्रत्यवरोहणं विधीयत इति।

॥ इति श्रीदेवस्वामिनः कृतौ सङ्कर्षकाण्डभाष्ये ॥

॥ तृतीयाध्यायस्य द्वितीयः पादः ॥

॥ अग्निपादस्समाप्तः ॥

—: * :—

---

1 R. अनन्वितत्वात्

॥ अथ तृतीयाध्यायस्य ॥

# ॥ तृतीयः पादः ॥

॥ १ ॥ अतिग्राह्यास्समानविधानास्तद्व्याख्यातम् ॥ ३-३-१ ॥ (सि)

अतिग्राह्यास्समानविधानाः प्रकरणस्थैर्ग्रहैः समानधर्मिणो भवेयुरिति तद्व्याख्यातम् । संयुक्तं वा तदर्थत्वात् शेषस्य तन्निमित्तत्वादिति (पू.मी 3.6.33)। ग्रहगतमशेषं वस्तु चिन्तयितुं प्रस्तावसूत्रमेतत् ।

॥ २ ॥ विश्वजिति सर्वपृष्ठे ग्रहीतव्या अप्यग्निष्टोमे इत्यपि विश्वजितो वादेन विश्वजित्त्वेन व्यपदिश्यते ॥ ३-३-२ ॥ (सि)

विश्वजिति अग्निष्टोमसंस्थे अतिग्राह्या गृह्येरन् उत प्रकृतावग्निष्टोम इति सन्देहे :—

किं प्राप्तम्—विश्वजित्यग्निष्टोमसंस्थ इति । प्रकरणात् । विश्वजिति प्रकरणे एतद्वाक्यम् । तस्माद्विश्वजिद्विशेषेऽतिग्राह्याणां ग्रहणविधिरिति प्राप्ते ब्रूमः—

विश्वजिति सर्वपृष्ठे ग्रहीतव्या इत्येकं वाक्यम् अर्थपरिसमाप्तेः । अप्यग्निष्टोमे इति द्वितीयं पृथगर्थत्वात् । अपि च विश्वजिति अतिग्राह्या गृह्यन्त इति अविशेषेण प्रवृत्तो विधिः न विशेष्टुं शक्यते अग्निष्टोमपदेन, पृथक्त्वात् नित्यत्वाच्च व्यपदेशपदानाम् । अप्यग्निष्टोम इति विश्वजिदग्निष्टोमो विश्वजिता व्यपदेश्यः । अपिशब्दस्य च प्रतीयमानभेदार्थपरित्यागेनावधारणार्थत्वमयुक्तमङ्गीकर्तुमिति । पृथगर्थत्वाच्च नैकं वाक्यम् । प्रकरणाच्च वाक्यं बलवत्तरमेवेत्यग्निष्टोम इति ।

यथा विश्वजिता अग्निष्टोमो न विशेष्टुं शक्यते प्रकृतौ तथा वैकृत इति वाक्यादग्निष्टोममात्रस्य विवक्षितत्वादिति । सिद्धान्तस्तु

[1]उच्यते । प्रकृत्यग्निष्टोमार्थ एव स्यात् अनारभ्यविधेः प्रकृतिगामित्वादित्यर्थः । [नच]कृतकरं(च)शास्त्रं; विकृतौ प्रकृतितः प्राप्तिः स्यादिति ।

॥ ३ ॥ स प्रकृतिगःप्रकरणात् संबन्धेऽनारभ्यविधिः ॥ ३-३-३ ॥ (पू)

---

1. अत्र सिद्धान्तसूत्रं मृग्यम्

यत्पृष्ठ्येन गृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि संस्त्र[श्रृ]णीयुः यदुक्थ्ये गृह्णीयात् प्रत्यञ्चं यज्ञमतिग्राह्याः संस्तृणीयुः इति निन्दार्थवादात् प्रतिषेधो गम्यते । स किं प्रकृत्यर्थः उत पार्ष्ठिक इति वाक्यादग्निष्टोममात्रस्य संशीतिः—

किं प्राप्तम् .... .... (कृष्टं) अतिग्राह्यविधेः प्रकरणशेषत्वप्रतिपादनात् । तस्मात् प्राकृतोक्थ्यविषय एवायं प्रतिषेध इति प्राप्ते ब्रूमः—

पृष्ठ्यवाक्यसन्निधानात् पृष्ठ्ये य उक्थ्यः तत्रैवायं प्रतिषेधः । अतिग्राह्याणां पृष्ठ्यशब्दार्थविशेषणत्वेन वाक्यसन्निहितत्वात् । यत्पृष्ठ्येन गृह्णीयात् तदुक्थ्य इति ।

ननु उक्थ्य इति श्रुतिः सामान्येन प्रवृत्ता पृष्ठ्यशब्देन विशेषे नावस्थापयितुं शक्यते । उच्यते । श्रुतेः प्रकृतावेवार्थवत्ता विकारेषु चोदकप्राप्तेः । अनेकवाक्यान्तरितस्य च प्रकृतिगामित्वं विक्षेपात् प्रकरणमिव भवति । पृष्ठ्यशब्देन चोक्थ्यशब्दस्य संबन्धो वाक्यादेव भवति । वाक्यं च प्रकरणात् बलवत्तरमिति । (सोन्ववसज्यविधिः ?) सोऽयमाहत्य पार्ष्ठिकेषु उक्थ्येषु अतिग्राह्या न गृह्येरन् इति ।

॥ विकल्पो वा पृष्ठ्यशब्देन[1] विधीयते ॥ ३-३-४ ॥ (सि)

नैतदस्ति प्रतिषेधोऽतिग्राह्याणामुक्थ्येष्विति । किं तर्हि ? विधिरप्यस्ति पृष्ठ्यशब्देनातिग्राह्याणां—

"वैराजस्य स्तोत्रायाग्नेयो गृह्यते शाक्वराणामैन्द्रो रैवतानां सौर्य" इत्युक्त्वाऽऽह—पृष्ठ्यानि वा एतानि पृष्ठ्याच्यावयन्ति[2] यत्रैव पृष्ठानि युज्येरन् तेषु तेऽतिग्राह्याः " इति विधिप्रतिषेधयोरेकविषयोपनिपातित्वात् षोडशिवद्विकल्पः स्यादिति ।

॥ ४ ॥ द्व्याश्रयविकल्पः स्यात् ॥ ३-३-५ ॥ ( पू )

विकल्पसमः नतु विकल्पः किन्तु द्व्याश्रयो व्यवस्थितविकल्पः इत्यर्थः । पृष्ठ्यष्षडहो नानापृष्ठ्योऽपि बृहद्रथन्तरपृष्ठ्योऽपि । तत्र वैराजस्तोत्रे यो येन गृह्यते इत्यादिना वैराजादिपृष्ठ्यविशेषसंबन्धोऽतिग्राह्याणां ग्रहणनियमात् तत्र विधिरेव । बृहद्रथन्तरपृष्ठ्ये वैराजविप्रयोगात् प्रतिषेध एवेति । एते न समानविधानाः अङ्गत्वेन विधीयन्ते स्वतः प्रधानत्वात् । नह्यङ्गैः स्तोत्रैः वैराजादिभिः

1. शब्दो - भा. दी. 2. श्चयावयन्ति भा. दी.

ग्रहा नियन्तुं शक्यन्ते । समानविधानाः प्राकृतकार्यकाः ग्रहाः पृष्ठाश्च तेषां संयोगमात्राधिगतिरिति पृष्ठाद्वा च्यावयन्ति इत्यत्र समानविधानेषु नोपपद्यते । "पृष्ठ्या-द्गृह्येरन्" "पृष्ठानि एता ग्रहक्लृप्तयो न च्यावयन्ति ।" ग्रहेषु गृह्यमाणेषु न पृष्ठानि च्यावितानि भवन्ति इति पृष्ठ्याप्रच्युतिहेतुत्वं ग्रहणस्य पृष्ठाङ्गत्वे सत्युपपद्यते इति ।

॥ समाने वा कालेऽविच्यावनशब्दोऽविप्रतिषिद्धः ॥ ३-३-६ ॥ (सि)

न पृष्ठाङ्गानि ग्रहाः । समानकाले ग्रहाश्च पृष्ठानि च स्युः । यदा स्तोत्राणि तदा ग्रहा इत्युक्तेनैव हेतुना । ते तु सहैवोपेयुः । यदा स्तोत्राण्युपयन्ति तदा ग्रहाः । अविच्यावनशब्दश्चाविप्रतिषिद्धः । यथा रजन्यां तिरोहितायां नक्षत्राणि तिरोहिता-नीति असत्यपि निमित्तत्वे संभक्तिव्यपदेशः । तस्माद्धितमिदं न स्तोत्रैर्ग्रहा नियम्यन्ते इति । अतः तुल्यवत् विकल्प इति ।

'तान् वै पूर्वस्मिंस्त्र्यहे गृह्णीयात्' 'अथोत्तरस्मिंस्त्र्यहे ग्रहीतव्याः' इति सर्वेषां चोदनापृथक्त्वात् चोदकेन सर्वविकृतिषु अ[वि]शेषेण प्राप्तानां अतिग्राह्याणां इहायं विशेषो विकल्पितो विधीयते पूर्वस्मिंस्त्र्यह इति ।

अयं च विधिः त्र्यहस्य सर्वेष्वहस्सु अतिग्राह्याणां व्यासज्य ग्रहणं शास्ति । कथं? चोदनापृथक्त्वात् पृष्ठ्ये षडहे गृह्णीयात् पूर्वस्मिंस्त्र्यहे उत्तरस्मिन्निति च चोदनानानात्वात् । व्यासज्यविधौ अस्याश्चोदनायाः स्यादर्थवत्ता । इतरथा षडहचोदना समानार्था सत्यपि आर्थिकी स्यात् । वैराजस्य स्तोत्रायाग्नेयो गृह्यत इति प्रत्यक्षं व्यासज्य विधीयते ।

तन्त्रे चैतदुक्तम्—मासिग्रहणमभ्यासप्रतिषेधार्थमिति । (10 - 8 - 28) किं चोत्तरस्मिन्नपि त्र्यहे सत्स्वेव वैराजादिषु गृह्येरन् । "उपस्तम्भनमतिग्राह्याः [चक्रे]पृष्ठानि" इत्यतिग्राह्याणां संयोगादेव " न वैराजस्य स्तोमा अतिरिक्ताः तैरेते साम भजन्त " इति च सत्येव वैराजे ग्रहणं दर्शयति ।

॥ ६ ॥ वैराजस्य स्तोत्रायाग्नेयो गृह्यत इति देवताविकार-श्चतुर्थीसंयोगात् ॥ ३-३-७ ॥

वैराजादीनि स्तोत्राणि ग्रहणदेवताःस्युः आहोस्विदग्न्यादय एवेति सन्देहः :—

किं प्राप्तम्—स्तोत्राणि ग्रहदेवता इति कथं ? **चतुर्थीसंयोगात्** चतुर्थीनिर्देशात् वैराजस्य स्तोत्रायेति। चतुर्थ्या देवतानिर्देशो द्रष्टव्यः यथा इन्द्राय राज्ञे सूकर इति।

न,[ननु]आग्नेय इत्यादि तद्धितनिर्देशबलीयस्त्वात् अग्न्यादय एव देवताः स्युः। सत्यमेतत्। वैराजस्य स्तोत्रायेति चतुर्थ्यन्तस्य पदार्थस्यानर्थक्यं माभूदित्येवमङ्गीकृतः।

नन्वेवमपि आग्नेय इत्याद्यनर्थकं स्यात्। न स्यात्। [1]उपांश्वादिवन्नामधेयत्वेनार्थवत्त्वात्। तस्मात्स्तोत्राण्येव देवता इति प्राप्ते ब्रूमः।

**॥ अङ्गविधिर्वा यथा क्वास्य रथस्य पुरुष इति ॥ ३-३-८ ॥** (सि)

अङ्गविधिः स्तोत्रस्य ग्रहस्य च संयोगमात्रविधिः पर्यवस्यति। कुतः ? तद्धितेन[2] आग्नेय इत्यादिना विहितत्वात् देवतानाम्। चतुर्थी चेयं षष्ठ्यर्थे द्रष्टव्या। संबन्धविधेर्विवक्षितत्वात्। तावति च संयुक्तयोरप्यर्थयोः एकत्र षष्ठी अन्यत्र प्रथमा यथा--क्वास्य [रथस्य]पुरुषः स्यादिति। अथवा तादर्थ्यलक्षणा चैषा चतुर्थी द्रष्टव्या। वैराजस्य स्तोत्राय—वैराजस्य स्तोत्रं कथं नाम स्यादिति। नहि संयोगविधिस्संभवति अन्यतरस्मिन्नसति संयोगिनि। नह्यतिग्राह्यत्वं स्तोत्रस्य यदि क्षीणाङ्गत्वं अभविष्यत्। न वैराजस्य स्तोत्रैः सामान्वत्ता अनुजिघृक्ष्येत "ये वा अमी वैराजस्य स्तोमाः[3] तैरेवैते सामन्वन्तः" इत्यनुग्रहवचनं तादर्थ्ये नावकल्पते। सतो ह्याप्तिवचनं व्यर्थमित्युक्तत्वात्। तस्मात् संयोगविधिरेवायमिति।

**॥ कालवादो यथा प्रातस्सवनेऽतिग्राह्या गृह्यन्त इति ॥ ३-३-९ ॥** (सि)

नैवायं संयोगविधिः; किन्तु कालविधिः सप्तमीनिर्देशात्। स्तोत्रकालमेषां ग्रहणं विधीयते। यथा प्रातस्सवनेऽतिग्राह्या गृह्यन्त इति।

अङ्गविधिर्वा कर्मविधिर्वायं भवतीति। संयोगविधिरेवायं उक्तेन हेतुना। यत्पुनरुक्तं सप्तमीनिर्देशात् स्तोत्रकालविधिरिति तत्रोच्यते। सम्बन्धविवक्षायामपि सप्तमीनिर्देशो दृष्टः, यथा लोके 'त्वय्यसति सम्बन्धिनि यदस्माभिरकरिष्यत' इति।

1 Ś आह्यवन्ना 2. A & R read तद्विधेन
3. S' स्तोमाः

॥ प्रातस्सवने गृह्यन्त इति कालत्वादान्तरं ग्रहणोक्ता गृह्यन्त इत्येकेषाम् ॥ ३ - ३ - १० ॥ (सि)

एतेषां अतिग्राह्याणां ग्रहणानन्तरमेव प्रदानं उत माहेन्द्रमनुहूयन्त इत्येकेषां सोऽनुपेत्य[1] विधिः । न ग्रहणानन्तरमेव प्रदानं, किन्तु माहेन्द्रकाले प्रदानमाम्नातं एकेषां, तदाहत्यविधानम् । तस्मान्माहेन्द्रकाल एव अतिग्राह्याः ।

॥ देवतानानात्वात् न ह्यन्यदेवत्यानां याज्यानां[2] देवता-पृथक्त्वात् ॥ ३ - ३ - ११ ॥ (पू)

[पृथक्]प्रदाना माहेन्द्रादतिग्राह्याः । देवतानानात्वात् । नह्यन्यदेवत्याया-मन्यदेवतस्य प्रदानमवकल्पते । अतो नानाप्रदाना इति ।

॥ समानयाज्या वाऽनुहूयन्त इत्यर्थसमवायेनोप-पद्यते[3] ॥ ३ - ३ - १२ ॥ (सि)

एकयाज्या एकवषट्काराः सहैव माहेन्द्रेण हूयेरन् । अनुयजन्त इति सकार्ययोगेऽनुशब्ददर्शनात् । यथा—गामनुवत्सो विधीयत इति । तस्मात् समान-वषट्काराः समानयाज्या अतिग्राह्याः वचनसामर्थ्यात् । न चासहत्ववचनान्नैतदस्ति । समानयाज्यावषट्कारवचनात् ।

सिद्धान्तः— अनुशब्दोऽत्रापीति क्रियाया नानार्थत्वात् पश्चादर्थ एवेति यथा ( अग्नेचेषेष्ठमनुत्थो यजेतेति(?) )

अतिग्राह्यान् केचित् दर्विहोमानामनन्ति । तत्त्वयुक्तम् । प्रकरणाभावात् । वषट्कारप्रदानत्वे ग्रहत्वमेव हेतुः । ग्रहा एते ग्रहाश्च ग्रहधर्माणो भवेयुः । माहेन्द्र-मनुहूयन्त इति । याज्यावषट्कारभेदेनेज्यन्त इत्यर्थः ।

विश्वजिति पू[स]र्वपृष्ठग्रहणात् तेष्वेव पृष्ठे प्रतीयेरन् यथा[यदा] पूर्वःपक्षः ।

समानविधाना वा माहेन्द्रमनुहूयेरन् तुल्यशब्दत्वात् । यदि प्रकृतिसमानविधाना वा माहेन्द्रस्य (सो)स्तोममनुहूयेरन् । कस्मात् ? माहेन्द्रमनुहूयन्त इति प्रकृतावेषां

1. अनुपेत्य—दूरत उत्कृष्य 2. देवत्यायां याज्यायामिति पाठः साधुः
3. All mss. read नोपपद्यते

त्रयाणाम[1]पि तुल्यः कालशब्दः । स विकृतावपि न भिद्येत असति कारणे । तस्मात् त्रयोऽपि समानकाला हूयेरन् यदा सिद्धान्तः ।

॥ दधिग्रहो नित्यस्तद्व्याख्यातम् ॥ ३ - ३ - १३ ॥

नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसंबन्धात इति (पू.मी. 4-4-11) प्रस्तावसूत्रमेतत उत्तरार्थमिति ।

॥ आदितो गृह्येत क्रमसंयोगात् ॥ ३ - ३ - १४ ॥

किमयं दधिग्रहः सह उपांश्वादिभिः पूर्वो ग्राह्यः उत पश्चादिति सन्देहः । किं प्राप्तं ? आदित इति । कुतः ? क्रमसंयोगात् । पूर्वो विधिरुपांश्वादिभ्यः पूर्वो दधिग्रहस्य । अतो विधिक्रमसङ्ख्यायोगात् आदितो ग्राह्यो दधिग्रहः ।

॥ ज्येष्ठशब्दाच्च ॥ ३ - ३ - १५ ॥

'ज्येष्ठो वा एष ग्रहाणां' इति च प्रथमापेक्षज्येष्ठशब्द उपपद्यते ।

॥ न वा मन्त्रक्रमबलीयस्त्वात् ज्येष्ठशब्दो यथा ज्येष्ठमेव गच्छतीति ॥ ३ - ३ - १६ ॥

मन्त्रक्रमस्यानन्यार्थस्य विरुद्धक्रमात् बलवत्तरत्वात् । स चोपांश्वादीनां पूर्वं तस्मादन्ते दधि गृह्यते इति । यत्पुनरुक्तं ज्येष्ठशब्दात् प्राथम्यं इति; प्रशंसा ज्येष्ठशब्दः । यथा लोके कनीयानपि अस्माज्ज्येष्ठः । वेदेपि 'ज्यैष्ठ्यमेव समानानां गच्छति' इति ज्येष्ठशब्दस्य प्रशंसार्थता गम्यते । ज्यादेशं च प्रशंसायां स्मरन्ति शिष्टाः । प्रशस्यस्य च पूज्यस्य च वृद्धस्य चेति ।

॥ लिङ्गाच्च ॥ ३ - ३ - १७ ॥

मन्त्रक्रमात पश्चात उपांशुदधिग्रहो नियतकाल इति प्राप्ते, लिङ्गात् कालविशेषो नियम्यते । यथा वेदे—"गावस्सञ्जानानाः सङ्गच्छमानाः सङ्गम्यान्योन्यं घ्नन्ति एवं तावेतौ सञ्जानानौ सङ्गच्छमानौ सङ्गम्य न्यस्येन्द्रियं चित उपास्यन्ति एवं तत्प्राजापत्यं यत्सोमश्चापश्च यत्प्राजापत्यं दधिग्रहं गृह्णाति शमयत्येवैनान्" इति

1. णा मधिकृतकालशब्द. मा.

एषा श्रुतिः अपां प्रदानं दर्शयति । कालं दर्शयति यथा गावः परस्परं सङ्गच्छमानाः इत्येवं प्राजापत्यत्वेन एकजातीयत्वात् सोमश्चापश्चान्योन्यं सङ्गत्येन्द्रियं वीर्यमवितः । दधिग्रहणे दधिग्रहेण गृह्यमाणे नायं दोषः । शमयति इति व्यपनीयापो दधिग्रहणे चरन्तीत्यनुवादरूपमेतद्वाक्यम् अपामपनयनकाले दधिग्रहेज्यां दर्शयति इति ।

**॥ उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीति ग्रहणे लिङ्गत्वं मन्त्रे ग्रहणलिङ्गात् ॥ ३-३-१८ ॥**

**॥ 'अपेन्द्रद्विषतो मनोपजिज्यासतो जहि' इत्ययमपि तत् (?) ॥ ३ - ३ - १९ ॥**

अस्यापि मन्त्रस्यास्पष्टलिङ्गत्वात् विनियोगक्रमादाध्वर्यवेषु काण्डेषु अध्वर्यषु प्रक्रान्तेषु गमनक्रमे मन्त्रस्य पाठात् गमनार्थो मन्त्र इति ।

**॥ प्राणाय त्वाऽपानाय त्वा व्यानाय त्वेति होमलिङ्गात् ॥ ३-३-२० ॥**

अयमपि मन्त्रो जुहोतीति होमलिङ्गात् होमार्थ इति ।

एतानि त्रीणि सूत्राणि अस्य [अ]विद्यमानपूर्वपक्षविचारस्यापि (वि,ग्रहगता-शेषवस्तुनिरूपणायातानि ।

**॥ कामसंयोगस्तद्व्याख्यातम् ॥ ३-३-२१ ॥** (सि)

दधिग्रहं प्रकृत्याम्नायते—"आज्यग्रहं गृह्णीयात् तेजस्कामस्य तेजो वा आज्यं तेजस्व्येव भवति सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसं वै सोमः ब्रह्मवर्चस्व्येव भवति" (तै.सं. (3-5-9) इति । किमिमे गुणफलसंबन्धविधी आहोस्वित् पृथक्दधिग्रह-विकाराविति । पृथगेवैतौ विधी सन्निधेः दधिग्रहस्य तद्विकारावेतौ ग्रहाविति ।

अत्राह—अयमेव दधिग्रहविधिरिति कथं ? निरपेक्षस्य फले वाक्यस्य समा-प्तत्वात् । दधिग्रहे विषयभूते गुणफलसंबन्धविधानं 'आज्यात्तेजः सोमाद्ब्रह्मवर्चसं' इति । अत्रोच्यते । नैतदेवम् । होमवच्छुद्धस्य ग्रहविधेः अभावात् । आम्नानवेलायां दधिष्ठस्य कर्मणः फलविधानम् । तस्मात् फलं चाकर्मसन्निधौ ( पू. मी. 2-3-12 ) इत्यनेन न्यायेन भिन्नावेतौ दधिग्रहविधानेन ।

कथं समाने प्रकरणे प्रकृति[विकृति]भाव इति चेन्न; उत्कोचरत्वात् । तदा हत्य व्याख्यातं — नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात् ( पू. मी. 3-6-3 ) इति ।

॥ १२ ॥ नित्ये कामो यथा ऐन्द्रवायवे ॥ ३-३-२२ ॥ (सि)

दधिग्रहं प्रकृत्य समामनन्ति — दधिग्रहं गृह्णीयात्पशुकामस्योर्ग्वै दध्यूर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे—इति । किमयं नित्य एव कामः उत कर्मान्तरविधिरिति[पूर्ववत् कर्मान्तरविधिरिति] प्राप्ते ब्रूमः :

नित्य एव दधिग्रहे कामः यथैन्द्रवायवाग्रतायाम् । कुत एतत् ? संयोगपृथक्त्वात् ॥ तद्व्याख्यातम्—एकस्य तूभयत्वे संयोगपृथक्त्वमिति । (पू मी. 4-3-5)

॥ १३ ॥ सोमग्रहो दधिकृतस्सोमधर्मैर्नैमित्तिकत्वात् दधिग्रहविकारत्वाच्च ॥ ३-३-२४ ॥ ( सि )

सोमग्रहं गृह्णीयात् ब्रह्मवर्चसकामस्य ब्रह्मवर्चसं वै सोमः ब्रह्मवर्चसं इत्याम्नायते सोमग्रहः । स किं सोमधर्मैरभिसंबध्यते उत नेति विचारः । किं प्राप्तम् ? भवेयुरत्र सोमधर्मा इति । कथं ? सोमोद्देशेन धर्मविधानात । वाक्येन च प्रकरणस्याविशेषकरत्वात । अपूर्वप्रयुक्तत्वाच्च । यावत्किञ्चित् धृतं सोमद्रव्य तत्राविशेषेण भवेयुरेव सोमधर्मा इति प्राप्ते ब्रूमः

सोमग्रहो दधिकृत एव[न] सोमधर्मैः कृतः नैमित्तिकत्वात् । सः असमानविधानो हि तैस्तैः ग्रहैः । कथं ? सोमेन यजेनेति चोदनया चोदितस्य सोमयागापूर्वस्य सोमधर्मप्रयोजकत्वात न दधिग्रहविकारस्य सोमचोदनाचोदितत्वम् । फलभेदेन विधानात् न प्रकृतितोऽत्र धर्मप्राप्तिः । स्वस्याः प्रकृतेः दधिग्रहस्य सोमधर्मैरसम्बन्धात् । सन्निधानाभावाच्च न सोमधर्मप्राप्तिः । तस्मान्न दधिग्रह(कृत)स्सोमधर्मैरिति ।

॥ १४ ॥ तत्रार्थग्रहणोऽभिषवः पात्रसंयोगात् ॥ ३-३-२५ ॥ ( सि )

नैमित्तिके सोमग्रहे किमभिषवस्सोमस्य कर्तव्यो नेति भवति विचारः । किं प्राप्तम् ? पूर्वाधिकरणेन न कर्तव्योऽभिषव इति प्राप्ते ब्रूमः—अधर्मकोऽर्थप्राप्तोऽभिषवः कर्तव्य इति । कथं ? पात्रसंयोगात । चतुस्स्रक्तिना ग्रहीतव्य इति चतुस्स्रक्ति-

पात्रसङ्कीर्तनात् । द्रवं हि पात्रेण गृह्यते । [1]न च द्रवः अनभिषुते सोमे सम्भवति । तस्मात् सामर्थ्यात् प्राप्नोत्यभिषवः कर्तव्य एवेति ।

॥ १५ ॥ तिस्रो वह्नस्य समिध इत्येतया सोमं करोतीति प्रत्यक्षस्य सतः सोमस्य क्रिया नोपपद्यते ॥ ३ - ३ - २६ ॥ (पू)

यद्यदात्मना नास्ति तत्तदात्मना उत्पद्यते । न च सोमात्मनैव सतः सोमस्य क्रिया सम्भवति ।

नन्वसतोऽपि नैव क्रिया सम्भवति । कारकव्यापारासम्भवात् । नियतकारणोपादानात्, सर्वतः सर्वस्यासम्भवात् शक्तिपूर्वत्वाच्च क्रियारम्भस्य सतश्च क्रियेति । अत्रोच्यते । सत्यमेवं इह तु सोमकरणींऋचमाहुः सोमस्य च सतो विशेषाभावात् न करणमिति । दधिग्रहविकारात् सोमग्रहादयमन्यत्र उत्कृष्येतेति प्राप्ते ब्रूमः—

॥ कर्मसंयोगाद्वा करणीयं यथा हिरण्यकारः ॥ ३-३-२७ ॥ (सि)

नासदुत्पाद एव करोतेर्वृत्तिः । किन्तर्हि ? संस्कारकर्मणापि संयोगात् इति । कारकव्यापारस्य धात्वर्थस्य च स्वेन स्वेनात्मना प्रसङ्गतो विवृद्धस्य प्रतिनियतासाधारणाकारेण उपचयनाशादिजन्मनो विपरिणामदर्शनात् । तण्डुलपाकात्मकस्य विशेषपरिणामस्य शक्तिकारणपूर्वत्वं नियमादेव सिद्धम् । सर्वस्य च सर्वतोऽसम्भवस्य तथादृष्टत्वात् । असतस्सोमस्य तदापादनमेतत् । यच्च क्रियते सा सोमकरणी तस्याप्यकर्मत्वे सोमकरणीति समाख्यानात् प्राप्तोऽभिषवेऽस्य विनियोग इति ।

॥ १६ ॥ अंश्वदाभ्यवाक्यं चोर्ध्वमवभृथात् विद्यते क्रियेत चोर्ध्वमवभृथात् अथत्रौपानुवाक्ये तस्येतरश्शेषोऽखिलविधानात् पशुशिरसां त्रिंशद्वाक्ये तद्व्याख्यातम् ॥ ३-३-२८ ॥ (सि)

अंश्वदाभ्ययोः समाम्नानं औपानुवाक्ये काण्डे ज्योतिष्टोमे चोर्ध्वमवभृथात् । पशुशिरसां त्रिंशद्वाक्ये च । किमेतौ अंश्वदाभ्यौ उपांश्वादिभ्यः परेण प्रयोक्तव्यौ

1. मा. नाशज्ञानानद्रव्यादिषुते सोमे

उत पूर्वमिति संशयः । तत्सिद्ध्यर्थं चेदं विचार्यते । किमौपानुवाक्ये विधानं उत प्राकरणिकमिति ।

किं प्राप्तम्—प्राकरणिकविधानम् । केनचन क्रमेणानुष्ठानमित्यूर्ध्वमवभृथात् प्राकरणिकविधानमङ्गीकर्तुं न्याय्यम्, प्रकरणादेव । कथं पुनरनारभ्यवादेन गुणविधानम्? उच्यते । यथा यागविधिः प्रकरणगामी तथा अङ्गविधिरपि । तस्माद्विधानक्रमेणानुष्ठानमिति प्राप्ते ब्रूमः—

औपानुवाक्यमेव विधानम् । कुतः? साकल्यविधानात् । "एष वै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय जुहोति ।" "परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णाति" इति सकलविधानात्सेतिकर्तव्यताकस्य विधानमिति । अथवा सकलविधानात् स्पष्टविधानात् उपांश्वादिभ्यः पूर्वमंश्वदाभ्ययोः प्रयोग इति ।[1]

पशुशिरसामपि चत्वारिंशे यः पाठः सा चोदना । तेनैव क्रमेणोपधानमिति ।

॥ लिङ्गाच्च ॥ ३-३-२९ ॥

"व्यपनीयापो दधिग्रहेण चरित्वा अंश्वदाभ्यौ चरति" 'स वा....गृहीत्वा शुक्रं गृह्णाति' इति मन्त्रपाठस्तूपांश्वादीनां पूर्वः । स च विधिपाठात् बलवान् । तस्मादंश्वदाभ्ययोरनयोरित्थं क्रमनियमः । पशुशिरसां तु सम्प्रतिपन्नावुभौ पाठौ मन्त्रपाठो विधिपाठश्च । तस्मात् तेषां पाठेनैव नियमः ।

॥ १७ ॥ भ्रातृव्यवताऽदाभ्यो ग्राह्यो बुभूषतांऽशुरिति कामसंयोगस्त-द्व्याख्यातम् ॥ ३-३-३० ॥ (सि)

संयोगपृथक्त्वादुक्तमेवेति ॥

॥ १८ ॥ नानार्थानां समासवचनं यथा स्तुतशस्त्रवतां सोमानामाहेति ॥ ३-३-३१ ॥ (पू)

1. इदमेव वस्तुतस्स्वित्यादिना भा. दीपिकायामुक्तम् ।

[रात्रिपर्यायेषु ग्रहाणां चमसानां च] विकल्प उत समुच्चय इति सन्देहः किं प्राप्तम्— विकल्प इति। कथं? रात्रिपर्यायेषु अनाम्नातसोमानि स्तुतशस्त्राणि। तत्र ग्रहो वा सोमस्य चमसो वेति विकल्पः। अनारभ्यैवमामनन्ति "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति" इति रात्रिपर्यायेण ग्रहचमसयोर्विकल्प इति।

॥ अपदेशो वा ग्रहाणामाम्नातत्वात् ॥ ३-३-३२ ॥ (पू)

(द्विर्वचनं इतरेष्वनाम्नानात्) ग्रहं गृहीत्वेत्ययमनुवादः ग्रहाणां तत्राम्नातत्वात्। चमसं वोन्नीयेत्ययं विधिः अविहितत्वादन्यत्र चमसानां, स एव सोमविकल्पः।

॥ अ[उ]पदेशो वा तुल्यत्वाच्चमसस्या[पि]पवाद: ॥ ३-३-३३ ॥

एतस्मिन् वाक्ये तु तुल्यवदुपदिष्टानां कस्यचिद्विधिः कस्यचिच्चानुवाद इति अर्धकुक्कुटिका पाकस्य। यथा अर्धं कुक्कुटः पच्यते अर्धं प्रसवाय स्थापित इति। तस्मात् तुल्यं ग्रहचमसयोर्विधानमिति विकल्प एवेति।

॥ न गुणत्वात् ॥ ३–३–३४ ॥ (सि)

नैतदेवं विकल्प इति। ततो विधेरनुवादो गुणाद्भवति। न चमसस्य शब्दान्तरेण विधिरस्ति यथा ग्रहस्य। अगत्या चैतस्मिन् वाक्ये विध्यनुवादयोरङ्गीकरणम्। तस्माच्चमस एव रात्रिपर्यायेषु सोमस्य परिशेषात्।

॥ आम्नायते खलु सर्वत्राविशेषात् ॥ ३ - ३ - ३५ ॥

तत्खलु चमसविधानं सर्वत्र स्यात्। ग्रहेषु सत्वविषयस्य शिष्टत्वात्। विज्ञायते "वायव्यं वै चमसः तस्माद्वायवे त्वा जुष्टं गृह्णामि इति मुख्यं चमसमुन्नयेत्" इति रात्रिपर्यायेष्वविद्यमानम्। ग्रहमात्रवता चमसोन्नयनादि (जिघृक्षा) ग्रहसंयोगे चमसानां दर्शयति। रात्रिपर्यायेषु च रात्रौ च ग्रहाणाम्। तस्माच्चमसा एव नियम्यन्ते। न ग्रहा इति।

॥ विकल्पो वा व्यपदेशात् स्तोत्रमुपाकुर्यादिति ॥ ३-३-३६ ॥

ग्रहचमसयोर्ग्रहणाविशेषेण व्यपदेशात् विषयैक्याच्च विकल्प एव स्यादिति ।

॥ नानार्थानां समासवचनं यथा स्तुतशस्त्रवतां सोमानाहेति ॥ ३-३-३७ ॥

न वा एतदिति विकल्प इति । यदुक्तं कथमनुभूयत इति विकल्पे विप्रतिषिद्धम् (?)। कथं पुनः तद्वचनेन समस्तप्रत्यय इति चेत् नानार्थानामनेकप्रकाराणां समस्तव्यस्तानां ग्रहचमसानामेतत् व्यस्तवचः—ग्रहं वा गृहीत्वा चमसं वा केवलमुन्नीय स्तोत्रमुपाकुर्यादिति । यथा स्तुतशस्त्रवतां सोमानाहेति । नानार्थानां ग्रहमपनयत्स्वपि चमसेषु नास्तिशब्दविरोधः यथा भुक्त्वा अन्यत्किंस्वित्कृत्वा गते भवति भुक्त्वा गत इति ।

यत्पुनरुक्तं व्यपदेशादिति—ग्रहसंयुक्ताश्चमसाः केवलं चानूद्य व्युत्पद्यन्ते । तस्मात्तत्रापि चमसा भवेयुरेव । अतस्समुच्चय एवेति ।

॥ १९ ॥ पृश्निग्रहाः प्राणग्रहास्तद्व्याख्यातम् ॥ ३-३-३८ ॥

पृश्नयः प्राणग्रहाश्चान्ये एव केचित् उत ग्रहा इति सन्दिह्यते । अन्य एव पशवः पञ्चशारदीये पृश्नयोऽनुक्रान्ताः, [ते पृश्निग्रहाः] प्राणलिङ्गैर्मन्त्रैर्गृह्यन्त इति इष्टकाः गुणवादेन प्राणग्रहशब्देनोच्यन्त इति प्राप्ते ब्रूमः—

प्राणग्रहाः पृश्निग्रहाश्च ग्रहा भवेयुः । कुतः ? ग्रहशब्दसमानाधिकरणत्वात् । तद्व्याख्यातम् "तच्छब्दः श्रूयत" इत्यत्र ।

॥ २० ॥ प्राणभृद्भिर्गृह्येरन् लिङ्गसंयोगात् ॥ ३-३-३९ ॥ (सि)

प्राणग्रहान् प्रकृत्यामनन्ति—"प्राणा वै प्राणग्रहाः प्राणेभ्यः खलु वा एतत्प्रजा नयन्ति" इति ।

सूत्रमेतदुत्तरविवक्षार्थम् ।

अग्रे चाम्नायते "प्राणभृत उपधाय संयत उपदधाति प्राणानेवास्मिन् धित्वा संयद्भिः संयच्छति" इति । किमेते प्राणग्रहाः समीपाम्नातेन 'त्वे क्रतुमपि वृञ्जन्ति

विश्वे' इत्यादिमन्त्रजातेन ग्राह्याः उत प्राणभृन्मन्त्रैरिति सन्देहः। किं प्राप्तम्? सन्निधेः समीपे परिपठितेनैव गृह्येरन्।

ननु क्रमाल्लिङ्गं बलवत्तरम्। लिङ्गाच्च प्राणभृन्मन्त्राः प्राप्नुयुः। [न]वाक्यमन्तरेण अन्यत्र प्रकरणादाम्नातस्य केवलेन लिङ्गेन विनियोगः संभवति। तस्मात् सन्निधिनैव ग्रहस्य विनियोजकत्वात् यद्यल्पीयांसो मन्त्राः तथाप्यावृत्त्या ग्रहणेनाभिसम्बध्यन्ते इति प्राप्ते ब्रूमः। प्राणभृन्मन्त्रैरेव गृह्येरन्। कथं? लिङ्गसंयोगात्। "प्राणा वै प्राणग्रहा" इति प्राणसंस्तुतिर्दृष्टा। "प्राणानेवास्मिन् धित्वा" इतीष्टकानां प्राणसंस्तवो दृष्टः। यदि प्राणभृन्मन्त्रैः ग्रहा गृह्येरन् ततो मन्त्रनामाद्या स्तुरुपपद्यते। नान्यथेति।

अथवा लिङ्गसंयोगात्—"ज्येष्ठा वा एता ब्राह्मणाः पुराविदामक्रन्" इति ज्येष्ठानां वसिष्ठभरद्वाजविश्वामित्रादीनां महर्षीणां नामधेयानि प्राणभृन्मन्त्रेषु श्रूयन्ते। यदि प्राणभृन्मन्त्रैरेते प्राणग्रहा गृह्यन्ते (इति) ज्येष्ठा वा एता इत्ययमर्थवादो मन्त्रलिङ्गापेक्षोऽर्थवत्तामासादयिष्यति नान्यथेति।

॥ सङ्ख्यायोगाच्च दश गृह्यन्त इति ॥ ३-३-४० ॥

दशैते मन्त्राः तदपेक्षा संख्योपपत्स्यते।

ननु बहवः प्राणग्रहास्समाम्नायन्ते। सत्यम्। अल्पमन्त्राणामल्पसङ्ख्यत्वात् आवृत्तिस[ह]त्वाच्च एकपर्यायापेक्षयाऽवयुत्यवादो "गृह्यन्त" इति। तद्यथा 'पञ्च गृह्यन्त' इति पञ्चाशद्ग्रहाणां पर्यायापेक्षयाऽवयुत्यवादः। तथा "नव गृह्यन्त" इति दशममन्त्रं साधारणमभिप्रेत्य। एवं च 'पञ्चचत्वारिंशद् ग्रहा भवन्ति' इति। (एतावद्यस्तिद्वावस्ति व्याप्तेः ?) सर्व एव प्राणभृन्मन्त्रेषु संकीर्त्यन्ते। तस्मादिष्टकाभिः समानतन्त्रा गृह्यन्त इति।

॥ २१ ॥ पृश्निप्राणग्रहान्व्यतिषजति इति ग्रहेषु नोपपद्यते ॥ ३-३-४१ ॥ (पू)

[द्वादशाहे पृश्निप्राणग्रहान् व्यतिषजति, इति श्रुतम्।] किमयं मानविकारः उत ग्रहविकार इति। किं प्राप्तम्? ग्रहविकार इति। ग्रहेष्वेतेषु सत्सु मानैर्व्यतिषङ्गो नोपपद्यत इति। न हि मानकाले नियमोऽस्ति।

॥ ग्रहा एते मानस्थाने वा ग्रहव्यतिषङ्गात् ॥ ३-३-४२ ॥ (सि)

मानकाल एवैते ग्राह्याः स्युः । अर्थात् ग्रहीतव्याः अत्र ग्रहाणां मानविषयत्वे सति व्यतिषङ्गो नोपपद्यते । अन्येन ह्यन्यस्य व्यतिषङ्गो भवति ।

व्यपदेशात् ॥ ३ - ३ - ४३ ॥

माने व्यतिषजन्तीति व्यपदेशात् मानविकारत्वमेतेषाम् । अन्येन ह्यन्यस्य व्यपदेशो भवति ।

॥ ग्रहशब्दाच्च ॥ ३ - ३ - ४४ ॥

ग्रहशब्दश्च[1] [ मानेषु ]नोपपद्यते । ग्रहणस्यामानविकारत्वात् ।

॥ स्थानान्मानकाले वचनात् ॥ ३ - ३ - ४५ ॥

मानविकारा एवैते स्युः । वार्यभावाद्धि तस्मिन् काले ग्रहणमनुपपन्नम् । अनर्थग्रहीतव्यत्वे च ग्राह्यस्य संस्कारवैगुण्यं स्यात् । विशेषाद्व्यतिषङ्गः ।

यत्पुनरुक्तं व्यतिषङ्गादिति पवमाने मानत्वे वैकृतत्वाविशेषात् व्यतिषङ्ग उपपद्यते । प्राकृतैर्मानैस्तथा व्यपदेशः । सति विशेषे व्यपदेशः । व्यपदिश्यन्ते प्राकृतैर्मानैः वैकृतानि मानानि । ग्रहणात् ग्रहाः । यथा ज्येष्ठग्रहः । ग्रहणसामान्यात् ग्रहत्वं एषाम् । यथा आज्यग्रहस्य ग्रहधर्मिणो गौणग्रहत्वम् । एषामपि गौणग्रहत्वं स्यात् । तस्मान् मानविकारा एव नव ग्रहाः । अमन्त्रेषु प्राणग्रहेषु(वतां)पृश्नय: सामान्यादमन्त्राणां इतरे अस्वार्थमन्त्रत्वात् प्राणग्रहा अमन्त्रा इत्युपचर्यन्ते । अतः उपचारसामान्यात् अमन्त्राणामेव मानानां समुच्चयेन विकाराः मन्त्रसहिताः पृश्नयो मन्त्रवत्समाम्नानात् । एककर्मपातः सामिधेनीभिः तत्र विकारादिकं नोपपद्यते । तस्मादुभये वा पृश्निग्रहाः प्राकृतैर्मन्त्रवद्भिन्नमन्त्रैः व्यतिषज्य प्रयुज्येरन् । पृश्निप्राणग्रहा इति तु पूर्वनिपातात् पृश्न्युपक्रमः प्रयोग इति ।

---

1. T and R ग्रहशब्देषु वा

॥ २२ ॥ प्रायणीये चोदयनीये च गृह्यन्त इति तदहीनेन व्याख्यातम् ३–३–४६ ॥

अनारभ्याधीताः पृश्निप्राणग्रहाः । ते किं प्रकृतौ निविशन्ते उत विकृताविति सन्देहः । किं प्राप्तं ? प्रकृत्यर्थाः पृश्नयः यथा अन्येऽनारभ्यवादाः अनारभ्याधीतत्वात् प्रकृतौ निविशेरन् यथा अंश्वदाभ्यौ । एवं प्राप्ते ब्रूमः । उत्कर्ष इति । कुतः ? वचनात् " प्राणग्रहा गृह्यन्त " इति । तदहीनेन व्याख्यातम् । यथा ' द्वादशाहीनस्य ' इति द्वादशाहीनत्वं प्रकृतितः उत्कृष्ट एवमेतेपि पृश्निप्रणग्रहाः "प्रायणीयोदयनीययोर्दशमेऽहति गृह्यन्ते " इति वचनात् प्रकृतित उत्कृष्यन्ते इति ।

प्रायणीयादिवाक्यैः प्राणग्रहाः प्रकृतितः उत्कृष्यन्ते । मानैः पृश्निप्राणग्रहान् व्यतिषजन्तीति वाक्यात् प्राणग्रहसंबन्धात् पृश्निप्राणग्रहाणामुत्कर्ष एवेति ।

इति सङ्कर्षकाण्डभाष्ये तृतीयाध्यायस्य तृतीयः पादः

अयं ग्रहपाद इत्युच्यते ।

---

## ॥ तृतीयाध्यायस्य ॥

# ॥ चतुर्थः पादः ॥

### ॥ १ ॥ आर्षेयं वृणीते इत्यृत्विजामभिजनाचिख्यासा यथा भार्गवो होतेति ॥ ३-४-१ ॥ (पू)

आर्षेयं वृणीत इति किं ऋत्विजामभिजनाचिख्यासा, किं वा तेषामेव श्रुतसंपदभिधानं, किं वा यजमानस्य पूर्वपुरुष(सतस्य)[त्रयस्य]अनुकीर्तनमिति सन्दिह्यते। किं प्राप्तम्?

ऋत्विजामभिजनाभिधानमिति। अभिजातमृत्विजं(किं) वृणीत। आर्षेयशब्दस्य लोके अभिजाते प्रयोगदर्शनात्। आर्षेयो ब्राह्मण इत्येतदुक्तं स्यात्। अविच्छिन्नवेदार्थविज्ञानानुष्ठानपूर्वपुरुषं ऋत्विजं वृणीते इति।

नैतद्युक्तम्। नायमार्षेयशब्दोऽभिजाते(शब्दे)प्रसिद्धः। न च प्रसिद्धिमुल्लङ्घ्य शब्दार्थकल्पना न्याय्या। तस्मान्नार्षेयशब्दोऽभिजनवचनः। यद्येवं [1]श्रुतिसंपदुपेतो भवेदार्षेयो लोके वेदे च सिद्धत्वात्। लोके तावत् 'अनूचानः शुश्रुवानार्षेयो देवदत्त' इति। वेदेऽपि 'एष वै ब्राह्मण ऋषिरार्षेयो यच्छुश्रुवान्' इति। (तथाऽयमार्षेयतया)। तथा "एष वै पितृमान् पैतृमत्य आर्षेयो यः शुश्रुवान्" इति शुश्रुवानार्षेयमिति ऋत्विजमार्षेयं इति वाक्यैकवाक्यत्वेन यमृत्विजं वृणीते तमार्षेयं इत्यधिकारिविशेषणम्। यथा 'भार्गवो होता वासिष्ठो ब्रह्मा' इति।

### ॥ यजमानस्य वा बन्ध्वनुकीर्तनं वाक्यशेषात् ॥ ३-४-२ ॥ (सि)

आर्षेयं वृणीत इत्यनवधृतविशेषार्थस्य वाक्यशेषाद्यजमानस्य 'तेजो वै घृतं' इतिवत् बन्धुसन्ततिप्रतीतिर्विज्ञायते। (न च) आर्षेयं वृणीते[ इत्यतः ]परं 'यजमानस्याशीर्गच्छेत्' इति(पर) आर्षेयपदेन परं 'यज्ञस्याशीर्गच्छेत्' इति ब्रुवन् यजमानस्य स्वबन्धुकीर्तने आशिषा योगमनुशास्ति। आर्षेयसमन्वये च "ऋषीणां

---

1. A reads श्रुत

हि देवाः पुरुषमनुबुद्ध्यन्ते" इति "ऋषीणां यजमानस्य पूर्वपुरुषान्वयं अन्वजानन्त देवाः" इति यजमानस्य बन्धुभिरवबुद्धेरस्ति प्रयोजनमिति दर्शयति। नान्येति। "यो वा अन्यस्सन् अन्यस्य[1] प्रवरेण प्रवृणीतः स्यात् तस्य इष्टमधीतं पूजितं" इत्यन्यस्सन् अन्यस्य प्रवरेणेति स्वप्रवरं नियच्छन् यजमानस्य पूर्वेषां ऋणीणामनुकीर्तनम् दर्शयति। यजमानस्य अभीष्टं वीतं च न ऋत्विजाम्। तस्मात् यजमानस्यैव बन्ध्वनुकीर्तनमिति।

॥२॥ भृगुर्वसिष्ठेति ब्रूयादेवं सोऽनुकीर्तितो भवति ॥३-४-३॥ (पू)

स्वानुकीर्तनं यजमानस्य पूर्वपुरुषकीर्तनम् प्रातिपदिकमात्रेण कर्तव्यं भृगुर्वसिष्ठेति आहोस्वित् अपत्यप्रत्ययान्तेनेति संशयः।

किं प्राप्तम्—केवलेनोपलक्षणमिति। यजमानस्य पूर्वपुरुषोपलक्षणस्य स्वप्राधान्येनानुकीर्तनं कृतं भवति। इति प्राप्ते ब्रूमः—

॥ भार्गववासिष्ठेति वा अस्य हि तेन लिलक्षयिषैषाम् ॥ ३-४-४ ॥

भृग्वादिप्रातिपदिकजातं प्रत्ययार्थोपसर्जनम्। प्रत्ययार्थस्य प्राधान्येन विवक्षितत्वात्। प्रत्ययार्थेन यजमानस्य जन्यजनकलक्षणस्य सम्बुद्ध्या वंशावच्छेदरूपेण विवक्षितत्वात्। यजमानस्य चाग्नेराहवनीयस्य पितापुत्रवत्संबन्धोऽभिधित्स्यते। "अग्ने महाँ असि ब्राह्मण भारत" इत्यर्थवादोपपत्तेश्च। वंशसन्तानाविच्छेदाचिख्यासामन्तरेण "बन्धोरेव नैत्यथो सन्तत्या" इत्यर्थवादो न जाघटीति। तस्माद्भार्गववासिष्ठेत्येव प्रयोग इति।

॥ ३ ॥ त्रीन्वृणीते मन्त्रकृतो वृणीते इति मन्त्रकृतां परिमाणाचिख्यासा यथा भार्गवांस्त्रीनानयेति ॥ ३-४-५ ॥

'त्रीन् वृणीते' 'मन्त्रकृतो वृणीते' इति निरपेक्षे भिन्ने चैते वाक्ये उत परस्परं विशेष्य[विशेषण]भाव इति [सन्देहे]भेदश्रुतेः निरपेक्षे वाक्ये इति प्राप्ते। ब्रूम।

---

1. R अन्यस्यान्यस्य

त्रीन् मन्त्रकृत इति परिमाणाचिख्यासा। कथमिति चेत् यथा लोके भार्गवांस्त्रीनानयेत्युक्तः भार्गवानेव त्रीनानयति।

नैतदेवम् - आर्षेयस्य विशिष्टस्यानुवदितुं [अ]शक्यत्वात्। न च 'आर्षेयं वृणीते' इति सामान्येन विधिः। 'एकं वृणीते' इत्यानर्थक्यप्रसङ्गात्। तत्रैतदुक्तं अन्यार्षेयस्य ह्रानं स्यात् (6-1-43) इति। तेन त्रीन् वृणीते तान् मन्त्रकृत इति। यदैवं विशिष्टानुवादः पञ्चार्षेयपरे च मन्त्रकृतः स्यात्। इयं परिमाणाचिख्यासा इति च सूत्रविरोध इति।

अत्रोच्यते। संमार्गविधेः यथा ग्रहप्रातिपदिकस्य ग्रहत्वोपलक्षणार्थत्वं य[त]था त्रीनिति त्रिशब्दस्य वाक्यान्तरविहितपञ्चत्वोपलक्षणार्थत्वम्।

यत्पुनरुक्तं सूत्रविरोध इति। यस्य यावन्त्यार्षेयानि सङ्कीर्तनीयानि त्रीणि पञ्च वा स्यातां परिमाणाचिख्यासा - परिमाणोपलिलक्षयिषेति सूत्रार्थः।

[1]अथ वा त्रीन् वृणीते मन्त्रकृतः इति परस्परनियमः[2] एवं चार्षेये कथममन्त्रकृतां प्राप्तिः? वाक्यान्तरं - यथा "ऋषीन् मन्त्रकृत" इति पञ्चार्षेयेपि मन्त्रकृतां प्राप्तिरिति।

## ॥ ४ ॥ यथर्षि वरणं सन्तानानुकीर्तनमिति समधिगतम्
## ॥ ३ - ४ - ६ ॥

तत् किं अनियमेन कर्तव्यं उत नियतानुपूर्वीकप्रकाश्यार्थविशेषात् प्रयोगप्राशुभावाद्वा नियमः [ इति सन्देहे अनियम इति ] प्राप्ते ब्रूमः।

"इत ऊर्ध्वानध्वर्युर्वृणीते अमुतोर्वाचो होतेति च विज्ञायते"। परमप्रकृतेरारभ्य त्रीन् पञ्च वा अन्तरालाननुक्रम्य "अग्नेऽयमहमस्मि ब्राह्मण भारत" इति सामर्थ्यादामन्त्रितपदैः वच्छब्देन व्रियेरन् वंशाविच्छेदस्याचिख्यासितत्वात्। होतृप्रवरस्य अयं प्रयोग इति। अर्थादध्वर्युः वच्छब्दादिति प्रवरमन्त्रमुपदिशति अध्वर्योः प्रातिलोम्येन प्रयोगो व्याख्यात इति।

---

1. R. अथ  2. S परस्परमन्त्रनियमः

॥ ५ ॥ मनुवदित्येव ब्रूयादिति वैश्यराजन्यानां यथा शेषे चतुरवत्तम् ॥ ३ - ४ - ७ ॥ (पू)

"आवृश्चते वा एष ओषधिवनस्पतिभ्यः यः परान् वृणीते मनुवदित्येव ब्रूयात्" इति । स एष मनुवत्कल्पः किं वैश्यराजन्यानामेव, आहोस्वित् सर्ववर्णानां विकल्पेनेति [ सन्देहः ]

किं प्राप्तम् ? अयं मनुवत्कल्पो वैश्यराजन्यानामेव स्यादिति ।

आर्षेयं प्रतिषिध्य विधीयते तस्मात्तेन विकल्पार्थः ॥ ३ - ४ - ८ ॥ (सि)

"आवृश्चते वा एष ओषधिवनस्पतिभ्यः यः परान्[1] वृणीते" इति प्रतिषिध्य प्रवरं मनुकल्पो[2] विधीयते । प्रवराणां च ब्राह्मणविषयत्वात् मनुकल्पस्य च प्रवर-विषयत्वात् सम [3]एव श्रेयान् इति ।

॥ पुरोहितस्य प्रवरेण वृणीते पुरोहितस्यार्षेयेण वेदयेदिति विज्ञायते ॥ ३ - ४ - ९ ॥ (सि)

मनुवत्ताविकारविशेषस्यार्षेयविधानस्य सर्ववर्णेष्वविशेषेण वृत्तत्वात् सर्वेषां च पुरुषाणां ऋषित्वात् गोत्रस्मृतेश्च सर्ववर्णेष्वविशिष्टत्वात् आर्षेयमनुवत्कल्पयोः त्रैवर्णिकेष्वेव विकल्प इति । "पुरोहितस्य प्रवरेण वृणीते, पुरोहितस्यार्षेयेणावेदयेत् इति राजन्यवैश्यानां विज्ञायते" इत्यपरः पाठो वै श्रेयानिति ।

॥ ६ ॥ निषादरथकाराश्च यमृषिमनुब्रुवते तेन तेषां वृणीत ॥ ३ - ४ - १० ॥ (सि)

निषादानां रथकाराणां च आर्षेयवरणं कर्तव्यं नेति विचार्यते ।

किं प्राप्तम् ? तेषां वर्णबाह्यत्वात् ऋषिस्मृत्यभावात् नार्षेयमनुकीर्तनम् । ननु ते विस्मरन्ति ऋषिं अमुष्य वयमिति । उच्यते । ऋषेरपत्यमार्षेयः । वर्णसङ्करा

---

1. प्रवरान् इत्यर्थः
2. अनुकल्पः S
3. समा एव S'

जानां निषादादीनां ऋष्यपत्यत्वं[न]संभवति । तस्मात्तेषां नार्षेयवरणमिति प्राप्ते ब्रूमः ।

निषादानां रथकाराणां च तेन ऋषीणां च संस्मृता[1] वृणीत । कथं? स्मृत्यविच्छेदात् । तेप्यविच्छेदेन स्मरन्ति "वासिष्ठा वयं" "वैश्वामित्रा वयं" इति । यत्पुनरुक्तं वर्णसङ्करजानां ऋष्यपत्यार्थः न सम्भवतीति ; ऋषेर्मन्त्रद्रशः साक्षादपत्यत्वं त्रैवर्णिकस्यापि न सम्भवति । घटते पारम्पर्येण । सर्वस्यैव जगतः ऋषिवंश्यत्वस्मृतेश्च द्रढतराया निर्मूलत्वासम्भवात् यमृषिमाहुस्तमार्षेयं प्रवृणीतेति ।

॥ ७ ॥ तथा ब्राह्मणानां राजोपेतानां राज्ञां च ब्राह्मणोपेतानाम् ॥
॥ ३ - ४ - ११ ॥ (सि)

ये ब्राह्मणाः स्ववृत्तिमपहाय अनन्तरां क्षत्रवृत्तिमङ्गीकृत्य व्यवस्थितास्ते राजोपेताः । तथा राजानो विश्वामित्रादयः राज्यमपहाय ब्राह्मणवृत्तिमङ्गीकृत्य व्यवस्थिताः । ब्राह्मणोपेतानां निषादानां रथकाराणां च स्पष्टः कल्पः । तथा प्रच्युतस्वकर्मणामपि जातौ न परत्वम् । अतः स्वजातिसन्निवेशशिष्टमेव वरणं स्यादिति ।

॥ ८ ॥ द्विगोत्रस्य त्रींस्त्रीनेकैकस्माद्गोत्रादुपलक्षयेत् सन्तत्या-
चिरुयासा ॥ ३ - ४ - ७२ ॥ (सि)

द्विगोत्राणां शैशिरप्रभृतीनां किमेकतो गोत्रादार्षेयप्रवरः उत गोत्रद्वयादिति सन्दिह्यते । एकत उपलक्षणे कृते[कृतं]कर्तव्यमिति न द्वितीयाद्वरणम् । तस्मात्सर्वे व्रियेरन्[3] (अत्र ग्रन्थपातः)

---

1. S and संस्तुता    2. R संस्कृता

3. The Siddhanta portion of this Adhikarana and the purvapaksha of the next Adhikarana are missing in the mss. So the relevent portion of Bhatta Dipika is reproduced here.

विकल्पस्य जघन्यतयैव "एकतो द्वौ अन्यत एकं" इत्यादिवचनसिद्धव्यवस्थयैवार्षेयवरणम् । अत एव उभयतो द्वयोर्द्वयोर्ग्रहणे त्रिग्रहणे वा चतुष्षडार्षेयप्राप्तौ तन्निषेधः सङ्गच्छते । अन्यथा चतुष्षट्प्रवराणामभावादेव सिद्धेर्निषेधवैयर्थ्यापत्तिः ।

॥ ९ ॥ वषट्कर्तॄणां वा ज्ञायते ॥ ३–४–१३ ॥ (सि)

[1][न च]तदेवेदं वरणं कर्मकालवषट्कर्तॄणामेव स्यादिति । सत्यमेवं तथापि ऋत्विजां वरणे उद्दिश्यमानत्वात् संस्कारत्वाच्च सर्वर्त्विग्वरणेऽविशेषात् संभवादिति प्राप्ते ब्रूमः—

"यदवृता वषट्कुर्युः भ्रातृव्यं यज्ञस्याशीर्गच्छेत् अथ यद्येते वृता वषट्कुर्वन्ति एकधैव यजमानं यज्ञस्याशीर्गच्छति" इति अवृतानां वषट्कारेण भ्रातृव्यं यज्ञस्याशीर्गच्छतीति दोषं सङ्कीर्त्य वृतानां यजमानस्याशिषः प्रतिष्ठां ब्रुवन् वषट्कर्तॄणामेव वरणं नियमयति ।

ननु लिङ्गमिदं, कःपुनरत्र न्यायः ? उच्यते—"ऋत्विजो वृणीते इत्युक्त्वा कृतिच्छन्दांस्येव वृणीते यद्धोतारं वृणीते यदाग्नीध्रं अतिच्छन्दसं तत् अथ यदध्वर्युं पङ्क्तिस्तत्, यन्मैत्रावरुणं गायत्रं तत्, यद्ब्राह्मणाच्छंसिनं त्रिष्टुभं तत् यत्पोतारं उष्णिहं तत् यन्नेष्टारं ककुभं तत, यदग्नीनां दैवीनां विशा पुर एते" इति लज्जमानमिव 'अवृतस्तद्वृणीते स वृतो वषट्करोति' इति सप्तानामेव वषट्कर्तॄणां वरणमनुक्रान्तम् । यतो वरणविधिरयं वषट्कारेणेति । यतः केषुचिदेव ऋत्विजं वृणीते इति सत्यपि वषट्कर्तृत्वे साकल्येनानुक्रमणात् प्राप्तमच्छ वाकं प्रतिषेधति । तस्मादच्छावाकमपहाय अन्ये वषट्कर्तारो व्रियेरन्निति ।[2]

॥ १० ॥ होतृमैत्रावरुणौ दार्शपूर्णमासिक्या दर्शपूर्णमास-
प्रकृतीनां कृते[3] न सोमस्य धर्मः पशूनामस्ति
तृतीयसवने कृष्णविषाणया कण्डूयनेन
व्याख्यातम् ॥ ३–४–१४ ॥ (पू)

---

1. Next Adhikarana purvapaksha-

दैक्षे श्रुतं "दैवं च मानुषं च होतारौ वृत्वा आवमाश्रावं सौमिकानृत्विजो वृणीते" इति तदिदं ऋत्विग्वरणं कर्ममध्ये विहितं ऋत्विक्संस्कारकत्वात् अविशेषात् सर्वार्थम् । सप्त वृणीते इति तु दश गृह्यन्ते इतिवदवयुत्यवादः इति, आदिः

2. S' adds प्राप्ते ब्रूमः

3. Mss. कृतो

होतृमैत्रावरुणौ दार्शपूर्णमासिक्या वरणवचसा व्रियेताम् ऐष्टिकविध्यन्तग्राहीष्टिपशुषु। तस्मात्तौ कार्यौ न सोमस्यैव। अन्ये तु लौकिक्यैव वाचा व्रियेरन्। न चायं सोमस्य धर्मः। धर्मानियमस्य विधानात्। यथा तृतीयसवने कृष्णविषाणया कण्डूयनं धर्मोऽधर्म एव।

॥ लौकिक्या चैकवाक्यत्वाद्यथेतरेषाम् ॥ ३–४–१५ ॥ (सि)

नैतदेवम्। होतृमैत्रावरुणयोः दार्शपूर्णमासिक्या चेति। सर्वे लौकिक्या वाचा व्रियेरन्। एकवाक्योपदेशात्। एकेन वाक्येनोपदिष्टानां 'सप्त वृणीते'इति कस्यचिद्वरणं लौकिक्या वाचा कस्यचिद्वैदिक्येति विप्रतिषिद्धम्। एकवाक्योपदिष्टानामेकरूपता न्याय्या। वैरूप्यस्य वाक्यभेदात्मकत्वात्।

यत्पुनरुक्तं कृष्णविषाणाकण्डूयनवदिति[न]विप्रतिषिद्धम् कण्डूयनं सामर्थ्यप्राप्तद्रव्यसाध्यत्वात् [अत्र]लौकिक्या वाचा वरणं कर्तव्यमिति स्थितेः। मन्त्रैः (पातः)

॥ ११ ॥ प्रैषेण यजन्त्यनुप्रैषादिभिः प्रथत इत्येकेषां सोऽन्ववेत्य विधिः ॥ ३–४–१६ ॥ (सि)

"ऋतुप्रैषादिभिर्वृणीते" इत्याहत्य विधानात् न लौकिक्या विधानवाचा (न्याया)व्रियेरन्। होतायक्षदित्यूर्ध्वमेतस्मादिन्द्रं होत्रादित्येवमादय उपदिश्येरन्। तद्व्याख्यातम् प्रैषेण यजन्तीत्यत्र। यथा होता यक्षदिति अन्यार्थत्वात् यजितोऽपाकृष्टं एवं वरणादपि अन्यार्थत्वादेव अपकृष्येत। तस्मादिह सामान्यमपसार्य[1] विशेषसंबन्धो गौण एव [इति] वक्तुं प्रैषादिभिरिति बहुवचनं अर्थवद्भविष्यति। लिङ्गानुग्रहश्च। तस्माद्धोतायक्षवर्जेन प्रैषादिना वरणमिति।

॥ १२ ॥ सप्त वृणीत इति वरणानां सङ्ख्यायोगात् ॥ ३-४-१७ ॥ (पू)

किमयं वरणवाद इति। कथं? आनन्तर्यात् सङ्ख्या वरणेन संबध्यते। ननु सामर्थ्यतः सङ्ख्या सङ्ख्येयेषु वर्तते गुणानां द्रव्याश्रयत्वात्। न। यज-

1. A अवसाय्य

मानेन सार्धं तेषां बहुत्वात् । कर्मण्यपि सङ्ख्यादर्शनात् तिस्रो जुहोतीति। अवयुत्यवादो यथा षड्भिरुपतिष्ठत इति ।

॥ पुरुषवादः स्यात्तेषामपि प्रकृतत्वात् ॥ ३ - ४ - १८ ॥ (सि)

होतारं वृणीते इत्यादिभिः शब्दैः । न च वरणगुणभूतानां तेषां उपादानात् द्वितीयाविभक्तिनिर्देशः सङ्ख्यान्वयस्य च सङ्ख्येयद्रव्यवृत्तित्वात् ।

यदुक्तं बहुत्वात् पुरुषाणां नोपपद्यत इति । अवयुत्यवादोऽर्थवादः स्यात यथा षड्भिरिति द्वादशसु षण्णाम् ।

अध्वर्युं नेष्टारं चैकजातीयत्वादेकवत् (चतुर्थीतः अध्वर्युं चैव एकवत् ।) कृत्वा सप्त वृणीते इति व्यपदेशोऽवकल्पते ।

सहवरणादेकजातीयत्वाच्चैकमिति वा अध्वर्युं सञ्चक्षते । एवं सङ्ख्यातः श्रुतिर्भविष्यति इति । न च वरणस्य सङ्ख्यायामवयुत्यवादः यथा द्वादशसङ्ख्यायामुपात्तायां अष्टाकपालत्वम् (होत्रर्थमेव) । एवं वाक्यविधानादेवावैरूप्याय वृता वषट् कुर्वन्तीति च एवं पशौ वषट्करोतीति च । तस्मादृतुप्रैषादिवरणं सोमार्थमेव सर्वेषां न पशौ भेदेन कर्तव्यमिति ।

॥ १३ ॥ निरूढपशुबन्धार्थं तदहीनेन व्याख्यातम्
॥ ३–४–१९ ॥ (सि)

"द्वितीयमस्याश्रावयति द्वौ ह्यत्र होतारौ होता च मैत्रावरुणश्चेति" द्वादशोपसत्त्ववत् प्रकरणादुत्कृष्यते निरूढपशुबन्धार्थं भवतीति ।

॥ १४ ॥ श्वोभूते व्रियेरन् तदर्थत्वात् यथान्यानि
यज्ञाङ्गानि ॥ ३–४–२० ॥ (पू)

तदेतन्मैत्रावरुणस्य वरणं किं श्वोभूते कर्तव्यं उत पूर्वेद्युरेवेति सन्दिह्यते । किं प्राप्तं ? पूर्वेद्युराम्नातमपि श्वोभूत एव कर्तव्यम् सोमार्थत्वाद्वरणस्य यथा अभिषवादीनि पूर्वेद्युराम्नातानि श्वोभूत एव क्रियन्ते तद्वद्वरणमपि ।

॥ यथा समाम्नानाद्व्याख्यातम् ॥ ३–४–२१ ॥ (सि)

पाठक्रमेणैवौपवसथ्ये वरणं क्रियेत। तद्व्याख्यातम्—क्रमेण वा नियम्येत इति। यत्पुनरुक्तं यथा यज्ञाङ्गानीति—

॥ विप्रतिषेधो यज्ञाङ्गेष्वविप्रतिषिद्धं वरणम् ॥ ३-४-२२ ॥

पूर्वेद्युः क्रियायामर्थविप्रतिषेधात् अभिषवादयो न पूर्वेद्युः क्रियन्ते। न तु वरणे विप्रतिषेधोऽस्ति। तस्य पूर्वेद्युरेव क्रिया यथा सदोहविर्धानानां सोमार्थानामपि सतां अनर्थविप्रतिषेधात् पाठक्रमेणैव क्रिया तद्वदत्रापि पूर्वेद्युरेव वरणमिति।

इति श्रीसङ्कर्षकाण्डभाष्ये

तृतीयाध्यायस्य चतुर्थः पादः

आर्षेयपादः

—:*:—

॥ अथ (षोडशाध्याये) ॥

# चतुर्थाध्याये प्रथमः पादः

—: * :—

॥ १ ॥ हिंकृत्य सामिधेनीरन्वाह सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्तात् ॥ ४ - १ - १ ॥ (सि)

हिङ्कारसामिधेनीनां किमनियमेन प्रयोगः उत नियतेन क्रमेणैव प्रयोग इति। तत्रानियमोऽविशेषादिति प्राप्ते—

ब्रूमः - हिङ्कृत्येति क्त्वाप्रत्ययात् सामिधेनीभ्यः पूर्वो हिङ्कारः ततः पूर्वा व्याहृतयः सामिधेनीरनुवक्ष्यन्निति शब्दनिर्देशात् व्याहृतिभ्योऽपि पूर्वं दशहोता स्यात्। इत्ययं क्रमो मन्त्रपाठात्। तत्सामिधेनीरेव सृष्ट्वारभ्य प्रतनुते इति लिङ्गम्।

॥ २ ॥ तारमन्द्रौ अपोद्य मध्यमस्वरो विधीयते ॥ ४ - १ - २ ॥

किमेता अनियतेन स्वरेण प्रयोक्तव्या आहोस्वित् नियतेनेति। प्रयोगप्राशुभावादनियम इति प्राप्ते ब्रूमः।

"यत्क्रौञ्चमन्वाहासुरं तद्यन्मन्द्रं तन्मानुषं तद्यदन्तरा तत्सदेवं अन्तरानूच्यं सदेवत्वाय" इति तारमन्द्रौ निरस्य मध्यमस्वरो विधीयते तस्मात् मध्यमया वाचा सामिधेन्यो वक्तव्या इति।

॥ ३ ॥ अन्तर्वेद्येकः पादो भवति बहिर्वेद्यन्य इति संस्थानविशेषो वाक्यैकवाक्यत्वात् ॥ ४ - १ - ३ ॥

सामिधेनीरेव प्रकृत्यामनन्ति "होतुरन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्यः" इति। किमयं स्वतन्त्रविधिः आहोस्वित 'तिष्ठन्नन्वाह' इत्यस्य साकाङ्क्षस्य विधेश्शेषविधिः वाक्यैकवाक्यत्वादिति। (अत्र पातः)

तत्र अर्धमन्तर्वेदीत्यादाविव न स्थानविशेषलक्षणा वाक्यद्वयेन सम्भवति। तादृशस्थानस्यैकत्वेन तत्रैकः पादोऽन्यत्रान्यः पाद इति कथनस्वारस्यविरोधापत्तेः। तस्माद्वेदेरन्तरुपविश्य प्रवोवाजा अभिद्यव इति पादो वक्तव्यः। तद्बहिरुपविश्य

हविष्मन्तो घृताच्येति । पुनस्तदन्तरुपविश्य देवान् जिगाति सुम्नयों इत्यादिरीत्या ' सामिधेनीरनुब्रूयात् ' इत्यनेनैकवाक्यतया सिद्ध्यतीति प्राप्ते ।

तिष्ठन्नन्वाहेति विधेः स्थानविशेषसाकाङ्क्षत्वेन तत्समर्पकतयैकवाक्यत्वे सम्भवति वाक्यभेदायोगात् तादृशस्थाने स्थितवतोऽर्थात् तदवयवभेदेन होतुः पादद्वयस्यावस्थाने अन्यः पाद इत्यस्यानुवादत्वं, असम्भवादन्यपादमाहेत्युच्चारणकर्मत्वेनानिर्देशात् पादशब्दस्य ऋक्पादपरत्वायोगाच्च स्थानविशेषलक्षणया तत्र होता स्थित्वाऽनुब्रूयादित्यर्थः । (भा. दी)

॥ ४ ॥ पञ्चदश सामिधेनीरन्वाहेति चतस्र आगमयेत् एकादश प्रकरणे श्रूयन्ते ॥ ४-१-४ ॥ (पू)

प्रकृतौ एकादश सामिधेन्यस्समाम्नाताः विनियोगश्च पञ्चदशानाम् । अत्र किमागमेन संपादनं कर्तव्यं उताभ्यासेनेति ।

किं प्राप्तम्—आगमेनेति । कथं ? पृथक्त्वनिवेशित्वात् सङ्ख्यायाः । यथा दश गावो विंशतिरश्वानामिति ।

॥ लिङ्गदर्शनाच्च ॥ ४-१-५ ॥

लिङ्गमप्येतस्मिन्नर्थे भवति ' तासां त्रीणि च शतानि षष्टिश्चाक्षराणि तावतीस्संवत्सरस्य रात्रय ' इति । आगमेन सङ्ख्यापूरणे पञ्चदशानामृचां संवत्सररात्रिसङ्ख्याक्षराणि भवन्ति ।

॥ अभ्यासेन सङ्ख्या पूर्येत प्रकरणात् यथाऽऽज्येषु सङ्ख्यापूरणम् आम्नानात् ॥ ४-१-६ ॥ (सि)

आम्नातो ह्यभ्यासः त्रिःप्रथमामन्वाह त्रिरुत्तमामिति । यदुक्तं सङ्ख्यासामञ्जस्यादागम इति । यथा कर्मण्याज्येषु युगपद्भाविष्वपि [आ]वृत्तिः सर्वसङ्ख्याव्यवहारः तद्वदत्रापीति ।

ननु भाक्तस्तत्र ? सत्यमेवं शास्त्रादभ्यासेऽवगते अभ्यस्यमानविषया सङ्ख्या भाक्तैव स्यात् इति । एतेनाक्षराणां संवत्सरसङ्ख्या प्रत्युक्ता । प्रकृतावभ्यास एव सामिधेनीनामिति ।

॥ ५ ॥ सन्ततमुत्तरमर्धर्चमालभेतेत्युत्तमेनानुवचनेन आनन्तर्यात् सन्तानम् ॥ ४ - १ - ७ ॥

"यः कामयेत सर्वमायुरियामिति प्रवोवाजा इति तस्यानूच्य अग्न आयाहि वीतय इति सन्ततमुत्तरमर्धर्चमालभेत" इति । त्रिः प्रथमामन्वाहेति प्रवोवाजीयायाः त्रिसृष्वप्यनुवचनेष्वविशेषेण सन्ततं[सान्तत्यं]उत उत्तमस्यैवानुवचनस्येति सन्देहः—

किं प्राप्तम्—उत्तमस्यैवानुवचनस्येति। कथं ? नूनं तत् अग्न आयाहि वीतय इत्यर्धः स्यात् (तत) न तु पूर्वयोरनुवचनयोः, व्यवधानादिति प्राप्ते ब्रूमः

॥ सर्वैर्वाऽविशेषात् ॥ ४–१–८ ॥

सर्वैरेवानुप्रवचनैः उत्तरार्धर्चं[1] सन्तनुयात् प्रवो वाजा इति निर्देशस्याविशिष्टत्वात्। न त्वानन्तर्याद्विशेषप्रतीतिः कामसंयोगेन विकारविधानात्। "यं कामयेत सर्वमायुरियादिति प्रवो वाजा इत्येतामृचं त्रिरनवानमनूच्य अग्न आयाहि वीतय इति सन्ततमुत्तरमर्धर्चमालभेत" इति सर्वैरेवानुप्रवचनैः सन्तानं समामनन्ति। अनुच्छ्वसन् प्रवोवाजाः त्रिरभ्यस्य उत्तरार्धर्चेऽवस्येत्। यथा लोके त्रिरनवानमेकमनुवाकमनुब्रूहि इत्युक्तो देवदत्तः सर्वान्वाराननुच्छ्वसन्नेव ब्रूते। तद्वदत्रापीति।

ननु प्रत्युच्चारणमनवानेपि त्रीनेवानवानमिति [न] घटते। नेति ब्रूमः। नह्येवं त्रिरिति वक्तव्यम्, त्रिःप्रथमामन्वाहेति प्राप्तार्थत्वात्। नन्वेवमपि सामिधेनीरन्वाहेति प्राप्तानुवचनानुवादेन त्रिरनवानमिति चानेकार्थविधाने वाक्यभेदः स्यात्। नेत्युच्यते। अनुवचने त्रिरनवानसम्बन्धविधानान्न वाक्यभेदः। यथा प्रवोवाजाः त्रिरनूच्येति त्रिरनवान[नुवचन] विशिष्टक्रियान्तरम्। तस्योत्तरमर्धर्चमालभेतेत्यस्य विशेषणत्वेनोपादानान्न वाक्यभेदः। यथा 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति। तस्मात् प्रवो वाजाः त्रिरनवानमनूच्येत्यस्य विशेषणनिर्देश इति।

न[नु]चानन्तर्यमुत्तरस्यानुवचनस्य विशेषणमित्युक्तम्। नैवं, उत्तरशब्दस्योत्पत्तिक्रमाम्नायापेक्षत्वात्।

---

1. Ś उत्तमार्ध

तदुक्तं—नैमित्तिकमुत्तरत्वमानन्तर्यात् प्रतीयेत (पू. मी. 9 - 2 - 5) इति । तस्मात् यं कामयेत सर्वमायुरियादिति तस्मै त्रिरनुवचनानि सहानवानमुक्त्वा अग्न आयाहि वीतय इत्यर्धर्चमालभेतेति ।

**॥ 'यं कामयेत सर्वमायुरियादिति आजुहोत दुवस्यतेति त्रिनवानमनूच्य सहोपक्रमेत्' इत्येतेन व्याख्यातम् ॥ ४-१-९ ॥**

इत्यधिकरणातिदेशः। पूर्वाधिकरणे यौ पूर्वोत्तरपक्षौ तावेवात्रापि योज्याविति ।

**॥ ६ ॥ सन्ततमन्वाहेति सामिधेनीनाम-विशेषात् ॥ ४ - १ - १० ॥ (सि)**

किं प्रथमोत्तमयोरयं धर्मः आहोस्वित् सर्वासां सामिधेनीनामिति संशये—

सन्ततमन्वाहेति सर्वासां धर्मो भवेत । कथं ? अविशेषविधानात 'ता एकश्रुति सन्ततमन्वाह' इति सामिधेनीरुद्दिश्यायं धर्मो विधीयते । उद्दिश्यमानानां च तासां विशेष्टुमशक्यत्वात अविशेषेणैवायं धर्मः इति ।

**॥ वाक्याद्वा प्रथमोत्तमयोरेवायं धर्मो भवेत् ॥ ४-१-११ ॥ (पू)**

कथं ? वाक्यात् 'त्रिःप्रथमामन्वाह त्रिरुत्तमां' इति प्रकृत्य एतदाम्नायते "तास्सन्ततमन्वाह" इति । तस्मात तयोरेवैष धर्मः स्यादिति प्राप्ते ब्रूमः—

**॥ अवाच्यत्वान्नेति चेत्स्यात् संयोगपृथक्त्वात् ॥ ४-१-१२ ॥**

यत्राप्राप्तस्सन्तानः तत्र सन्तानविधिरर्थवत्तामासादयेत् । प्रथमोत्तमयोरेवैष धर्मः स्यात् । अनवानोपदेशादेव सन्तानविधेः **अवाच्यः सन्तान इति चेत्** मन्यसे; **स्यात् संयोगात्** । स्यादेवायं सन्तानविधिः सामिधेनीषु, अनवानविधिरपि काम्यासु । तस्मात संयोगपृथक्त्वात् स्यादेव प्रथमोत्तमयोः सन्तान इति । नैवं स्यात । नानवानोपदेशात सन्तानसिद्धिः भिन्नविषयत्वात् । कथं ? [सन्तानं] विनाप्यनवानं ब्रूयात् प्राणायामाभ्यासबलात । न चैवं सति संयोगपृथक्त्वम् । उत्तरमनवान[म]विशेषेण नित्येपि प्राप्ते प्रथमोत्तमे त्रिरनवानमनुब्रूयादिति ।

यद्येवं कथं तर्हि सूत्रं ? अवाच्यत्वाच्चाविशेषाकाङ्क्षा[यां] एकैकामेव [1]सन्तनुयादिति विशेष(ण)विधिसत्त्वात् संयोगान्तरमिति ।

॥ पूर्वेण कृतत्वाद्वा सर्वासाम् ॥ ४-१-१३ ॥ (सि)

नैतदेवं, संयोगपृथक्त्वमिति । पूर्वेण शास्त्रेण सर्वासामेव सामिधेनीनामविशेषेण एकैकामेव [2]सन्तनुयादिति संन्तानो विहितः । न च 'ता एकश्रुति सन्ततमनुब्रूयात्" इत्यनेन वाक्येन प्राप्तानुवचनानुवादेन एकश्रुति सन्ततं इति चोभयं विधातुं शक्यते, वाक्यभेदात् । तस्मात्सन्ततमित्यनूद्य एकश्रुतीत्येतावन्मात्रमेव विधातुं शक्यते ।

॥ ७ ॥ सामिधेनीसन्तानस्तल्लक्षणत्वात् ॥ ४-१-१४ ॥

"एकैकामेव सन्तन्वन्" इति श्रूयमाणे संशयः—किमृचामयं परस्परतः सन्तानविधिः आहोस्विदर्धर्चयोरिति । किं प्राप्तम् ? प्रत्युच्चारणमेव यतिभावपर्यवसानात् ऋगर्धर्चयोः सन्तानवाद इति प्राप्ते ब्रूमः—सामिधेनीसन्तानः ।

स खलु सन्तानः ऋचा स्यात् नार्धर्चयोरिति । कुतः ? तल्लक्षणत्वात् ऋचामनुवचनं प्रक्रान्तम् । तासां सन्तानो विधित्स्यते नार्धर्चयोति ।

॥ अन्तेऽपीति चेत्स्याद्वचनात् ॥ ४ - १ - १५ ॥

**अन्त** इति अर्धर्चनामधेयम् प्रसिद्धं अध्येतॄणाम् । अर्धर्चसन्तानवाद एव स्यात् । ऋचां सन्ततमन्वाहेति संबन्धः । यथा लोके 'सन्ततमेकं श्लोकं ब्रूहि' इत्युक्तोऽर्धर्चे सन्दधाति एवमत्रापीति चेत् । तन्न "एकैकामेव सन्तन्वन्" इति वचनात् ऋचां सन्तानं न्याय्यम् । अपि च "ऋषेर्ऋषेर्वा एता निर्मिता यत्सामिधेन्यः ता यदसंयुक्ताः स्युः प्रजया पशुभिर्यजमानस्य वितिष्ठेरत् अर्धर्चे सन्दधाति संयुनक्त्येवैना" इति । तेन मन्यामहे पूर्वस्योत्तरमर्धर्चं उत्तरस्य च पूर्वान्ते[3] सन्दध्यात् । एवं युक्ता

---

1. S एकैकामेव सन्तमिति
2. S' सन्तन्वन्निति
3. A & R स्वपूर्वान्ते

यथासमाम्नानं भवति । आर्षभेदनिमित्तं न ऋचोरसंभेदः "....व्यन्य पूर्वं उत्तरं उत्तरस्याश्च पूर्वं" इति नानाऋचोरसन्तानमाम्नायो दर्शयति ।

एवं च सति यथासमाम्नायं विरंस्यते तस्मात्(न्याय)आद्यश्रुतिभ्यां सन्तानो मिथः विज्ञायते । "नान्तरार्धर्चौ व्यन्यात् यदन्तरार्धर्चौ व्यन्यात् अतिहाय प्राणः स्याददतिहाय पूर्वमर्धर्चं उत्तरस्यार्धर्चे व्यन्यात्" । इति । वस्तुतश्चायं श्रुतिः सन्न्याय-योगीत्यालक्ष्यते ।

॥ ८ ॥ प्रकरणात्समिधेनीनां प्रथमोत्तमयोर्वादो विज्ञायते
॥ ४ - १ - १६ ॥

"राथन्तरीं प्रथमामन्वाह राथन्तरो वा अयं लोकः इममेव लोकमभिजयति । बार्हतीमुत्तमामन्वाह बार्हतो वा असौ लोकः अमुमेव लोकमभिजयति" इति श्रूयमाणे संशयः ? रथन्तरस्य बृहतश्च योनिऋचावागमयितव्ये किं वा प्रथमोत्तमयो-रेवायं वाद इति ।

किं प्राप्तम् ? बृहद्रथन्तरयोर्योनिऋचावागमयितव्ये इति । कथं ? विधित्वे-नार्थवत्त्वात् । प्रकृतिप्रत्ययश्रुत्योश्चार्थनित्यत्वात् ।

नन्वनेकार्थविधानाद्वाक्यभेदः स्यात् । प्राप्तानुवचनानुवादेन राथन्तरीं प्रथमा-मिति । न । विशिष्टविधानात् सर्वविशेषणविशिष्टो रथन्तरस्य बृहतश्च योन्यनुवचन-विधिः प्रथमोत्तमाभ्यां विकल्पेनेति प्राप्ते ब्रूमः—

प्रकरणात् सामिधेनीनां प्रथमोत्तमयोर्वादो विज्ञायते "प्रेति रथन्तरस्य रूपं करोति" इत्येवम् । पुनरेतस्यां मन्त्रवर्णः 'बार्हतीमुत्तमामन्वाह' इति महति लोके सामिधेनीनामित्यर्थः । प्रथमोत्तमयोरेष वादः स्यात् । प्रकरणात् प्रकरणमेवमनुग्रहीष्यते ।

ननु प्राक् वाक्यात् श्रुतिर्बलीयसीत्युक्तम् । [1]न, अविरोधात् । यदि वाक्ययोः प्रकरणस्य च विरोधोऽभविष्यत्[2] बलाबलचिन्ता स्यात् । अत्र पुनरविरोधः । कथमिति ? रथन्तरमित्यस्य लक्षणया वाक्यार्थसमवायात् । प्रेति रथन्तरस्यैतद्रूपं करोतीति

---

1. Ms. ननु विरोधात् 2. A & R read हविष्यस्मात्

लक्ष्यते । तदस्ति प्रथमायां "प्रवो वाजा" इति । तस्मात् सा राथन्तरी । बृहति महत्युत्तमे स्थाने बार्हती स्यात् । न च राथन्तरीं बार्हतीं बा आहेति विधिः, वाक्यान्तरेण प्राप्तार्थत्वात् । पुनः श्रुतिः प्रेति रथन्तरस्य रूपमित्येवमाद्यर्थवाद-सम्बन्धात् । तस्मात् प्रथमोत्तमयोर्वाद इति ।

॥ सामतो वा एष तृचस्य प्रथमोत्तमयोर्वादो
विज्ञायते ॥ ४-१-१७ ॥

"अयज्ञो वा एष योऽसामा अग्न आयाहि वीतय इत्याह रथन्तरस्यैष वर्णः तन्त्वा समिद्भिरङ्गिर इत्याह वामदेव्यस्यैष वर्णः बृहदग्ने सुवीर्यमित्याह बृहत एष वर्णः यदेतं तृचमन्वाह यज्ञमेव तत्सामन्वन्तं करोति" इत्यादि । ते मन्यामहे प्रथमा-मुत्तमामिति प्रकरणात् यथा ऐन्द्रवायवोऽग्रे गृह्यते ध्रुव उत्तमो ग्रहाणां गृह्यते इति । 'रथन्तस्यैष वर्णः' 'बृहत एष वर्णः' इति । वाक्यान्तरेऽत्र च प्रथमोत्तमयोः स्वार्थस्य गुणस्य अविशिष्टत्वात् तयोरेष वादः स्यात् । अधिकारिकेन च प्रथमोत्तमशब्दः यथैन्द्रवायवध्रुवयोरिति ।

॥ १० ॥ त्रिर्विगृह्णातीति सामिधेनीनाम-
विशेषात् ॥ ४-१-१८ ॥ (पू)

त्रिर्विगृह्णातीति इत्ययं धर्मः किं सर्वासां सामिधेनीनां आहोस्वित् मध्यमाया इति संशये त्रिर्विगृह्णातीति विग्रहस्य सामिधेन्युद्देशेन विधानात् उद्दिश्यमानानां च विशेष्टुमशक्यत्वात् सर्वासामेवायं धर्म इति प्राप्ते ब्रूमः—

॥ सामन्वतो वास्य मध्यमायाः वादो भवेत् तस्याः स्थाने
(त्वा)स्थापयतीति ॥ ४-१-१९ ॥

राथन्तरीं प्रथमामन्वाहेत्यारभ्य सामन्वत्त्रिचमुपदिदिक्षुः मध्यमायाः 'तन्त्वा समिद्भिरङ्गिर' इत्यस्याः त्रिःक्रमेत त्रिर्विगृह्णातीति श्रूयते । तस्मात् क्रमात् (त्रिचं) त्रिर्मध्यमाया धर्मः न सर्वासाम् । आनन्तर्यात् सर्वासां धर्मो विग्रहः स्यात् । सत्यं । अविशिष्टमानन्तर्यं लिङ्गेन विशेष्यते । अन्तरिक्षेण वा इमे लोकास्सन्तताः अन्तरिक्षं वा अङ्गिर इति । तं त्वा समिद्भिरङ्गिरः इति अङ्गिरवत्त्वात् मन्त्रवाक्यस्य

"अन्तरिक्षेण वा इमे लोकाः सन्तताः" इति स्तुतेः तस्या एव त्रिर्विग्रह इति समामनन्ति । "तन्त्वा समिद्भिरङ्गिर इत्येनां त्रिर्विगृह्णाति इत्येके" इति नैतद्वचनं प्रापकम् । न्यायतः प्राप्तस्यार्थस्यार्थवादार्थमेतदिति उपपद्यते ।

॥ ११ ॥ समिद्वती घृतवती चानूच्येते [1]इत्यृचावागमयेत् ॥
तल्लिङ्गत्वाच्छब्दस्य ॥ ४-१-२० ॥ (पू)

"समिद्वती घृतवती च अनूच्येते" इति श्रुते संशयः—किं समिद्वत्यौ ऋचावागमयितव्ये आहोस्वित् एवंरूपे पदे इति ।

किं प्राप्तम् ? ऋग्वादः । कथं ? तल्लिङ्गत्वाच्छब्दस्य । स्त्रीलिङ्गनिर्देशात् । यथा "समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः" इति । एवमत्रापि समिद्घृतवत्यौ ऋचावन्तरेण अव्यवहिते निवेशयेत् इति प्राप्ते ब्रूमः ।

॥ पदवादो वा प्रकरणात् ॥ ४-१-२१ ॥ (सि)

"तन्त्वा समिद्भिरङ्गिरः घृतेन वर्धयामसि" इत्यस्य समिद्घृतवतोः प्रकरणनिविष्टयोरेव वादःस्यात् प्रकृतप्रत्ययाय मन्त्रपाठक्रमानुग्रहाय समिद्वती घृतवती इति नपुंसकलिङ्गवचनमेतत् । कथं पुनः द्विवचननिर्देशः ? नानापदस्थाभ्यामुभाभ्यामपि पदार्थस्य सहसंबन्धाभिधानम् यथा सृष्टीरुपदधाति इति । शाखान्तरीयमपि वचः समिद्वती घृतवती च पदे अनुच्येते इति न्यायतः प्राप्तार्थपदविधानार्थम् । सिद्धयोः पदयोः अर्थवादार्थं पुनर्वचनमिति ।

॥ १२ ॥ ऋचि प्रणवं दधातीत्यधिकःस्याद्यथा
विप्रतिषेधात् ॥ ४-१-२२ ॥ (पू)

ऋचि प्रणवं दधानीति किमधिकस्य प्रणवस्य ऋच्याधित्सा, आहोस्वित् ऋगक्षरविकारोपदेश इति । किं प्राप्तम् ? अधिकस्याधानमिति । कथं ? व्यपदेशात् । सर्वत्राधाराधेयविधौ स्वरूपत एवाधिकस्यार्थप्रतीतिः यथा कुण्डे बदराणि निधेहीति । किञ्च ऋगाम्नायस्याविप्रतिषेधादेवम् । ऋगाम्नायो यथाश्रुतः स्यात् ।

॥ लिङ्गाच्च ॥ ४-१-२३ ॥

योवै सामिधेन्याः प्रणवः तद्गायत्र्याः नवममक्षरं' इति अधिके सत्युपपद्यते । तस्मादधिकाक्षरोपदेश इति प्राप्ते ब्रूमः—

॥ सामिधेन्यक्षरं वा विकुर्यादेतत्तस्यां निहितो भवति ॥ ४-१-२४ ॥ (सि)

सामिधेन्यक्षरविकारोपदेशोऽयं स्यात् यथा दधनि शर्करां निधेहीति । यद्यक्षरं विकृत्य निविशेत ततः ऋचि प्रणवो निहितः स्यात् । इतरथा पृथगुच्चारणादसंबन्धः स्यात् । ततः ऋचि प्रणवं दधातीति वचनमनर्थकं स्यात् । कुण्डबदरयोरसत्यपि विकारे सामर्थ्यादाधाराधेयसंबन्धप्रतीतिरवकल्पते । न चैवं शब्दे, शब्दे शब्दस्यानवस्थानात् ।

यदुक्तं आम्नायविप्रतिषेध इति । तत्र ब्रूमः । वचनविप्रतिषेधात् वाचनिकोऽयमाम्नायविप्रतिषेध इति । किमिति वचनं न कुर्यात् । नहि वचनस्यातिभारोऽस्ति प्रापयतः इति । यत्पुनरुक्तं "यो वै सामिधेन्याः प्रणवः स वै गायत्र्याः नवममक्षरं" इति । अत्रोच्यते—

॥ पर्यायं वा यथा द्वे वस्त्रयुगे धारयतीति ॥ ४-१-२५ ॥

ऋगक्षरप्रणवयोः स्वाध्यायकाले प्रयोगकाले च पर्यायेण प्रयुज्यमानयोः पर्यायापेक्षिणी सङ्ख्या उपपत्स्यते । यथा पर्यायेणापि धार्यमाणे वस्त्रयुगे द्वे वस्त्रयुगे धारयतीति सङ्ख्यावादः स्यात् । एवमत्रापीति । तस्मादृगक्षरं विकुर्यादिति ।

॥ १३ ॥ अन्ते वा स्यादाम्नातायां हि श्रूयते ॥ ४-१-२६ ॥

'ऋचि प्रणवं दधाति' इत्यत्र संशयः—किमादावृचः प्रणवः प्रयोक्तव्यः किं वाऽनियमः आहोस्विदन्त एवेति । मुख्यत्वात् प्रथममेव प्रयोक्तव्य इति प्राप्ते ।

अभिधीयते—अन्ते वा स्यात् । मध्ये इत्यनियमः[मे]विशेषप्रमाणाभावात् । ऋचि प्रणवं दधातीत्येतावन्मात्रमेव श्रूयते नामुष्मिन् प्रदेश इति । ऋचोऽन्त एव प्रणवः स्यात् उच्चारणायामृचि प्रणवस्य विधानात् अन्तस्य च प्रत्यासत्तेः । आम्नातानां उच्चारणक्रमानुगृहीतमुख्यत्वानुग्रहात् । कृत्स्नस्यार्थस्य प्रणवाधारत्वात्, अन्तविषयत्वाच्च विकाराणां अन्त एव प्रणवः स्यादिति ।

॥ लिङ्गाच्च ॥ ४-१-२७ ॥

लिङ्गादप्यन्त एव प्रणव इति गम्यते । "ब्रह्मवादिनो वदन्ति य इध्ममुपक्षिपन्ति अविरुद्धः प्रथम आहुतीनां हूयते कथमस्य हविषो याज्यानूवाक्ये स्तः कथमिध्मस्य नेति अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीत्यनुवाक्या सामिधेन्यो याज्या वषट्करोति" [इति] वषट्कारेण प्रणवं स्तुवन्नन्ते प्रणवं दर्शयति । एष औत्सर्गिको न्यायः ।

॥ १४ ॥ ओङ्कारः प्रणवः स्यात् ॥ ४-१-२८ ॥

उपांशुयाजे ऋक्प्रणवयोर्धर्मभेदात् संहिताऽभावात् स्वधर्मानुग्रहाय (प्रा) संहिताधिकः प्रणवः स्यात् अधिकं वा विमृश्यते । क्वचिदधिकोऽप्याम्नानात् भवति । तद्यथा ऋचमुक्त्वा प्रणौति अपरामुक्त्वा प्रणवं, प्रणवशब्दं दधाति इति । श्रुतशब्दे च कार्यसंभवात् स्वरूपे च कार्यप्रतिपत्तेर्लाघवात् इरापदवत् प्रणवशब्दमृचि प्रतिदधाति इति प्राप्ते—

ब्रूमः । ओङ्कारः प्रणवः स्यात् । प्रणव इत्योङ्कारस्याभिधानम् । अतः पर्यायशब्देनोङ्कारस्य ऋचि निधानात् । यौगिकं चैतत् । स हि प्रवणीयतमो भवतीति । शब्दस्वरूपे कार्यस्यासंभवाच्च[न] प्रणवशब्दस्य प्रयोग इति ।

तथाहि—प्रणुहीत्युच्यमाने एष प्रतीयते । न हि प्रणवशब्द उच्चरिते स्वरूपप्रतीतिः ओङ्कारप्रतीतेः दृढत्वात् । प्रणुहीत्युक्तो देवदत्तः ओङ्कारमेव प्रतिपद्यते ओमिति । तदेनं बह्वृचाः समामनन्ति "ओमिति प्रणौति" इति । बह्वृचाः प्रणवमेवोङ्कारं समामनन्ति । अतो बह्वृचसमाम्नायादोङ्कार एव प्रणवः । 'प्रणव एनं पूर्णोऽभिप्रणवावधिकृत्य' (?) [इति] प्रत्यक्षयैव श्रुत्या निरूपितं ततोऽवगन्तव्यमिति ।

॥ इति सङ्कर्षकाण्डभाष्ये चतुर्थाध्यायस्य ॥

॥ प्रथमः पादः ॥

॥ हौत्रकाध्याये सामिधेनीपादः ॥

—: * :—

# अथ चतुर्थाध्याये द्वितीयः पादः

॥ १ ॥ त्रींस्तृचाननुब्रूयाद्राजन्यस्येति स्वच्छन्दो वर्जयित्वा वर्णच्छन्दांस्यनुब्रूयादित्यालेखनः[1] वर्णानामवरुध्य उच्यते छन्दोनुवचनात् ४ - २ - १ ॥ (पू)

—: * :—

सामिधेनीः प्रकृत्याम्नायते "त्रींस्तृचाननुब्रूयाद्राजन्यस्य" इति। तत्र सन्देहः—किं ब्राह्मणादीनां स्वच्छन्दो वर्जयित्वा वर्णछन्दांस्यनुवक्तव्यानि, किंवा प्राकृतानामेव त्रयाणां तृचानामुपादानमिति। किं प्राप्तम्? स्वच्छन्दो[वर्जयित्वा] वर्णच्छन्दांसि च यथाधिकारमनुब्रूयात् इत्यालेखन आचार्यो मन्यते।

गायत्रं जागतं आनुष्टुभं च राजन्यस्य, गायत्रमपास्य त्रैष्टुभादीनि ब्राह्मणस्य, गायत्रादीनि जागतं व्युदस्य वैश्यस्य च। एवं "त्रयो वा अन्ये राजन्यात् पुरुषाः ब्राह्मणो वैश्यः शूद्रः तानेवास्मा अनुकान् करोति" इत्यनुकरणादर्थवादवचनमुपपद्यते।

ननु वर्णानां स्वस्मिन् छन्दस्यप्रयुज्यमाने कथमनुकरणमिति। न[वर्ण] विषयमनुकरणं किन्तु पुरुषविषयम्। कथमवगम्यते—त्रयो वा अन्ये राजन्यात्पुरुषाः ब्राह्मणादयः तानेवास्मै क्रियया अनुकान् करोति।

॥ प्रकृतित इत्याश्मरथ्यः नादेये प्रकृतितः प्रतीयते ॥ ४ - २ - २ ॥ (सि)

आश्मरथ्यस्याचार्यस्य मतं प्रकृतित एव प्राप्तानां तृचानां परिसङ्ख्यया विधानमिति। कथं? विकारत्वात्। प्रत्यक्षेण शास्त्रस्यानादिष्टाधिकारः प्रकृतितः प्रत्येतव्यो भवति। त्रित्वे(त्रि)तृचा[ना]मर्थवादो हविस्सङ्ख्यादिः। यदुक्तं तृचानां वर्णानां च त्रित्वसङ्ख्यासामान्यात् अर्थवादोपपत्तिः, यथा हविष्षु 'अष्टावेतानि हवींषि भवन्ति अष्टाक्षरा गायत्री' इत्यष्टत्वसामान्यादर्थवादोपपत्तिरिति। [न]

---

1. त्याश्मरथ्यः भा. दी.

त एव ते त्रयस्तृचाः प्रथमोत्तमे त्रिरुक्ते सामवन्ति च इति। कथमवगम्यते ? विधानात्। 'प्रवो वाजा इत्यनिरुक्तां प्राजापत्यामन्वाह' इत्युपक्रम्य सह सामन्वता तृचेन सर्वा विदधाति। स एष पाठक्रमः सन्निधानापेक्षः स्यात्। एतावत्यो ऋचः सर्वा वेति। "पञ्चदशमनुब्रूयात् राजन्यस्य पञ्चदशो वै राजन्यस्य स्व एवैनं स्तोत्रे प्रतिष्ठापयति। त्रिष्टुभा परिदध्यात् इन्द्रियं वै त्रिष्टुप् इन्द्रियकामः खलु वै राजन्यो यजेत त्रिष्टुभैवास्मा इन्द्रियं प्रतिगृह्णाति यदि कामयेत ब्रह्मवर्चसमस्त्विति गायत्रिया परिदध्यात् ब्रह्मवर्चसं गायत्री ब्रह्मवर्चसमेव भवति" इति प्राप्तमपि सत् पाञ्चदश्यं राजन्यस्य पुनर्विधीयते बहुराजनिमित्तस्य परिमितस्य(?) विषये स्यादिति। त्रिष्टुप् च पुरुषनिमित्तपरिधानीया विधीयते।

सर्वानित्यन्य एष विकारः इति स्यादनैमित्तिकत्वात्। प्रकरणाच्च त्वं वरुण इति स्यात् ब्रह्मवर्चसकामस्य। तस्यां प्राकृतैव गायत्री प्रतिप्रसूयते। "त्रींस्तृचाननुब्रूयात्"इति च विधानं तैत्तिरीये राजन्यसंयुक्तं सर्ववर्णार्थमेव वाक्यमविशेषेण श्रुतत्वात्। राजन्यग्रहणं च प्रदर्शनार्थमिति। सप्तदशानुब्रूयाद्वैश्यस्य सप्तदशोवै वैश्यः स्व एवैनं[1] स्तोमे प्रतिष्ठापयति जगत्या परिदध्यात् जागताः पशवः पशुकामः खलु वै वैश्यो यजेत जगत्यैवास्मै पशून् परिगृह्णाति"इति वैश्यस्य पुरुषनिमित्तं साप्तदश्यं विधीयते। जगती च परिधानीया[1] तस्या गायत्र्या एकस्या जगत्याः आ[2]गमः। सैषा "ईडे" "अग्निं" इति गायत्रीक्रमात् प्रवोवाजीयाया उत्तरा।

('सामिध्यमानो'नुमृस्य राजसुजगतिजुहोति यया) समानसूक्तत्वात् वचनान्यथासिद्ध्यादिकल्पनं न्याय्यमप्येतद्वाक्यविषयप्रदर्शनार्थं प्रपञ्चितमिति(?)।

**॥ २ ॥ सर्वाणि च्छन्दांस्यनुब्रूयाद्बहुयाजिनः इत्यविशेषवादः शब्दसंयोगात् ॥ ४ - २ - ३ ॥ (पू)**

सामिधेनीषु समामनन्ति "सर्वाणि छन्दांस्यनुब्रूयाद्बहुयाजिनः" इति। अत्र सन्देहः—किं अविशेषेण सर्वाणि छन्दांस्यनूच्यानि, आहोस्वित् प्रकृता एव गायत्रीत्रिष्टुब्जगत्यो वक्तव्याः इति। सर्वाणि छन्दांसि [इति] अविशेषेण श्रुत्या सर्वेषां

---

1. read प्रणवेन    2. चागमः

छन्दसां परिग्रहः [न]सर्वशब्दस्य क्वचिद्विशेषं च स्थापनम् । तस्मात् सर्वाणि छन्दांस्यनूच्यानीति प्राप्ते ब्रूमः—

**॥ अपि वा गायत्री त्रिष्टुप् जगती च प्रकरणात् ॥ ४-२-४ ॥ (सि)**

अपि वेति पक्षव्यावृत्तिः । सूत्रानुक्रान्ताः प्रकृता एव गायत्रीत्रिष्टुब्जगत्यो वक्तव्याः । सर्वशब्दस्य प्रक्रान्तापेक्षत्वात् । यथा सर्वमौषधं विधत्तामिति । अपि च "गायत्री वा एषा यदुष्णिहा" इति उष्णिहि जगतीमाचिख्यासुः एतेषां सर्वत्वं दर्शयति । त्रैधातवीयायां श्रूयते—सर्वाणि छन्दांस्येतस्यामिष्ट्यामनूच्यानीत्युपक्रम्य "त्रिष्टुभो वा एतद्वीर्यं यत्ककुदुष्णिहा"इति च प्रकृतास्वेव गायत्रीत्रिष्टुब्जगतीषु सर्वेषां छन्दसां सम्पातं दर्शयति । आधिकारिक एवात्रापि सर्वशब्द इति ।

**॥ ३ ॥ अभीक्ष्णयाजी स्यात् तेन हि स्विष्टं भवति बहुशो यो यागमनुतिष्ठत इति ॥ ४-२-५ ॥ (पू)**

सामिधेनीं प्रकृत्य समामनन्ति "सर्वाणि छन्दांस्यनुब्रूयाद्बहुयाजिन" इति । तत्र सन्देहः—किमभीक्ष्णयाजी वा बहुदक्षिणो बहुयाजी, किं वा सोमयाजीति । किं प्राप्तं ? तत्र सूत्रेणैवोपक्रमः ।

अभीक्ष्णयाजी स्यात् तेन हि स्विष्टं भवति बहुशो यो यागमनुतिष्ठति तस्मिन् अभीक्ष्णयाजीशब्दः प्रवर्तते यथा लोके । यथाप्रसिद्धत्वात् । प्रसिद्धिश्च शब्दार्थप्रतिपत्तावभ्युपायः इति ।

**॥ बहुदक्षिणो वा तेनाख्यां लभेत यथा सहस्रयाजी पुरुष इति ॥ ४-२-६ ॥ (पू)**

सहस्रदक्षिणे वा पुंसि बहुशब्दो वर्तेत । येन हि पौण्डरीकादौ यागविशेषे बह्व्यो दक्षिणा नीताः सः, तां बहुयाजीत्याख्यां लभेत यथा लोके सहस्रयाजीति ।

नन्वेवं सति लक्षणा स्यात् । [दा]नेन यागो लक्ष्येत, सत्यं, इतरथाप्यभ्यासो लक्ष्येत । कः पुनरत्र विशेषो यागदानयोः स्यात् । त्यागात्मकत्वात् दा[ने]न यागो लक्ष्यते इति विशेषः ।

॥ सोमयाजी वा लिङ्गात् ॥ ४ - २ - ७ ॥ (सि)

सोमयाज्येव बहुयाजी स्यात्। कुतः? लिङ्गात् "यो ब्राह्मणो बहुयाजी स्यात् तस्य कुंभ्यानां[1] गृह्णीयात् स हि गृहीतवसतीवरीकः" इति सोमयाजिनमामनन्ति। ननु लिङ्गमेतत्। बहुशब्दश्च सोमयागविशेषे स्यात्। फलतः कर्मतश्च सोमयागस्यान्येभ्यो बहुत्वात्। अथवा सर्वविकारानुवृत्तित्वं अस्य सोमयागस्य बहुत्वम्। तेन सर्वविकारानुयायिना बृहता पूजितेन कर्मणा इष्टं येन स बहुयाजी। बहुशब्दश्च बृहतो वाचको दृष्टः यथा बहुरयं ग्राम इति। तदुक्तं **शास्त्रस्था वा तन्निमित्तत्वादिति।**

॥ सोमयाजीत्येकेषां सोऽन्ववेत्य विधिः ॥ ४-२-८ ॥

अवश्यं चैकेषां सोमयाजी बहुयाजीति विधीयते। तस्मात् सोमयाजी बहुयाजीति।

॥ ४ ॥ निविदां सन्ततवचनं यथा सामिधेनीनाम् ॥ ४-२-९ ॥ (पू)

किं सन्तानो निविदामपि आहोस्वित् सामिधेनीनामेवेति संशयः। सन्ततवचनस्य सामिधेनीषु प्रवृत्तत्वात्। तन्मध्यपतितत्वाच्च निविदां प्रवृत्त्या निविदोऽपि सन्ततमेवोच्येरन्। [ननु]निविदां सामिधेनीनां च अग्निसमिन्धनार्थत्वान्न परस्परतोऽङ्गाङ्गिभावः। **सत्यमेवैतत्।** तथापि प्रवृत्त्यैव धर्मनियम इति।

॥ अनाम्नानाद्वा नोपपद्यते प्रत्यक्षाम्नानात्सामिधेनीनाम् ॥ ४-२-१० ॥ (सि)

न हि प्रमाणमन्तरेण सामिधेनीषु चोदितस्सन्तानो निविदां भवितुमर्हति "ऋषेर्ऋषेर्वा एता निर्मिता यत्सामिधेन्य" इति प्रत्यक्षस्सामिधेनीषु सन्तानविधिः। निविदां तु सामिधेनीमध्यपतितानामपि[न] धर्मः स्यात्। अपि च प्रवृत्तिः क्रमनियमे प्रमाणं न शेषशेषिनियमे इति। न चैकस्मिन् प्रकरणे कार्यापत्त्या धर्मनियमः।

---

1. कुंभ्यां—भा.दी

तस्मादनियमेनोच्येरन् निविदः इति। वाचनिकस्तासां धर्मनियमः "तासां सप्तपदान्युक्त्वा प्रणौत्यथ चत्वारि" इति तासां निविदां सप्तपदानि अनवानमुक्त्वा प्रणौति। तच्चत्वारि पदानि समानि प्रयोक्तव्यानीत्येष निविदां धर्मनियम इति।

॥ ५ ॥ आसीनमूर्ध्वज्ञुं होतारं वृणीत इति
विज्ञायते ॥ ४-२-११ ॥ (पू)

'आसीनमूर्ध्वज्ञुं होतारं वृणीते' इति श्रूयमाणे संशयः। किं होतुरूर्ध्वजान्वासनं वाक्यभेदेन प्रकरणधर्मः आहोस्वित् होतृवरणशेष इति। किं प्राप्तम्? वाक्यभेदेन प्रकरणधर्म इति। कथं? संयोगतो विशेषात्। अथवा सर्वर्त्विग्वरणधर्मः एवंजातीयको भवेत्। वरणोद्देशेन विधानात्। यद्वृणीते तदेवम्। सत्यमेवमपि वाक्यभेदः। आसीनमूर्ध्वज्ञुं वृणीते—इत्येतावन्मात्रमेव विधीयते। होतारमिति च हवनसंयोगात् सर्वर्त्विजोऽनूद्यन्ते।

॥ वरणार्थं वाऽऽसनं तत्संयोगात् ॥ ४-२-१२ ॥ (सि)

वा शब्दात् पक्षो विपरिवर्तते। होतृवरणार्थमेवोर्ध्वजान्वासनम्। कथमवगम्यते? तत्संयोगात् होतृवरणवाक्येनैकवाक्यत्वात्। ननूक्तं वाक्यभेद इति। न। एकवाक्यतायां संभवन्त्यां वाक्यभेदस्य अन्याय्यत्वात्। सर्वविशेषणविशिष्टं चैतत् होतृवरणं विधीयते। अन्यतरस्यापि पदस्य लक्षणावृत्तत्वेन अनुवादे प्रमाणाभावात्। आसीनमूर्ध्वज्ञुं होतारमिति समानविभक्तिभेदात् सामानाधिकरण्यमेकवाक्यत्वं चेति।

॥ ६ ॥ अध्वर्युप्रवरमेके समामनन्ति ॥ ४-२-१३ ॥ (पू)

किमध्वर्युप्रवरः[पूर्वं] प्रयोक्तव्यः आहोस्वित् होतृप्रवर इति सन्देहः। किं प्राप्तं? पाठक्रमविप्रतिपत्तेरनियमेन अन्यतरस्य पूर्वं प्रयोग इति प्राप्ते ब्रूमः—

॥ अध्वर्युप्रवरः पूर्वः स्यात् ब्रह्मण्वदाचवक्षत् इति आवाहनं
देवतासु नोपपद्यते ॥ ४-२-१४ ॥ (पू)

अध्वर्युप्रवर एव पूर्वःस्यात ब्राह्मणपाठक्रमस्य वक्षदिति लिङ्गविशेषेण विशेषितत्वात्। लिङ्गसहायो ब्राह्मणपाठो बलीयान् सोऽत्र मन्त्रपाठं बाधते। अन्यथा

आचवक्षदिति लिङ्गं विहन्येत । न च वोढासु देवतासु ब्रह्मण्वदावहनकृत्यम् । न तु कृते करणीयमवशिष्यते ।

॥ यथासमाम्नानं वा तद्व्याख्यातम् ॥ ४ - २ - १५ ॥ (सि)

मन्त्रपाठस्तु होतृप्रवरस्य । अध्वर्युप्रवरपाठात् पूर्वं होतृप्रवर एव स्यात् तद्व्याख्यातम् — मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् इति (पू.मी. 5-1-9) यथा एतद्ब्रह्मण्वदाचवक्षदिति [ऊढा] सु देवतासु नोपपद्यत इति विरुद्धं आम्नानलक्षणत्वादावाहनस्य । यत्पुनः आचवक्षदिति लिङ्गमिति । आवाहननिगमेन प्रेषितो प्यग्निः प्रे[षण]प्रतिपालने द्वितीयमाचवक्षदिति । आम्नानलक्षणत्वात् । आम्नानलक्षणं हि आह्वानं प्रत्यक्षं देवतासंस्कारार्थम् । तद्यथाम्नानमेव वर्तिष्यते । न हि दृष्टविरोधोऽस्ति । तस्माद्धोतृवरणं नित्यं पूर्वं कर्तव्यमिति ।

॥ ७ ॥ आवह देवान् यजमानायेति सर्वदेवतानामविशेषात् ॥
॥ ४ - २ - १६ ॥ (पू)

आवह देवान् यजमानाय इति श्रूयमाणे संशयः — किं सर्वासां देवतानामेतदावाहनं, उत प्रयाजदेवतानां, उत आदिष्टानामेवेति । किं प्राप्तम् ? सर्वासामावाहनमिति । कथं ? अविशेषश्रुतेः । आवह देवान् इत्यविशेषश्रुतिः न विशेषमन्तरेण क्वचिद्विशेषेऽवस्थास्यति । तस्मात् प्राकरणिकानां सर्वासां देवतानामेतदावाहनमिति ।

॥ प्रयाजानामेव स्थानानि ॥ ४ - २ - १७ ॥ (पू)

प्रयाजानामेवैतदावाहनं स्यात् । किं मानं? तस्मिन् क्रमे तदध्वर्योः प्रवरादनन्तरमिष्यते । प्रयाजदेवतार्थमेतदावाहनमिति यावत् ।

॥ प्रत्यक्षेण श्रावयति अग्निमग्न आवह सोममावहेति तद्यथा
ब्राह्मणानुक्त्वा मुञ्च मुञ्चेति ॥ ४–२–१८ ॥ (सि)

या या देवताः प्रत्यक्षया आवाहनश्रुत्या विशेषतो निर्दिश्यन्ते तासामेवैतत्समासवचनं देवानावहेति । प्रकृतप्रत्ययात् यथा लोके ब्राह्मणान् भोक्तुमानय तान् मुञ्च मुञ्चेति ।

यद्यपि ब्राह्मणशब्दः सामान्यवचनः तथापि निर्दिष्टेष्वेव देवदत्तादिषु वर्तते। वाक्यैकवाक्यत्वात्। अग्निमग्न आवहेति तावदाग्नेयाज्यभागाग्निमावाहयेति। सोममावहेति सौम्याज्यभागीयसोममावाहयेति। अग्निमावहेति तदाग्नेयपुरोडाशीयाग्निमावाहयेति। योऽयमुभयत्राप्युज्झितो भवति (अथ) देवानाज्यपानावहेति तत् प्रयाजानूयाजानाम्। अग्निं होत्रायावहेति तदग्निं स्विष्टकृतमिति। प्रयोजनं पूर्वपक्षे या काचिद्देवता प्रकरणीत्यन्तरिता पुनरिज्यमाना आवाहनप्रयुक्ता। सिद्धान्ते वाक्योपनीता एव प्रयोजयेयुरिति। दृष्टावसराणां पुनरावाहनमेव। प्रायश्चित्तं तु संस्कारपरिलोपात्कर्तव्यमेवेति।

॥ ८ ॥ आहवनीय आवोढा सामिधेनीभिरिष्ट्वा निविद्भिरुपस्तुत्य अग्निमग्न आवहेति श्रावयति तस्मादाहवनीयस्यानन्तर्यात् ॥ ४ - २ - १९ ॥

अग्निमग्न आवहेत्यत्र सन्देहः। किं वा देवतायामेतदावाहनं विधीयते किं वा द्रव्यस्येति। किं प्राप्तम्?

देवताया इति। कथं? तस्या यागसंयोगात् यागार्थं हि देवतावाहनं देवतामुद्दिश्य द्रव्यत्यागो यागः। न च आहवनीयस्य[1] देवतात्वमस्ति। गुणत्वात्। अपि च देवताया एवावोढृत्वस्य 'स्वं महिमानमावह'इति व्यपदेशात् आवाहकत्वमावाह्यत्वं च देवताया एवेति प्राप्ते ब्रूमः।

आहवनीय आवोढा। 'सामिधेनीभिरिष्ट्वा निविद्भिरुपस्तुत्य अग्निमग्न आवह'इति श्रवणात् आहवनीयस्यानन्तर्यं प्रतीयते। आवहनमप्यर्थात् तस्मिन्नेवोपचर्यते। यथा 'ओषधे त्रायस्वैनम्' 'स्वधिते मैनं' इति। आवोढृविभक्तिश्च तस्मिन्नुपपद्यते 'स्वं महिमानवह' इत्यधिष्ठानवायुदेवतया [2]युज्यते। तस्मात् प्रकृतत्वात् द्रव्यमपि सन् आहवनीय एवावोढा भवेत्। एवं च द्रव्यस्याग्नेः आवोढृत्वं योऽन्यैराचार्यैः आहवनीयमेदेप्येतदभिधानमाम्नातं आधानकाले एकस्यैवाहितत्वात्। स विभक्तोऽपि न द्विवदुपचर्यते यथा एकः। तस्मात् द्रव्यस्यैवावोढृत्वं उपपद्यते।

---

1. A यागस्य　　2. वक्ष्यते

किंमधिकारचिन्तायाः प्रयोजनम्—अवभृथे 'अप्स्ववभृथेन चरन्ति' इत्यत्र देवतेति पूर्वपक्षे 'अग्निमग्न आवह' इत्यविकारेण मन्त्रः प्रयोक्तव्यः।

सिद्धान्ते च अपामभिधानमूहितव्यम्।

वृत्तिकारोप्येतमर्थं वर्णयाञ्चकार "विकारा देवतापनय"इत्यत्र।

॥ ९ ॥ अग्निं होत्रायावहेति तस्मिन्नेवैतदाहुतयो हूयन्ते त[य]दावाहयति तदग्निं स्विष्टकृतमित्याहवनीयः स्यादाहुतिसंयोगात् ॥ ४-२-२० ॥ (पू)

अग्निं होत्रायावहेत्यत्र सन्देहः—कस्याग्नेरेतदावाहनम्। अत एव स्विष्टकृत् किमाहवनीयः आहोस्वित् अग्निः स्विष्टकृदिति। किं प्राप्तम्? आहवनीय इति। कथं? आहुतिसंयोगात्। "यस्मिन्नाहुतयो हूयन्ते तमग्निं होत्राय" [इति] स्विष्टकरणादाहवनीयं क्रतुस्विष्टकृतं आवहेत्यभिसंबन्धात्। 'यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतः,' इत्याहवनीयस्य आहुतिसंयोगोपेतत्वात्। अग्निं होत्रायावहेति लिङ्गात् आहवनीयस्यैव स्विष्टकृद्वादो न्याय्यः इति प्राप्ते ब्रूमः—

॥ अन्यो वा व्यपदेशात् ॥ ४-२-२१ ॥ (सि)

आहवनीय उच्यते 'तमग्निं होत्रायावहे'ति। यद्यन्य आहवनीयो भवेत् अयं व्यपदेशोऽविप्रतिषेधात्। आत्मनि आत्मन आवहन विप्रतिषिद्धं व्याहतं भवेदिति। अथ यत्पुनरुक्तं लिङ्गादिति। व्यपदेशसामर्थ्यमपि लिङ्गमेव। तस्मादाहनीयादन्यः अग्निः स्विष्टकृदिति।

॥१०॥ स गार्हपत्यः तस्मिन्नप्याहुतयो हूयन्ते ॥४-२-२२॥ (सि)

पूर्वाधिकरणे आहवनीयादन्यः स्विष्टकृदिति समधिगतम्। स त्वन्यो यःकश्चित आहोस्वित् गार्हपत्य इति संशयः; यःकश्चिदविशेषादिति प्राप्ते ब्रूमः—

स गार्हपत्य एव स्यात् सन्निधानात्। आहुतिसंयोगाच्च। आहुतिसंयोगो हि गार्हपत्यस्य भवति। अग्निं होत्रायावहेति होमसंयोगात गार्हपत्यः स्विष्टकृदिति।

॥ लिङ्गाच्च ॥ ४-२-२३ ॥

लिङ्गमप्यस्य द्योतकं भवति 'गार्हपत्यःस्विष्टकृद्भवति'इति । ननु वचनमेतत् । उच्यते । वर्तमानापदेशत्वात् प्राप्तार्थत्वाच्चानुवाद एवेति ।

॥ ११ ॥ स होमायोद्येताहुतिसंयोगात् ॥ ४ - २ - २४ ॥ (पू)

स गार्हपत्यः किं होमायोद्येत आहोस्वित् होतृकर्मणे इति सन्देहः । किं प्राप्तम् ? होमायेति । कथं ? आहुतिसंयोगात् । यास्तस्मिन्नाहुतयो हूयन्ते तदर्थमोद्येत आभिराहुतीभिर्गार्हपत्यस्य संयोगस्समाम्नायते । 'तस्मिन्नेवैतदग्नावाहुतयो हूयन्ते' इति ।

॥ होतृकर्मणे वा तल्लिङ्गत्वाच्छब्दस्य ॥ ४ - २ - २५ ॥ (सि)

होतृकर्मार्थमेवैतदावाहनं, तल्लिङ्गत्वाच्छब्दस्य । अग्निं होत्रायेति तादर्थ्यश्रुतेः ।

ननु अतादर्थ्येऽपि चतुर्थी दृष्टा यथा मशकेभ्यो धूम इति । नैतदेवम् । तादर्थ्यं तु चतुर्थी न व्यभिचरति । उपकारापकारयोर्व्यभिचारः । अथवा तल्लिङ्गत्वाच्छब्दस्येति । होतृकर्मार्थत्वं प्रत्यक्षेण शब्देन अग्निहोत्रादिलिङ्गतः (आद्यतालक्षणं वा)। यस्मिन्नेवैतदग्नावाहुतयो ह्रुप्यन्ते, इति होत्रमिति । न च देवो न वहति । आवहेति प्रापणमभिधीयते आम्नायात्[1] । 'होत्रायावह' 'अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् ते देवभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेत्' "विश्वेदेवाः शान्तन[2]" "निषद्य प्रमे ब्रूत भागधेयम् । यथावो येन पथा हव्यं आवहानि" "त्वं होत्राणामसि" 'हव्यावह यविष्ठया ते अद्य' इति । होतृकर्महव्यवहनयोर्हि संबद्धयोः स्विष्टकृदभिधानं समाम्नायो दर्शयति । तदेतत् स्विष्टकृदभिधानं (वदान) स्विष्टकृद्यागशेषः । स्विष्टकृद्यागो हि होतृकर्मशेष इति । द्वयोरप्यधिकरणयोः प्रयोजनम् — यद्याहवनीयः स्विष्टकृत्तदा देवतावोढुः[3] हव्यवोढुश्चानन्यत्वात् आवहनहव्यवहनाभ्यां स्विष्टकृद्यागस्य संबन्धात् असति स्विष्टकृति सर्वहुते देवतावहनमपि न स्यात् । गार्हपत्यस्य तु स्विष्टकृत्त्वे भवेदेव देवतावाहनम् । असत्यपि स्विष्टकृति

---

1. A adds होत्रादह वरण विश्ययायमथाभववत्सि सर्वभत्स्यमानो देवभागदेवेभ्यो हविष्रस्समानग्निं होत्रा तथापक्रमते ।
2. मायत्रे होता वृतोमनपवेयन्निवद्य etc.
3. Mss. read तदा वोढुः

देवतावाहनस्य नित्यत्वात् अन्य इत्यर्थः। स्विष्टकृदावाहनं शंयुवाकान्तास्विष्टिषु आहुतिलोपे लुप्येत। यदा पुनर्होमकर्मार्थं स्विष्टकृद्यागप्रयुक्तत्वाद्भवेत्। अभावे च न स्यात्—यथा सर्वहुतम् वैश्वानरीये। न च गार्हपत्यस्य च दिव्यात्मकस्य देवतात्मकत्वं, वनस्पतीज्यायां यूपस्य देवतात्वप्रतिषेधात्। एवं सति आवहेति व्यपदेशस्यानुपपत्तेः आहवनीयस्यापि स्विष्टकृत्त्वं प्रतिषिद्धम्। अग्निं होत्रायावहेति व्यपदेशस्यापि प्रतिषेधात्।

देवतामहिम्नोस्त्वनन्यत्वात् 'स्वं महिमानमावह'इति व्यपदेशस्य अनुपपत्तेः विप्रतिषेधस्य तदवस्थत्वात् नाहवनीयस्य स्विष्टकृत्त्वम्। "गार्हपत्यः स्विष्टकृद्भवति" इति वचनात् तदधिष्ठात्र्या देवतायाः स्विष्टकृत्त्वम्। द्रव्यस्य स्विष्टकृत्वं[यदि तदा] मार्ष्टि गार्हपत्यौ इति श्रुतेरूहः प्राप्नोति यथा अन्यत्र द्रव्यभेदे तावुभौ॥

॥ [1]होतारो यष्टारो जातवेदाश्च होतृयष्टृजातवेदशब्द उभयस्याभिधाता यष्टुरग्नेः स्वरूपस्य स्वस्य च महिम्नः॥

॥ ४-२-२६ ॥

"अग्ने यदद्य विशो अध्वरस्य होतः" इति यथा "सुयजा च यज जातवेदः" "पावकशोचे वेष्ट्वं हिं यज्वा" इति सयजतिनाऽभिधानम्। यथा जातवेदशब्देनाप्युभयोः अभिधानम्। [2]स्विष्टकृति सुयजा च यज जातवेदः कृणोतु सो अध्वरा जातवेदा जुषतां हविः" इति च। उपपद्यते चोभयोः अभिधानम्। स्तुत्यत्वाविशेषात् कार्याविशेषात्। कथमवगम्यते। स्वरूपस्य स्वस्य च महिम्नः स्विष्टकृद्यागः संबद्धः स्यात्। [अ]विशेषात्। एवमेव[एतमेव]न्यायं हृदि कृत्वा आचार्यैरप्युक्तः "उभौ कव्यवाहनौ प्रत्याम्नातौ" 'अग्निं होत्रायावह स्वं महिमानमावह' इति एतस्य स्थाने "अग्निं कव्यवाहनमावह" इति प्रत्याम्नायः। (प्रियां)[3] [वायुं]स्वस्य महिम्नः शब्देन[4] कौषीतकिनः समामनन्ति। गार्हपत्याहवनीययोः नानावदेकवच्चाभिधानम्।

---

1. अत्र कतिपयाधिकरणेषु पूर्वपक्षो नोपलभ्यते। सिद्धान्तः परं वर्ण्यते। भाट्टदीपिकायां तु सयुक्तिकं पूर्वपक्षमुक्त्वा सिद्धान्तो वर्णितः।
2. S ऐकायिष्टिभिः।
3. प्रियां—मा.
4. मा, शब्दनं विकल्पं।

अथवा प्रकृतिविकृत्योः गार्हपत्याहवनीययोरभेदोपचारादेव एकवदभिधानम् होतृस्वरूपवदेवेति । अभिधानसामान्ये व्यतिरेकस्य तदा केन शब्देनाभिधानमित्यर्थः । प्रकरणादभिधानं भवति । तदभिधीयते ।

**॥ १२ ॥ अतूर्तो होता आचाग्ने देवान् वह सुयजा च यज जातवेद इति आहवनीयस्य वाक्यसंयोगात् ॥ ४–२–२७ ॥ (सि)**

'अतूर्तो होता' इत्यादिषु वाक्येषु "आचाग्ने देवान् वह सुयजा च यज जातवेदः" इत्यादिभिः शब्दैः आहवनीयो गुणसंयोगादभिधीयते । यजमानगुणसंयोगादाहवनीयस्य । आहवनीयद्वारेण च द्रव्यस्य देवतासमवायात् ।

**॥ १३ ॥ [1]स्वाहाग्निं होत्राज्जुषाण इत्युत्तमप्रयाजे (तं) गार्हपत्यस्य स्थानादिज्यासंयोगाच्च ॥ ४–२–२८ ॥ (सि)**

स्वाहाग्निमिति गार्हपत्यस्य स्विष्टकृत एतदभिधानम् । स्वाहादेवानित्यस्य क्रमे पाठात् । इज्यासंयोगोऽपि, उत्तमस्य प्रयाजस्य [2]यक्ष्यमाणदेवतार्थत्वात् । 'यदनिष्टाभ्यो देवताभ्यः स्वाहाकरोति' इति प्रयाजादिषु अग्निरेव एकवत् नानावच्चाऽभिधीयते । स्वैश्वर्याद्यतिशयचिख्यापयिषया तदात्मकवचनसंवादः । तं प्रयाजाग्निं गार्हपत्यमिच्छन्त्येके । परे तु आहवनीयम्, अन्योन्यं वा परे (?) । [अग्निरुपक्रान्तो वा] ऋतुषु उपपन्नस्तसात् ऋतुदेवत्याः प्रयाजा इत्यत इति सर्वत्र न्यायतः । वचनानुसारतस्तु तत्त्वमवगन्तव्यमिति (?)

**॥ १४ ॥ अग्निं होत्रेणेदं हविरजुषतेति सूक्तवाके तदेतेन व्याख्यातम् ॥ ४–२–२९ ॥**

इदं सूक्तमविशेषात् सूक्तवाके, अग्निरिदं हविरजुषतेति सूक्तवाके श्रूयमाणं, पूर्वेणाधिकरणेन इदं व्याख्यातम् । पूर्वोत्तरयोः पक्षयोः समानत्वात् । अग्ने त्वं सूक्तवागसि इति ससूक्तवचनसंबन्धात् होतृत्वमध्यवसीयते । स हि गार्हपत्यः ।

---

1. अत्र भा. दीपिकायां-आचाग्ने इत्यधिकरणमधिकम्
2. Ś इज्यमान ।

**॥ १५ ॥ अयाडग्निरग्नेः प्रियाधामानीत्याहवनीयस्य यक्षदग्नेर्होतुः प्रिया धामानीत्येतेन व्यपदिश्यते ॥ ४ - २ - ३० ॥ (पू)**

अयाडग्निरग्नेरित्याहवनीयस्याभिधानं शक्यते । कथमिति । यक्षदग्नेर्होतुरिति गार्हपत्यव्यपदेशात् ।

**॥ 'सुयजा यज' इति 'कृणोतु सो अध्वरा जातवेदाः जुषतां हविः' इति गार्हपत्यस्य हविस्संयोगात् ॥ ४ - २ - ३१ ॥**

जातवेदा इत्यत्र गार्हपत्याभिधानम् हविर्जोषणसंयोगात् । स हि 'सो अध्वरा इति इज्यते' ।

**॥ १६ ॥ अग्निर्देवो दैव्यो होता देवान् यक्षत् इत्याहवनीयस्य लिङ्गात् ॥ ४ - २ - ३२ ॥ (सि)**

ब्रह्मण्वदाचवक्षत् इत्याहवनीयः आवोढा यष्टा चाहवनीयः एतस्यैवाभिधानमिति ।

**॥ १७ ॥ [1]अग्निर्होता वेत्त्वग्निः होत्रं वेत्तु प्रावित्रं इति स्रुगादापने ॥ ४ - २ - ३३ ॥ (सि)**

तथेति पूर्वेण समानो निर्देशः । अयमाहवनीयोपदेश एव । अग्निर्होतेति अग्निं होतारमुपदिश्य कर्मतो होतारं व्यावर्तते प्रवरात्, "अग्निर्होतेत्याह । अग्निर्वै देवानां होता । तमवृणीत" इति । यो होतारमवृणीथा इति आहवनीयं पुनर्वृणीते अग्निर्होतेति । स्रुगादापनादिना आहवनीयो वृणीयत इत्युक्तम् । तस्य तथाभूतस्येदमनुवादः स्यात् । प्रकृतप्रत्ययात् । तस्मादेतदपि आहवनीयाभिधानमेव ।

तस्यैतस्य प्रयोजनमभिधीयते—असति स्विष्टकृति आहवनीयाभिधानानां स्वस्य महिम्नो वृत्तिः अभिधेयविकारे च उभयत्र शब्दविकारः यथार्थमिति । दुर्वि-

---

1. अत्र भाष्यानुसारेण तथेति भाव्यम् ।

वेकत्वाचातिचित्राभिधानमिति । द्रव्यशब्दोऽपि क्वचिद्देवतायां वर्तते । देवशब्दोऽपि क्वचिद्द्रव्यमनुगतः । अभिधानशक्तिर्यथाभिधेयमेव[1] व्यवतिष्ठते । पूर्वपक्षाश्च सुदूरमपि सिद्धान्तसारूप्यादनुवर्तमानाः प्रमाणवृत्ताहितबुद्धिभिः यत्नतोऽनुसरणीयाः ।

॥ इति सङ्कर्षणकाण्डभाष्ये चतुर्थाध्यायस्य द्वितीयःपादः ॥

॥ हौत्राध्याये निगदपादः ॥

—: * :—

1. S. यथाविधेयमेव.

## ॥ अथ चतुर्थाध्यायस्य तृतीयः पादः ॥

### ॥ १ ॥ इमे वयं स्मो वयमित्येके समामनन्ति ॥ ४ - ३ - १ ॥

" इमे वयं इत्येके अग्निर्वा एतर्ह्यादाति यद्यजते तस्य ह्यग्नेरास्यमनुपद्यते । कथं होताग्नेः ग्रहीतोच्यते । इमे वयं प्रावित्रमिति यदाह एतदग्नेः होतानुपद्यते स यो हैनमूचिवांसं ब्रूयात् पुरा द्वादश्याग्नेरास्यमित्यपि यद्यन्नहीनो भवति य एवैनं वेत्तु प्रावित्रमित्येव ब्रूयात् " इति ।

इमे वयं स्मो वयमित्येतदाम्नाय द्वयमप्यपोद्य वेत्तु प्रावित्रमिति नमयति । तत्र यदचोदितं तत् विकृतावेव निविशते । तदिरापदगिरापदाभ्यां गतार्थमपि विषय-प्रत्ययार्थतयाऽनुक्रान्तम् । अपोदितयोराम्नानयोः विकृतौ विकल्पार्थत्वमिति ।

" नमस्यानादित एके समामनन्ति मध्यत एके अन्ते एके स न प्रथमान्वा मध्यमान्वा नमस्याननुब्रूयात् युवाह प्रमायुकः स्यात् उत्तमां नमस्यामाह" इति त्रिविध-माम्नाय द्वयमपोह्य नमस्यानित्येतस्य अन्ततः प्रयोगं नियमयति । तस्मान्नियतस्य प्रकृत्यर्थत्वं, इतरयोः विकृत्यर्थत्वमिति । एतदपि अपन्यायं होतृचिन्तासाकल्यप्रति-पादनार्थमनुक्रान्तमिति ।

### ॥ २ ॥ वषडित्येके वौषडित्येके वाक्षाडित्येके वौक्षाडित्येके वषडिति ब्राह्मणस्य वषट्कुर्यात् वौषडिति राजन्यस्य वौक्षाडिति वैश्यस्य षडिति शूद्रस्य विज्ञायते ॥ ४ - ३ - २ ॥

वर्णसंयोगविशेषेण श्रुतानां इतरेषां चाम्नायानां तुल्यवद्विकल्पः आहोस्विद्व्यवस्थेति सन्दिह्यते । किं प्राप्तम् ? अनारभ्य हवि[1]र्दानार्थतया तुल्यवदाम्नातानां विकल्पोऽपि तुल्यवदेव स्यादिति प्राप्ते ब्रूमः ।

अविशेषेणाम्नातानां वषट्काराणां वषडिति ब्राह्मणस्य वषट्कुर्यादित्येव-मादीनि ब्राह्मणादिसंयुक्तानि व्यवस्थार्थानि स्युः । ब्राह्मणादिप्रातिपदिकानां षष्ठ्याश्च

1. Mss. read पृष्ठ

सम्बन्धश्रुतेरेवमर्थत्वात् । वौषडिति वषडिति वषट्कुर्यादित्यविशेषविधेरिति[1] । तेषां वाऽवशिष्टानां तुल्यवदेव विकल्पं [2]केचिन्मन्यन्ते । तच्चायुक्तम् । नित्यस्याविशेषविधेर्नैमित्तिकानां च ब्राह्मणादिसंयुक्तानां विषयनानात्वात् न तुल्यवद्विकल्पः । नैमित्तिकेन तस्य बाध्यमानत्वात् ।

[3]नन्वविशेषविधेः ब्राह्मणादिव्यतिरेकेणान्यत्र मानत्वासंभवादनर्थकत्वम् । ब्राह्मणादिसंयुक्तानां वषट्कारेण [4]नियतत्वात् इतरेषामानर्थक्यमेवेति ।

**अत्रोच्यते** । वषडिति (वैश्यस्य वैश्यस्तोमे इति) ब्राह्मणस्य वषट्कारात् इति प्रकृतिप्रत्ययश्रुत्योरर्थवत्त्वं, बृहस्पतिसवादौ ब्राह्मणकर्तृके क्रतौ नियोगतो विधानात् । तथा वौषडिति राजन्यस्य राजसूयादौ, तथा वौक्षाडिति वैश्यस्य वैश्यस्तोमे इति । नित्यस्यावशिष्टानां च वषट्काराणामन्यत्र तुल्यवदेव विकल्प इति ।

**॥ ३ ॥ सन्ततमृचा वषट्करोतीति विज्ञायते ॥ ४ - ३ - ३ ॥**

याज्यावषट्कारयोरनेन सन्तानमात्रं विधीयते । किमयं याज्यावषट्कारयोरनवानोपदेशः आहोस्वित् तुल्यस्वरत्वोपदेश इति । किं प्राप्तम् ? अर्थादनवानोपदेश इति प्राप्ते ब्रूमः ।

तुल्यस्वरत्वोपदेशोऽयं वचनात् । सन्ततमनुवाकमयं देवदत्तोऽधीते इत्युक्ते समानस्वरता गम्यते । प्राणसन्तानस्तु सामर्थ्यादेव व्यवसीयते । तथा उपांशुयाजे समानस्वरत्वाभावेपि "प्राणसन्ततौ स्यातां याज्यावषट्कारौ" इति याज्यावषट्कारयोरुच्चारणं प्रत्येकं वाच्यम् ।

तत्र विशेषविभागः—

**॥ समानवदृचा वषट्करोतीति विज्ञायते ॥ ४ - ३ - ४ ॥**

अनेन वचनेन समानस्वरत्वं याज्यावषट्कारयोर्विधीयते । तथा च व्याकरणस्मृतिः 'एकश्रुति दूरात्संबुद्धौ' इति प्रकृत्य 'यज्ञकर्मण्यजपन्यूङ्खसामसु' इति

---

1 वौषडित्येके इत्यादयः अविशेषविधयः

2 वृत्तिकारा इति भा. दी

3 न च विशेषविधेर्ब्राह्मणादिव्यतिरेकेण अन्यस्य बाध्यमानत्वात्
—A पुस्तके अधिक दृश्यते

4 A reads अनियतत्वात्

एकश्रुतित्वमेव नियमयति ।' "बलीय[सा वाचा] वषट्करोति" इत्युच्चैष्ट्वे विधिरेष वषट्कारस्य । साऽनन्तरे स्वरे स्यात् । संस्मरणानुग्रहाय तयोर्विकल्पः समान-स्वरत्वात् । तदुक्तं – उच्चैस्तरां वा वषट्कार इति ।

**॥ याज्याया अधि वषट्करोति इति विज्ञायते ॥ ४ - ३ - ५ ॥**

इदमपि वचो वषट्कारस्य याज्यायाश्च क्रमार्थम् । याज्याया उपरि वषट्कारः स्यात् ।

ननु प्रदानार्थतयैव उपरिष्टादस्य प्रयोगः । नेत्युच्यते । प्रदीयतेऽनयेति समाख्यानात् याज्याया अपि प्रदानार्थतया वषट्कारेण विकल्पः स्यात् यद्येतद्वचनं नाभविष्यत् । तस्मात् याज्याया ऊर्ध्वं वषट्कारस्य प्रयोगो याज्यया वषट्कारस्य समुच्चयः इति ।

**॥ ४ ॥ अवगूर्य वषट्करोतीत्युच्चैर्वादः शब्दसंयोगात्**
**॥ ४ - ३ - ६ ॥**

वषट्कारमेव प्रकृत्य 'अवगूर्य वषट्करोति[1]' इति समामनन्ति । तत्र संशयः —किं येयजामहादनन्तरं वषट्कारः प्रयोक्तव्यः आहोस्वित् उच्चैरध्यवसाय प्रयोगः इति ।

किं प्राप्तं ? येयजामहादनन्तरं वषट्कारस्य प्रयोग इति । कथं ? अवगूर्य वषट्करोति इति आनन्तर्यप्रतीतिरुच्यते नोपसर्गभेदेऽप्यर्थभेद[2] इति । ननूपसर्गभेदे धात्वर्थभेदो यथा तिष्ठति प्रतिष्ठते इत्यादौ । सत्यं । न तु प्रकृतस्य धात्वर्थस्योप-संभेदात् भेदः । तस्मात् येयजामहादनन्तरं वषट्कारः स्यात् ।

[एवं प्राप्ते ब्रूमः]— [3]अव्यवहितानन्तर्यप्रतीतिप्रमाणाभावात् पूर्वत्वार्थकतायां च क्त्वाप्रत्ययस्मरणात् आगूरणानन्तरं च याज्याविधिविरोधात् अवगूर्य वषट्करोति इति तत्स्तुत्यर्थोऽनुवादः अवगूर्य वषट्करोति इत्युच्चैर्वादः उच्चैर्वषट्करोतीत्यर्थः

---

1 A. R. वषट्कारोर्ण च
2 A. R. & T. अर्थभेदात् । 3 S. अहन्यहन्यान ।

कथमवगम्यते । शब्दसंयोगात् । न च शब्दः साक्षादवगुरितुं शक्यते । [अ] मूर्तत्वाच्च । उच्चैरुच्चारणाध्यवसायमन्तरेणान्यथैवागुरणं स्यात् । तस्मादर्थ एष स्यादिति ।

यदुक्तं येयजामह इत्यादिरिति तत्रापि यागाध्यवसायनिमित्त एव अवगूर्य व्यपदेशः । न च सत्यां गतौ निष्प्रयोजनानुवादतया आनर्थक्यं वचसो युक्तम् । तस्मादुच्चैर्वाद एव वषट्कारस्य ।

**॥ ५ ॥ यं कामयेत प्रमायुकः स्यादिति नीचैस्तरां तस्य याज्यया वषट्कुर्यात् उच्चैः क्रौञ्चमिव वषट्कुर्यात् स्वर्गकामस्येति वषट्कारो विज्ञायते ॥ ४ - ३ - ७ ॥**

सर्वे एते काम्या विधयः किं वा एक एषां नित्यो विधिः इतरेऽर्थवादाः इति सन्देहः । किं प्राप्तम् ? विधय इति । कथं ? एवं कुर्यादिति फलवाक्यस्य समाप्तत्वादपूर्वमर्थं विदधतो वाक्यस्यार्थवत्त्वात् । नैतदेवम् , कामस्य याजमानत्वात् । यं कामयेत प्रमायुकः स्यात् पापीयान् स्यादिति । न हि कश्चिदात्मनः प्रमायुकत्वं पापीयस्त्वं कामयते । न । कामयत एव सर्वस्वारे (च) मरणमेव फलम् । पापीयस्त्वं कैश्चित् काम्यत एव । अन्यथा शास्त्रार्थं विजानानानां पापे कर्मणि मृगयादौ प्रवृत्तिरेव न स्यात् । तस्मात् सर्वे विधयः इति प्राप्ते ब्रूमः—

एक एवायमुच्चैष्ट्वविधिः इतरेषां " यं कामयेत वसीयान् स्यादिति उच्चैस्तरां तस्य याज्यया वषट्कुर्यात् " इत्यस्यैव स्तावकत्वेनार्थवादत्वात् यथा " जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा जुहुयात् " इत्येवमादीनां पयोहोमप्राशस्त्यविज्ञानोत्पादकत्वात् तेनैकवाक्यत्वं, एवमत्रापीति ।

ननु होतुरप्येवंरूपः कामो दृष्टः यथा प्रउगे शस्त्रे प्राणानामुक्थे " सप्त देवताः शंसति " इति सप्तसु तृचेषु शंस्यत्वेन प्रक्रान्तेषु " किं स यजमानस्य पापभद्रमाद्रियेत" इति किं स होता यजमानस्य पापमाद्रियेत किं वा (सा) कल्याणम् । इत्यत्र " एनं यथा कामयेत तथा कुर्यात् यं कामयेत प्राणेनैनं व्यर्धयानीति वायव्यमस्य लुप्तं शंसेत् ऋचं वा पदं वाऽतीयात् प्राणेनैवैनं तद्व्यर्धयति " इति । एवं शेषेष्वप्यैन्द्रवायवादिषु । तस्मादसन्दिग्धमेवंजातीयकं वाक्यार्थे हेतुफलविधानं उपक्रम-

प्रभृति । अथैवं ब्रूयेथाः [ब्रूवीथाः] "कामयेतैवैनं यथा कामयेत तथा तस्मिन् स्यात्"इति विधिश्रुतेः अन्यैरपि निस्सन्दिग्धैः फलविधिभिरेषां अवैलक्षण्यात् फलविधित्वमेषां न्याय्यम् । ननु "यं कामयेत सर्वैरङ्गैः सर्वेणात्मना समर्धयानि इत्येतदेवास्य यथापूर्वमृजुकृप्तं शंसेत्" इत्यस्य विधेः शेषत्वेन "यं कामयेत प्राणैरेनं व्यर्धयानि" इत्यादि संबध्यते । यथा अष्टाकपालत्वादीनि द्वादशकपालस्येति ।

उच्यते । युक्ता तत्रावयुत्यवादेनावयविसमुदायस्तुतिः नैवमत्रावयवेन समुदायस्तुतिः अनुपात्तत्वात् समुदायस्य ।

न(नु) च यदष्टाकपालो भवति इत्यादिषु विधिरस्ति ; वर्तमानापदेशत्वात् । इह पुनः विस्पष्टो विधिभेदो हेतुः "अत्रैवैनं यथा कामयेत तथा कुर्यात्" इति । कृते विधिभेदे [न] काल्पनिकमेकवाक्यत्वम् अङ्गीकर्तुं शक्यते । न च "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्याधानिकस्य उपग्रहविशेषस्य[1] अङ्गकामस्य प्रधानकामगामित्वप्रतिपादनशक्तिरस्ति । आहवनीयादीनामेव साक्षादाधानफलत्वात् । न चाहवनीयादीनां पुरुषार्थत्वं यदाहवनीये जुहोति इत्यादिना शास्त्रेण कर्म[ाङ्ग]त्वप्रतिपादनात् प्रयोगवचनस्थस्यात्मनेपदस्य अङ्गवाचित्वम् । आधानिकेनैव प्राप्तार्थत्वात् । भावनार्थतया च सावकाशत्वात् । यद्यप्यात्मनेपदादङ्गकामस्यापि यजमानगामित्वं तथाप्यत्र(संभवति)वचनात् होतृसंबन्धित्वं प्रतीयते यं कामयेत प्रमायुकः स्यात् इत्यादिना । यं कामयेत प्राणेनैनं व्यर्ध्नुयामित्यादिना च प्रत्ययश्रुत्या होतृफलमेवंजातीयकं गम्यते । '[न च]स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यनया स्मृत्या यजमानगामित्वम् । श्रुतिश्च स्मृतेर्बलीयसी । यथा च सत्यप्यात्मनेपदे वैश्वानरयागस्य पुत्रगामि फलं एवमत्रापीति । कथं पुनरवगम्यते पुत्रस्य फलं न पितुरिति ; वाक्यात् । "यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स" इति यत्तदोर्नित्यसंबन्धात् । किमिव वचनं न कुर्यात् । [त]स्माद्धोतुरेवंजातीयकं फलम् । 'ऋत्विगाचार्यौ नातिचरितव्यौ' इत्येषापि स्मृतिः अस्मिन् पक्षे दृष्टार्था स्यात् । तस्मात् भिन्नानि वचनानि इत्येवं प्राप्ते ब्रूमः—

"यं कामयेत वसीयान् स्यादिति उच्चैस्तरां तस्य याज्यया वषट्कुर्यात्" इत्यस्य उच्चैष्ट्वविधेः भूतार्थस्तावकत्वेन यं कामयेत प्रमायुकः स्यादित्यन्यो विधिरस्ति ।

---

1 उपग्रहविशेषः आत्मनेपदं

यथा 'यं कामयेत सर्वैरङ्गैस्समर्धयानि' इत्येतदेव "यथाऽस्य यथा पूर्वं ऋजुस्सप्त शंसेत् इत्यस्य विधेश्शेषभूतः अर्थवादः " अत्रैव एनं यथा कामयेत तथा कुर्यात् " इति। कथं तस्य कुर्यात् शंसेत् इति विधिश्रवणे वाक्यस्यैदंपर्यालोचनायां एकवाक्यताप्रतीतेः वायव्यादिषु तृचेषु ऋचः पदस्य[वा]तिपत्तौ प्राणाद्यङ्गव्यापदमुक्त्वा 'यं कामयेत सर्वैरङ्गैः समर्धयानीत्येतदेवास्य यथापूर्वं ऋजुक्लृप्तिं शंसेत्' इत्याह। अतस्तेनैकवाक्यतायां संभवन्त्यां वाक्यभेदाङ्गीकरणे स एव दोषो नियमेनाह। कामस्य यजमानगामित्वमुक्तं— **तथाकामोऽर्थसंयोगात्** [1]इति। (प्राप्तयोग) प्रयोगवचनगतस्यात्मनेपदस्य अङ्गकाम्यानां कर्तृगामित्वप्रतिपादनमेव विषयः। न्यायोऽप्ययमेव। नह्यन्येन कृतस्य कर्मणः फलं अन्यो भुङ्क्ते। [नहि]ऋत्विजां वैताने कर्मणि दक्षिणाव्यतिरेकेण फलमन्यदस्ति। यस्यैवाधिकारः तस्यैवाङ्गकामः। नचैवंजातीयकं फलं याजमानं अनिष्टत्वात्। सर्वास्वापत्स्वपि न मरणं फलम् फलमन्यदेव। यं कामयेत अनामयः स्वर्गं लोकमियादिति अनामयस्य(य)सतः स्वर्गगमनम्। स्वरसत एव प्रवृत्तिः पापे कर्मणि। तस्मादेक एवायं विधिः याज्यान्ते उच्चैर्वषट्कुर्यादिति, यथापूर्वं ऋजुं क्लृप्तं शंसेदिति च। वसीयात् स्यादित्यर्थवादोऽयम्॥

**॥ ६ ॥ " यं कामयेत पशुमान् स्यात् इति बहुपर्णां तस्मै शालां कुर्यात् " इति, 'क्रौञ्चमिवेत्युच्चतरं स्वर्गकामस्य' इति च अङ्गकामस्तद्व्याख्यातम् ॥ ४–३–८ ॥**

फलं तु तत्प्रधानानामिति।

**॥ ७ ॥ यस्यै देवतायै वषट्कुर्यात् तां ध्यायेदिति पुरा वषट्कारादिति विज्ञायते ॥ ४–३–९ ॥**

[2]किमिदं देवताध्यानं वषट्कारात्पूर्वं उपरिष्टादिति सन्देहः। अनियमोऽविशेषादिति प्राप्ते अभिधीयते—पूर्वमेव वषट्कारात् देवताध्यानं स्यात्। एवं दृष्टोऽर्थः

1. पू. मी. 3-8-5
2. किमिति-A

स्यात्। अर्थेनापि सामान्यविहितध्यानं वषट्कारात्पूर्वं नियम्यते। सामर्थ्यमपि नियामकं यथा 'जातमञ्जलिना जुहोति', 'जातमभिप्राणिति[1]' इत्यादौ। तस्मात् पूर्वं वषट्कारात् देवताध्यानमिति।

अथवा

यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेदिति देवताविषयं ध्यानं उत शब्दविषयमिति। किं प्राप्तम्? रूपध्यानमिति। यथा लोके कान्तां ध्यायन्नास्ते देवदत्त इत्यादौ वचसि विग्रहस्यैव ध्येयता तथाऽत्रापि। नन्वप्रमाणकं देवतारूपम्। उच्यते। स्मृत्युपचारान्यार्थदर्शनेभ्यः देवताविग्रहोऽध्यवसीयते। ननु निरस्तं विग्रहादिपञ्चकम्। सत्यं निरस्तं न पुनस्तन्निरासोऽधिकरणार्थः। न देवतातः फलं, न देवताप्रयुक्ता धर्माः, न च स्वरूपेण देवता कर्मण्यङ्गभावं प्रतिपद्यते इत्यधिकरणार्थः। यत्र पुनः देवताध्यानमुपदिश्यते तत्रेतिहासपुराणमन्त्रार्थवादस्मृत्यधीत-देवतास्वरूपं यथा चोदनासु गृहीते हविषि पुरावषट्कारात् ध्येयमिति प्राप्ते ब्रूमः—

देवतासंबन्धिनः शब्दस्यैव ध्येयत्वं श्रुतिसमवायात्। आग्नेयं ऐन्द्रं इत्यादौ श्रुत्यैव देवताप्रातिपदिकस्यैव[2] तद्धितेन ध्येयत्वम् नार्थे।

मुख्यत्वाच्च। मुख्यश्च प्राथम्याच्छब्दः जघन्यश्चार्थः पश्चाद्भावात्। किञ्च शब्दे कार्यस्याभावात् अर्थे कार्यं विज्ञायते। संभवति चेह शब्दे ध्यानम्। तस्मात् शब्दविषयमेवेदं ध्यानमिति।

यदि शब्दध्यानं स्यात् उपदेशानर्थक्यं स्यात्। कथं? याज्यानूवाक्यादिषु देवताशब्दोच्चारणस्य चिन्तापूर्वकत्वात्। 'यद्धि मनसा ध्यायति तद्वाचा वदति' इति। अर्थविषयं ध्यानं पुनः अप्राप्तत्वान्नियोगेन विधातव्यम्। उच्यते। याज्यानुवाक्यासु उक्तयागदेवता स्मर्यते संकल्पपूर्वतच्छब्दोच्चारणे। इदन्तु देवतायै हविर्ग्रहणे देवताया ध्यानं कर्माङ्गं विधीयते पुरा वषट्कारात्। तस्मात् शब्द-ध्यानमेवेदमिति।

---

1. अत्रोभयत्रापि जननाव्यवहितोत्तरकालीनत्व होमादौ सामर्थ्यलभ्यम्।
2. S' reas तत्मावास्यायै
3. All प्रतिपादकस्य।

**॥ ८ ॥ वषट्कृत्यापान्यान्निमिषेदपानेनैव प्राणं दधाति निमेषेण[1] चक्षुरिति विज्ञायते ॥ ४ - ३ - १० ॥ (सि)**

[2]अननिमिषणविधिरेषः । 'वषट्कृत्य प्राण्यात् अथापान्यात् अथ निमिषेत्' इत्येकेषां प्राणनस्य विधिः इतरयोः क्रमार्थोऽनुवादः ।

**॥ ९ ॥ न व्यपवदेद्याज्यां चानुवाक्यां चान्तरा यद्व्यपवदेत् यज्ञं विच्छिन्द्यात् "पुरोनूच्यं यज्ञस्य सन्तत्या" इति विज्ञायते ॥ ४ - ३ - ११ ॥ (सि)**

'न व्यपवदेत्' इति अन्तरा याज्यानूवाक्ये वाग्यमनविधिः । 'पुरोऽनूच्यं' इति नित्यानुवादो विधिस्थैर्यार्थः ।

**॥ १० ॥ स्वाहा देवा आज्यपा जुषाणा इति तत् प्रयाजानूयाजानां यथा आवाहने देवानाज्यपानिति ॥ ४-३-१२ ॥ (पू)**

किं प्रयाजानूयाजानामिदं वचनं, उतानूयाजानामेव, आहोस्वित् सहोत्तमेन प्रयाजानामिति ।

किं प्राप्तम् ? प्रयाजानूयाजदेवतानामभिधानमिति । कुतः ? देवानाज्यपानिति आज्यपानक्रियोपलक्षिताः प्रयाजानूयाजदेवताः । तासामेवाभिधानं न्याय्यम् । तथा दृष्टं प्रयाजानूयाजदेवतानां 'देवानाज्यपानावह' इत्यभिधानमावाहने ।

**॥ अनूयाजानां विज्ञायते ॥ ४ - ३ - १३ ॥ (पू)**

"देवा वै पुरा रक्षोभ्यः इति स्वाहाकारेण प्रयाजेषु समस्थापयन्" इत्यसंस्थितेषु भक्त्या संस्थाप्यवादो घटते । संस्थिताश्च प्रयाजाः । तस्मादनूयाजानामेवाभिधानम् ।

---

1. निमिषेण - Bhatta dipika ms.
2. अत्राधिकरणद्वये पूर्वपक्षः भाट्टदीपिकातोऽवगन्तव्यः ।

विज्ञायते च "यदनिष्टाभ्यो देवताभ्यः स्वाहाकरोति" इत्यनिष्टाभ्यो देवताभ्यः स्वाहाकरणम् शास्ति । इष्टाश्च प्रयाजाः स्वाहाकारवेलायाम् । तस्मादनूयाजानामेवेति ।

॥ सहोत्तमेन प्रयाजेन सोप्यनिष्टो भवति तस्मिन्नितरासां संस्थावदिति ॥ ४-३-१४ ॥ (सि)

उत्तमप्रयाजदेवतानां चैतदभिधानं स्यात् । उत्तमोऽपि प्रयाजस्तस्मिन्नवसरे अनिष्टो भवति । ते न मन्यामहे "यत् स्वाहा देवानाज्यपानिति तत्प्रयाजानूयाइतिवचनात् प्रयाजानूयाजानामिष्टानामनिष्टानामपि सतां(प्रयाजानां)वाचनिकोऽभिधानजानाम्" संस्कारः संस्कार्यत्वाविशेषात् सर्वासां प्रयाजानूयाजदेवतानां स्यात् । संस्थावचनं चार्थवादः अनिष्टसंस्कारापेक्षः । यथा हि "यदनिष्टाभ्यो देवताभ्यः स्वाहाकरोति" इत्यत्र प्रयाजीया इत्यर्थः । यथा "प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ" इति न शुक्रामन्थिनोर्वादः । यथा आहुतीनां प्राक्त्वादः । यत्र शुक्रामन्थिनौ, तयोः प्रत्यक्षविधानात् । एवं चेदमनिष्टवचनं इष्टेषु प्रयाजेषु असंभवात् अन्यत्रेष्टेभ्यः प्रयाजेभ्य इति द्रष्टव्यम् । तस्मात् प्रयाजानूयाजदेवतानामभिधानम् । अधिकरणचिन्तायां च प्रयोजनं—यद्यनूयाजाभिधानं इडान्तेषु लुप्येत । अपबर्हिषोरनूयाजयोः [ द्विवचनान्तोहं ] च द्योतयति । सहोत्तमेन इडान्त ऊह्येत । यदा पुनस्सिद्धान्तः तदा सर्वत्रैव अविकारेण प्रयोग इति ।

॥ ११ ॥ जुषाणयाज्यावेके समामनन्ति ऋग्याज्यावेके सहविषावेके अहविषावेके हविष्मत्युत्तरमाहेति ॥ ४ - ३ - १५ ॥ ( सि )

आज्यभागयोः जुषाणयाज्यत्वं ऋग्याज्यत्वं वा विकल्पः आहोस्वित् समुच्चय इति सन्देहे ऋङ्निगदयोः कार्यभेदात् समुच्चय इति प्राप्ते ब्रूमः—

ऋग्याज्यावाज्यभागौ भवतः जुषाणयाज्यौ वेति विकल्पो भवेत् याज्याकार्ययोः जुषाणनिगदस्य विधानात् ।

यदा जुषाणयाज्या तदापि किं सहविःशब्दत्वं आहोस्विदहविःशब्दत्वमिति । किं तुल्यवदाज्यभागयोर्विकल्पः आहोस्वित् व्यवस्थयोत्तरस्मिन् सहविःशब्दत्व-

मिति। किं प्राप्तम्? अहविः सहविः शब्दयोः आज्यभागौ प्रत्यविशेषेण विधानात् जुषाणयाज्यत्वे तुल्यवदेव विकल्प इति प्राप्ते ब्रूमः—

अहविश्शब्दकः पूर्व आज्यभागो भवेत् उत्तरस्तु सहविश्शब्दकः। वचनं "हविष इत्युत्तरमाह" इति। जुषाणोऽग्न आज्यस्य हविषः इत्युत्तरस्य निगदः स्यात्।

**॥ १२ ॥ गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग्याज्या त्रिपदा पुरोऽनुवाक्या भवति चतुष्पदा याज्या पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति उपरिष्टाल्लक्ष्मा याज्या मूर्धन्वती पुरोनुवाक्या भवति नियुत्वती याज्या, अनुवती पुरोनुवाक्या भवति–याज्या, साहत्वै पुरोनुवाक्या, समृद्धा याज्या, अभीष्टाहरद्देवता वेत्यग्रे व्याहरति सा ह वै समृद्धा यस्यै देवतायै अधि वषट्करोति आहोस्वित्सुरभिमतीसंयोगात् याज्यानूवाक्या दर्शितेति विदितं अनुवादास्तद्व्याख्यातम् ॥ ४ - ३ - १६ ॥**

किमेतेऽनुवादाः आहोस्विद्विधय इति संशये-एवंलक्षणयोर्याज्यानूवाक्ययोः प्रकृतावाम्नेये प्रतिपदं विधानात् प्रक्रान्तलक्षणस्तुत्यर्थानीमानि अनुवादा इति प्राप्ते ब्रूमः—

प्रकृतावानर्थक्यात् विकृत्यर्थो लक्षणविधिः[1] विकृतौ यत्रानाम्नाता याज्यानुवाक्याः तत्रैवंविधलक्षणाः स्युः इत्येवमेतानि वचांसि भवेयुः। अन्यथाऽनर्थकानि स्युः। तस्माद्विकृत्यर्था लक्षणविधयः। दृष्टश्चामात्वप्रवत्वयोर्विकृत्यर्थत्वम्।

**॥ १३ ॥ गायत्र्यौ संयाज्ये ब्रह्मवर्चसकामस्य त्रिष्टुभौ वीर्यकामस्य जगत्यः पशुकामस्य अनुष्टुभौ प्रतिष्ठाकामस्य पङ्क्त्यो यज्ञकामस्य विराजावन्नकामस्य ॥ ४ - ३ - १७ ॥**

एते च याज्याविषयाः काम्यविधयः नित्यविकाराः। त्रिष्टुभोस्तु नित्ययोरेव कामः स्यात्। अनुष्टुभौ बुभूषतः कुर्यात् अनुष्टुप् छन्दांसि गमयेत् अनुष्टुभावेव

---

1. Ś reads यथा चतुम्रपञ्चे

कुर्यात् इति काम्ये प्रतिषिद्धे नित्ये प्रसक्तिव्यपदेशात् काम्ययोस्सत्योरनुष्टुभोरपोदितत्वात् नित्ययोरेव सत्योरयं प्रतिप्रसवः । न हि वाक्यैकवाक्यत्वे अर्थान्यत्वं सम्भवति । तस्मात् प्रतिषिद्धे विधिरर्थवादार्थः ।

॥ १४ ॥ अयाड्देवानामाज्यपानां प्रिया धामानीति तत्प्रयाजानुयाजानां यथा पुरस्तात् ॥ ४ - ३ - १८ ॥

अयाट् इत्येतदभिधानं किं प्रयाजानूयाजदेवतानां आहोस्वित् उत्तमे प्रयाजे या इज्यन्ते तासां इति सन्दिह्यते । किं प्राप्तम् ?

प्रयाजानूयाजदेवतानामभिधानम् । आज्यपानां प्रिया धामानीति आज्यपानक्रियायोगस्याविशेषात् । यथा पुरस्तादुक्तं—देवानावहेत्यावाहने प्रयाजानूयाजदेवताः एवमत्रापीति ।

[ननु] प्रयाजानां देवता इष्टा भवन्ति । अनिष्टाः पुनरनूयाजदेवताः । अयाडितिशब्दो भूतकाल [विष]यतया लिङ्गात् प्रयाजविषयो भवेत् । आज्यपानक्रिया च विना पदान्तरेणैकवाक्यतां प्रतिपद्यमाना वाक्यात् ..... .....[1] ।

[ तत्र ] यत्तु देवतासंस्कारार्थतया यजनं तस्यानूयाजदेवतास्वप्यविशिष्टत्वात् तास्वप्यविशेषेण इष्टास्वनिष्टासु च स्मरणसंस्कारस्याविशिष्टत्वात् । यदुक्तं लिङ्गात् प्रयाजदेवतानामभिधानमिति, अयाडिति शब्दस्य न नियोगतो भूतकालविषयत्वमेव सर्वकालेष्वपि छन्दसि लुङ्लङ्लिटो विधीयन्ते । यथा वै तेषां प्रत्यक्षं इज्यामनुवदत्येवमेतेषाम् । यथा इतरेषामुत्तरप्रयाजानां आज्यपानामिज्याशब्देनानुवादः तथाऽत्रापि एकेनानुवादो न्याय्यः देवानाज्यपानिति तत् प्रयाजानुयाजानामिति । तस्मात् प्रयाजानूयाजानामेतदभिधानम् । प्रयोजनं अप्रयाजे उदयनीये न स्यादेतदभिधानं यदा[2] पूर्वपक्षः । यदा तर्हि सिद्धान्तः तदा भवेदेवेति ।

---

1. अत्र पूर्वपक्षशेषः सिद्धान्तारम्भश्च मातृकासु न दृश्येते ।
2. All यथा

॥ १५ ॥ अनवानं यजतीत्युत्तमानुयाजे विज्ञायते तद्वदेव सकृदेवावान्यात् एवमप्यनवानं इति विज्ञायते ॥ ४-३-१९ ॥ (सि)

अनवानं यजतीत्यनूयाजान् प्रकृत्याविशेषेण अनवानं विधाय पुनरुत्तमानूयाजे विज्ञायते शाखान्तरे अनवानविधिः। स किं उत्तम एवानवानं नियंस्यति, किं वाऽयमनुवादः। किं प्राप्तं? सकृदनवानविधिरिति। कथं? विधानात्—उत्तमे नावान्यात् इति। यदि पुनरनूयाजेषु अनवानविधिरविशेषेणाभविष्यत् न पुनरुत्तमाभिधानं स्यात्। विधीयते तत् तस्मात् त्रीन् वृणीते इतिवदुत्तम एव विधिर्युक्तः। यथा आर्षेयं वृणीत इति सामान्यतः [प्राप्तं] त्रिषु उपात्तेष्वन्तर्भवति एवमत्रापि। यदनवानमनूयाजैर्यजति तदुत्तमे इति। तस्मादुत्तम एवायं विधिर्नियत इति प्राप्ते ब्रूमः—

स्यादेतदेवं यदि उत्तमानूयाजेऽनवानविधिरभविष्यत्। न पुनरयं विधिः। अनुवादोऽयम्। सकृदनवानविध्यर्थः—अनवानं यजतीति उत्तमेऽनुयाजे विज्ञायते अनुवाद इति वाक्यशेषः। यदुक्तं—अनूयाजे नावान्यात् उत्तमे न सदेति। यदेव स्यात्तस्मिन्नेव पक्षे[प्रसज्येत]नान्यत्रेति।

॥ १६ ॥ उपांशु यजतीत्यन्यत्राश्रुतप्रत्याश्रुतेभ्यः तच्च व्याख्यातम् ॥ ४-३-२० ॥ (सि)

उपांशुयाजलक्षणो धर्मः। सः किं सर्वत्र निविशते किंवा अन्यत्र आश्रुतप्रत्याश्रुतनियतनिगमेभ्यः इति सन्दिह्यते। किं प्राप्तम्? सर्वत्रेति। कथं? अविशेषात्। यावत्किञ्चिदुपांशुयाजे शब्दोच्चारणं तत्र सर्वत्रैवोपांशुत्वं निविशत इति प्राप्ते ब्रूमः—

उपांशुयाजे आश्रवणप्रत्याश्रवणलक्षणान् प्रैषार्थप्रतिपत्तिरूपान् निगदानपास्य अन्यत्रोपांशुत्वं स्यात्। देवतायां याज्यानुवाक्ययोश्चैतद्व्याख्यातम्। वचनात्। धर्मविशेषार्थत्वाच्चेति। उपांशुयाजे प्रणववषट्कारयोः सामर्थ्यादुच्चैष्ट्वमध्यवसीयते। श्रुत्यन्तरादारम्भज्ञापनार्थमुच्चैः प्रणवोपकृतौ वषट्कारोऽपि प्रदानवेलाप्रतिपत्त्यर्थः उच्चैः प्रयुज्यत इति सामर्थ्यात् प्राप्तेन श्रुत्यन्तरानुमानमिति।

## ॥ १७ ॥ [1]उपांशु पत्नीः संयाजयतीत्यनेन व्याख्यातम् ॥ ४ - ३ - २१ ॥ (सि)

अतिदेशसूत्रमिदम् । पूर्व एव न्यायोऽत्रातिदिश्यते । पत्नीसंयाजप्रयोगे वाचनिकमुपांशुत्वं सर्वं निवेक्ष्यत इति अत्र तुल्या शङ्का । सामर्थ्यादेव आश्रावणादिनिगदवर्जमिति सिद्धान्तः ।

## ॥ १८ ॥ आज्येडा सर्वेज्यानामङ्गमविशेषात् ॥ ४ - ३ - २२ ॥ (पू)

किमियमाज्येडा[2] सर्वेषां प्रकरणस्थानां यागानामाङ्गं उत पत्नीसंयाजानामेवेति सन्देहः । किं प्राप्तम् ? सर्वेज्याङ्गमिति । कथं ? अविशेषात् दर्शपूर्णमासप्रकरणस्थानां फलवत्त्वेन आज्येडासम्बन्धाविशेषात् । यावन्त इज्यन्ते तासां हविस्संस्कारात् प्रतिपत्तिः । यदा आज्येडा कृता तेन द्रव्येण यो निर्वर्तितो यागः [साङ्गो भवति]

## ॥ पत्नीसंयाजाङ्गं हविस्संयोगात् ॥ ४ - ३ - २३ ॥ (सि)

पत्नीसंयाजाङ्गं आज्येडा स्यात् । कथं ? हविस्संयोगात् । द्रव्यसंस्काररूपत्वात् । यथा औषधे सा द्वारेणाङ्गं एवमिहापि स्यात् । प्रयोजनं यदा पूर्वपक्षः तदा शंय्विडान्तेष्वपि यागेषु कर्तव्यैवाज्येडा । यदा तर्हि सिद्धान्तः तदा पत्नीसंयाजान्तेष्वेव कर्तव्येति ।

## ॥ १९ ॥ पराचीं प्रतीचीमिति कर्तुर्मुखवादः तल्लिङ्गत्वाच्छब्दस्य ॥ ४–३–२४ ॥ (पू)

इडां प्रकृत्यामनन्ति " यं कामयेत पशुमान् स्यादिति प्रतीचीं तस्येडामुपह्वयेत पशुमानेव भवति, यं कामयेतापशुः स्यादिति पराचीं तस्येडामुपह्वयेतापशुरेव भवति " इति प्रतीचीं पराचीमिति किमयं कर्तुर्मुखवादः आहोस्विदभ्यासवाद इति संशयः ।

किं प्राप्तं ? कर्तुर्मुखवाद इति । तल्लिङ्गत्वाच्छब्दस्य ।

---

1. Ś reads उपांशुयाजे प्रणववद्दकारः पत्नीः etc.
2. Ś किमियमिडयमाज्य

कर्तुमुखवादलिङ्गमेवंशब्दः इष्टकास्वैक्षिष्ट तद्वदत्रापि—पराच्युपधातव्या अभिमुखेन प्रतीचीम् ।

॥ लिङ्गाच्च ॥ ४–३–२५ ॥

लिङ्गमप्येतमर्थं दर्शयति मुखमिव प्रत्युपह्वयते इति सम्मुखं प्रत्युपह्वयते इति पराक्त्वप्रत्यक्त्वत इति मुखवादमेव दर्शयति ।

॥ आम्नातो वाऽत्र पदाभ्यासः तस्य प्रतिषेधोऽयं पराचीस्सामिधेनीरन्वाहेति ॥ ४ - ३ - २६ ॥ (सि)

पदाभ्यासमेके शाखिनः समामनन्ति । इडोपहूता उपहूतेडा इत्येके । उपहूतोपहूतेत्यपरे तस्योभयस्याप्ययं प्रतिषेधः । यं कामयेतापशुः स्यादिति पराचीं तस्येडामुपह्वयेतेत्यर्थः । दृष्टश्चानभ्यासे पराक्शब्दः यथा 'पराचीस्सामिधेनीरन्वाह' इति । इष्टकासु साक्षान्मुखसंबन्धाभावात् कर्तुर्मुखवादः । "सम्मुखं प्रत्युपह्वयत" इति लिङ्गं कर्तुर्मुखवादं दर्शयति, आर्षत्वात् प्रतिशब्देन योगात् । 'मुख प्रति उपह्वयेत' मुखसम्मितामवस्थापयेदित्यर्थः । यथा वृक्षं प्रति विद्योतत इत्यर्थो विज्ञायते 'इडोपहूतेति तत्पराची उपहूतेडेति तत्प्रतीची' इत्याम्नाय एवोभे निरुच्येते । तद्बलवत्कारणतया तयोराम्नातयोः कुतस्त्वभावमन्य आम्नायस्सन्दर्शयति ।

॥ २० ॥ चतुरुपह्वयत इति निगदोऽभ्यावर्तेत तल्लिङ्गत्वाच्छब्दस्य ॥ ४ - ३ - २७ ॥ (पू)

इडामेव प्रकृत्याभिधीयते—'चतुरुपह्वयते' इति । किं सकलनिगदस्याभ्यासः [आहोस्वित् पदमात्रस्यैवे]ति संशयः, किं प्राप्तम् ? निगदाभ्यास इति । निगद एव चतुरावर्तेत । कुतः ? निगदस्यैवेडाशब्दवाच्यत्वात् । चतुरिडायास्तु प्रत्ययसामानाधिकरण्यात् । चतुरयमनुवाकः पठ्यतामित्युक्ते सकलस्यानुवाकस्य चतुरुच्चारणं गम्यते । एवमत्रापीति प्राप्ते ब्रूमः—

॥ पदं वा प्रकरणाद्यथा चैते समिद्वती घृतवती चानूच्येते ॥ ४–३–२८ ॥

पदवाद एवायं स्यात् । तेषामेव 'इडोपह्वयते' इत्यादीनां प्रकृतत्वात् । यथा समिद्वती च घृतवती चानूच्येते इति प्रकृतयोः पदयोः ग्रहणमेवमत्रापीति । विशेषणपदानां प्रक्रमान् पदेष्वेव सामानाधिकरण्यं इडापदश्रुत्या पद एव त इति ॥

॥ २१ ॥ यद्ब्रूयादेतदु द्यावापृथिवी भद्रमभूदित्येतदुवेवासुरं यज्ञस्याशिषं गमयेत् इदं द्यावापृथिवी भद्रमभूदित्येव ब्रूयात् एतदेवैकेषां विपरीतम् । यद्ब्रूयात् स्वावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्यात् यदा हि प्रमीयते अथेमामुपावत्स्यति सूपचरणा च स्वधिचरणाचेत्येव ब्रूयात् यजमानमेव यज्ञस्याशिषं गमयति इत्येतदेवैकेषां[विपरीतं]यद्ब्रूयाद्विधेरिति यज्ञस्थाणुमृच्छेत् वृधात्विरत्याह यज्ञस्थाणुमेव परिवृणक्ति (तै.सं. ६-१-२) इत्येतदेव विपरीतमेकेषाम् । यद्ब्रूयाद्योऽग्निं होतारमवृथा इति अग्निनोभयतो यजमानं परिगृह्णीयात् एतदेवैकेषां विपरीतं यद्वृद्धे इव ब्रूयात् भ्रातृव्यमस्मै जनयेत् घृतवतीमध्वर्यो स्रुचमास्यस्वेत्याह यजमानमेवैतेन वर्धयति इत्येतदेवैकेषां विपरीतम् त एवमुभये प्रशस्ताश्चापोदिताश्च ॥ ४-३-२९ ॥ (सि)

तस्मात्तुल्यबलत्वादुभये प्रकृतौ निविशेरन् । घृतवतीमित्यन्यायनिगदः यागप्र[काशक]कवत् प्रकृतावेवावतिष्ठत इति ।

॥ २२ ॥ यन्न निर्दिशेत् प्रतिवेशं यज्ञस्याशीर्गच्छेत् आशास्तेयं यजमानोसावित्याह निर्दिश्यैवैनं स्वर्गं लोकं गमयतीति विज्ञायते ॥ ४ - ३ - ३० ॥ (सि)

असाविति नाम्नः निर्देशः । निर्देशानिर्देशयोः किं विकल्पः आहोस्वित् नियोगतो निर्देश इति संशयः । किं प्राप्तम् ? विकल्प एवेति । यन्न निर्दिशेदिति निषेधान्यथानुपपत्त्या विकल्पः षोडशिग्रहणवदिति प्राप्ते ब्रूमः—

यच्छब्देन विध्युच्छेदात् यन्न निर्दिशेत् प्रतिवेशं यज्ञस्याशीर्गच्छेत इत्यफलवादो नित्यानुवादतया यजमाननाम्नो निर्देशात् अर्थवत्तामासादयन् न विधानं अन्यथानुपपत्त्या कल्पयति । तस्मान्नियोगतो यजमाननाम्नो निर्देश एवेति ।

॥ २३ ॥ नाम गृह्णातीति विज्ञायते नामानि गृह्णातीति विज्ञायते ॥ ४ - ३ - ३१ ॥ (पू)

किं सर्वाण्येतानि नामानि गृह्णाति वैकल्पिकानि आहोस्वित् नाम गृह्णातीति अवयुत्यानुवाद इति संशयः । किं प्राप्तम् ? विकल्प इति । कथं ? नामग्रहणं सर्वेषां अग्निप्रतिपत्त्यर्थत्वाविशेषात् विकल्प इति प्राप्ते ब्रूमः—

॥ द्वयोर्बहूनां च नाम्नां विधानात् नाम गृह्णातीत्यवयुत्यवादः स्तावकत्वात् ॥ ४ - ३ - ३२ ॥ (सि)

द्वयोर्बहुनाम्नां ग्रहणविधिस्तावकत्वेनावयुत्यवादो न पृथग्विधिः । द्व्यक्षरेषु चतुरक्षरेषु यजमानस्य नामानि गृह्णीयादिति विज्ञायते । अविशेषविहितयोर्नाम्नोः विशेषकमिदं वाक्यं ‘ सोमयाजी तृतीयं नाम कुर्वीत ’ इति विज्ञायते । अविशेष-विहितानां बहुत्वं सोमयाजिविषयत्वेन नियम्यते । तच्चैतन्नाम तस्य यौगिकं सोमयाजीति । तस्मात् अन्येषां असोमयाजिनां द्वे नामनी भवतः। तेषामपि कैश्चित् तृतीयं यज्ञकाम इति समाधीयते । तत्त्वयुक्तं प्रमाणाभावादिति ।

॥ इति सङ्कर्षकाण्डभाष्ये ॥

॥ चतुर्थाध्यायस्य तृतीयःपादः ॥

॥ हौत्रकाध्याये वषट्कारपादः ॥

---

# अथ चतुर्थाध्यायस्य चतुर्थः पादः

**॥ १ ॥ एते वै प्रजापतेः कामदुहः षट्सूनाः पृथुपाजवत्यौ धाय्येऽनु-पदावाज्यभागौ आनुष्टुभौ संयाज्ये इति ॥ ४ - ४ - १ ॥**

एतेऽनारभ्यविधयः किं प्रकृत्यर्था उत विकृत्यर्था इति सन्देहे अनारभ्या-धीतानां प्रकृतिगामितेति प्राप्ते ब्रूमः—

एतेऽनारभ्यविधयः विकृत्यर्था भवेयुः। कथं ? प्रकृतिविरोधित्वात्। उक्तम्—"प्रकरणविशेषाच्चु विकृतौ विरोधि स्यात्" (3-6-9) इति। अथवा प्राप्तिरेतत् उत्तरविवक्षार्थमिति।

**॥ २ ॥ कामेष्टिस्तत्रानुपदौ स्यातां तदर्थत्वात् ॥ ४ - ४ - २ ॥**

एते विधयो विकृत्यर्थाः षडित्युक्तम्। "अनुपदावाज्यभागौ स्याताम्" इति किं फलार्थोऽयं विकारः, आहोस्वित् प्राकृतमन्त्रविकारः, अथवा सर्वमन्त्रोपदेश इति संशयः। किं प्राप्तम् ? अनुपदावाज्यभागौ स्याताम् इति या कामेष्टिः वैकृती तत्रानुपदौ स्याताम्। तदर्थत्वात्। कथं तर्हि तदर्थत्वम् ? फलार्थेषु प्रधानेषु उपकारार्थान्यङ्गानि। तस्मादाज्यभागयोः न फलशेषता। तस्मात् तयोः फल-संबन्धेन विकारो नोपपद्यते नान्यथेति।

तदेवं तौ (चोदनाशेषत्व) प्राकृतदेवताकौ प्राकृतमन्त्रकौ स्याताम् चोदना-शेषत्वात्। प्रधानकर्मशेषो ह्याज्यभागः न फलशेषः। तस्मात्तयोः फलसंबन्धेन विकारो नोपपद्यते। तस्मात् प्राकृतमन्त्रप्रतिषेधार्थमनुपदाविति। (प्राकृतौ च नानादेशे प्रकृतिः प्रतीयते।) प्राकृतावेवाज्यभागौ विकृतौ अनुत्राद्येते। कथं असति विस्पष्ट-विकारादेशे प्रकृतिः प्रत्येतव्या। भवति चात्र विकारादेशः। तस्मात् प्रकृतिः विकृतेःपदं तदनुगतौ इति। अथवा प्रकृतयोराज्यभागयोः पदं तदनुगताविति वा। यत् प्रकृतयोरविकृतयोरेवानुवादः वाक्यार्थः। निष्प्रयोजनानुवादोऽनर्थकः स्यात्। किन्त्वयं प्रतिप्रसवविधिः। कथं ? एकेषां शाखिनां सद्वन्तावाज्यभागौ भवत इति सद्वन्तावाज्यभागौ सर्वासु विकृतिषु व्यपदिष्टौ ताभ्यां निवर्तितौ। तयोरेव निवृत्तयोराज्यभागावपि कृतपदाविति विकल्पार्थः प्रतिप्रसवो विधीयते। तस्मात प्राकृतौ आज्यभागौ सद्वन्तौ वा प्रयोक्तव्याविति।

॥ ३ ॥ वामदेव्यस्य पञ्चदशर्चः सामिधेन्यः स्युः याज्यानुवाक्याश्चेति सर्वास्सामिधेन्यः स्युः तदर्थत्वात्
॥ ४ - ४ - ३ ॥ (पू)

क्वचिदाम्नायते वामदेवस्यार्षं पञ्चदशर्चं सूक्तम् । ता ऋचः किं सामिधेन्यो भवेयुः सर्वाश्च याज्यानुवाक्याः उत काश्चिदेवेति सन्देहः । किं प्राप्तम् ? सर्वासामुभयत्र विनियोग इति । कुत एतत् ? उभयत्राप्युपदेशात् । "वामदेवस्य पञ्चदशर्चः सामिधेन्यः स्युः" इति सकृदस्य सूक्तस्य सामिधेनीसंयोगात् सर्वासां सामिधेनीत्वम् । तथा याज्यानुवाक्याविकल्पेन चतस्रो भवेयुः इति प्राप्ते ब्रूमः—

॥ यथार्थमितरत्र विरोधात् ॥ ४ - ४ - ४ (सि)

न चैतदस्ति सर्वास्सामिधेन्यो भवेयुरिति। सर्वाश्च याज्यानुवाक्या इति। कथं तर्हि ? यथार्थं विभज्य एकादश सामिधेन्यो भवेयुः चतस्रो याज्यानुवाक्याः । एवं वामदेव्यस्य पञ्चदशर्चः सामिधेन्यो भवेयुः । याज्यानुवाक्याश्च इत्युपदेशोऽर्थवत्तामासादयत्येव ।

यद्यपि सकलस्य सामिधेन्यर्थता न विरुध्येत तथापि समानवाक्योपन्यस्तानः याज्यानुवाक्यार्थता विरुध्यते चतसृभिरेव कार्यसिद्धेः । तस्मात् क्वचित्सर्वोपदेशं क्वचित् एकदेशोपदेश इत्यर्धवैशसं स्यात् । तस्माद्यथार्थं विभाग इति ।

॥ ४ ॥ अगस्त्यस्य कयाशुभीयसामिधेन्यो याज्यानुवाक्याश्चेत्यनेन व्याख्यातम् ॥ ४ - ४ - ५ ॥ (सि)

एतदपि पूर्वेणैवाधिकरणेन व्याख्यातम् ।

॥ ५ ॥ य इन्द्रियकामो वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेदित्येवमुक्त्वा व्यत्यासमन्वाह इन्द्राय राथन्तरायानुब्रूहीति रथन्थरस्य ऋचमनूच्य बृहत ऋचा यजेत् इन्द्राय बार्हतायानुब्रूहीति बृहत ऋचमनूच्य रथन्तरस्य ऋचा यजेत, इन्द्राय वैराजयानुब्रूहीति वैराजस्यर्चमनूच्य वैरूपस्यर्चा यजेत् इन्द्राय शाक्करायानुब्रूहीति शक्करीमनूच्य रैवत्या यजेत्, इन्द्राय रैवतायानु-

ब्रूहीति रैवतमनूच्य शक्वर्या यजेत् देवताभिर्व्यतिषजति व्यत्या-
समन्वाहेति । सामान्येन विहिते पुरोडाशे इन्द्राय राथन्तरायानु-
ब्रूहीति रथन्तरस्य ऋचमनूच्य बृहत ऋच यजेदित्युक्तम् । "न
बृहत्या वषट्कुर्यात् यदनुबृहत्या वषट्कुर्यात् छन्दांसि ........
गमयेत्" "अनुवाक्ययोश्चत्वार्यक्षराणि याज्यामनूच्य यजति
आनुष्टुभं च ह्वा एतत्संपादयति" ॥ ४-४-६ ॥

॥ अभि त्वाशूर नोनुमोऽदुग्धा इव धेनवः ईशानमस्य जगतः स्वर्दृशं ईशान-
मोमित्यनूच्य इन्द्र तस्थुषस्त्वामिद्धि हवामहे इति यजेत् । त्वमिद्धि
हवामहे सातावाजस्य कारवः त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठा-
मित्यनूच्य स्वर्वतोऽभित्वा शूर नोनुमोमिति यजेत् । एवमेतद्यथा-
समाम्नातस्याक्षरक्रमाद्यविरोधेनाक्षरक्रमाणामध्यूहनम् ॥ ४-४-७ ॥

सूत्रद्वयं अविद्यमानपूर्वपक्षाशङ्कमपि होतृपदार्थचिन्तासङ्कल्पप्रतिपत्तेः प्रवृत्तमिति ।

॥ ६ ॥ द्वे याज्ये स्यातां तदर्थत्वात् ॥ ४-४-८ ॥ (पू)

[1]द्वे वै देवानां याज्यानुवाक्ये प्रयाजान्यजति(पातः)सुकार्याः परे हि देवेभ्यः इति विप्रकर्षश्च । याज्ये भवतः ।

---

1. अत्र भाट्टदीपिका—महापितृयज्ञे तिस्र ऋचो याज्यानुवाक्यत्वेनाम्नाताः तासु द्वयोः ऋचोः समुच्चित्य याज्यात्वम् । "द्वे वै देवानां याज्यानुवाक्ये" इति प्रकृत्य 'परे हि देवेभ्यः पितरः' इति श्रुत्या देवापेक्षयाऽऽधिक्यकथनात् । आधिक्यं च प्रदानमन्त्रांश एव । तदेषा तृतीया एतया वै प्रददाति इति श्रुत्या विवरणात् । अनुवाक्यायाज्यात्वेन क्रमप्राप्तयोर्द्वयोर्विनियोगे तृतीयाया अवशिष्टायाः सन्निहितत्वेन याज्यायामेवोक्तलिङ्गेन समुच्चित्य विनियोगस्य न्याय्यत्वात् इति प्राप्ते—

"द्वे पुरोनुवाक्ये अन्वाह" इति श्रुत्या पुरोनुवाक्यात्वेनैव द्वे विनियोज्ये लिङ्गस्योभय-साधारण्यात् । "प्रथमया द्वितीयया गमयति प्रैव तृतीयया यच्छति इति स्पष्टमेव कौषीतके विनियोगाच्च ।

॥ लिङ्गाच्च ॥ ४-४-९ ॥

तदेषा तृतीया एतया वै प्रददाति इति द्वितीयया प्रदानं दर्शयति। पूर्ववृत्तापेक्षः एतच्छब्दः । तस्मादपि द्वे याज्ये विज्ञायेते ।

द्वे पुरोनुवाक्ये अन्वाहेति पुरोऽनुवाक्ययोर्द्वित्वं विधीयते । तस्मात्पूर्वोक्तयोर्लिङ्गयोः श्रुत्यविरोधेन क्लृप्तिः स्यादिति ।

॥ ७ ॥ उभे सप्रणवे स्यातां प्रकृत्युपबन्धात् ॥ ४-४-१० ॥ (सि)

"द्वे पुरोऽनुवाक्ये भवतः" इत्युक्तम् । ते द्वे अपि किं एकप्रणवे[उत]नानाप्रणवे इति संशयः । किं प्राप्तम् ? एकप्रणवे इति । कुतः ? यागस्य प्रकृतौ पुरोऽनुवाक्यासम्बन्धः एकप्रणवसंबन्धित्वात् । प्रकृतिवदिहापीत्येकप्रणवः स्यादिति प्राप्ते ब्रूमः—

उभे अपि पुरोऽनुवाक्ये नानाप्रणवे स्याताम् । प्रकृत्युपबन्धात् । प्रकृतौ एकस्या एव पुरोऽनुवाक्यायाः प्रणवयोगः तदत्रापि पृथक् प्रणवयोगः । यदि पुनः द्रव्यविकारः स्यात् द्वे पुरोनुवाक्यामिति अत्रेष्येत । तस्मान्नायं द्रव्यविकारः किन्तु पुरोनुवाक्याद्वित्वोपदेशः । तस्मात्ते नानाप्रणवे कर्मणि कर्तव्ये इति । तथा च लिङ्गम् "ऋचमुक्त्वा प्रणौति अपरामुक्त्वा प्रणौति" इति नानाप्रणवतामेव दर्शयति ।

॥ ८ ॥ गृहमेधीये देवतावाहनं न विद्यते सामिधेन्यानन्तर्यात् तत्पुनः प्रतिषिध्यते ॥ ४-४-११ ॥ (पू)

चातुर्मास्येषु गृहमेधीये देवतावाहनं कर्तव्यं नेति भवति विचारणा। कुतः ? सामिधेन्यानन्तर्यात् । यदनन्तरं आवाहनं ता एव सामिधेन्यो गृहमेधीये न्यक्षेण[1] प्रतिषिध्यन्ते । न सामिधेनीरन्वाहेति । अतः प्रवृत्तिक्रमेण देवतावाहनमपि सामिधेनी[निवृत्तौ]निवर्तेत इति ।

॥ विद्यते वाऽनन्तर्यात् अकार[ण]मानन्तर्यं यथा वास्तोष्पतीये ॥ ४-४-१२ ॥ (सि)

1. कार्त्स्न्येन

विद्यत एव गृहमेधीये देवतावाहनम् । नहि सामिधेनीनामङ्गं देवतावाहनं येन तन्निवृत्तौ निवर्तेत । न चानन्तर्यमात्रादेवाङ्गता शक्यते कल्पयितुं अनङ्गकृतानामपि आनन्तर्यदर्शनात् । यथा वास्तोष्पतीयमानन्तर्यमप्यग्निहोत्रात् नाग्निहोत्राङ्गम्। एवमत्रापि 'समामग्ने महमसि' इत्येवमादि कर्तव्यमेवेति ।

॥ ९ ॥ वाजिनामावाहनं विद्यते यथान्यासां
देवतानाम् ॥ ४-४-१३ ॥ (पू)

चातुर्मास्येषु वैश्वदेवे पर्वणि वाजिनामावाहनं कर्तव्यं नेति विचार्यते । किं प्राप्तम् ? कर्तव्यमिति । यथा प्रकृतौ देवतावाहनं कृतं(अप्राकृतवत्)वाजिनेज्यायामपि देवतावाहनं कर्तव्यमेव चोदकानुग्रहायेति प्राप्ते ब्रूमः—

॥ हविरनियतत्वाद्वा न विद्यते यथा विष्णोरुरुक्रमस्य
॥ ४ - ४ - १४ ॥ (सि)

न देवतावाहनं वाजिनेज्यायां, अप्रयोजकत्वाद्धविषो वाजिनाम् । कथं पुनरप्रयोजकत्वम् ? परार्थद्रव्यवृत्तित्वात् । यथा परार्थद्रव्यवृत्तेः विष्णोरुरुक्रमस्य नावाहनम् । एवं वाजिनद्रव्यानियतत्वाद्यागस्य । यथा लोके भोजने निमन्त्रणम् ।

कथं पुनरनियतत्वमिति ? "बर्हिषदं कृत्वा समया स्फ्येन व्यूहेत् स यद्यवमृद्येत यच्च स्फ्ये आश्लिष्येत् तद्विष्णव उरुक्रमायावद्येत्" इति न च नियतं स्फ्येनावमर्दनं आश्लेषणं वा । एवमेव परार्थद्रव्यवृत्तिष्वनियतो यागः । न चानियतयागार्थमावाहनं शक्यते कर्तुम् । द्रव्यस्यानुनिष्पत्तौ संस्कारपरिलोप इति चेत् न, असति संस्काराभावात् । प्रतिपाद्याभावे यागाभावात् । कृतोऽपि संस्कारोऽनर्थक एव स्यात् ।

विज्ञायते च 'स वै वाजिनो नावाहयति' इति । किञ्च—

॥ एतादृगिति मन्यामहे पुरःप्रवृद्धानां परतन्त्रव्यपेतानां प्रतिषेधः
तल्लिङ्गत्वाच्छब्दस्य ॥ ४-४-१५ ॥

किञ्च एतादृगित्यनेन परतन्त्रप्रधानं परतन्त्रवाचा वक्ष्यते । यस्मादयं तल्लिङ्गः शब्दः यच्च किञ्चैतादृगिति । तस्मादेतेषु देवतावाहनं प्रतिषिध्यते । प्रदर्शनार्थं चैतत् । आवाहनेप्येवंजातीयकानि निगमानि[न]स्युः अनियततत्वाद्यागस्यैतेष्विति ।

॥ १० ॥ एकदेवतानां नानादेवतव्यपेतानां तन्त्रमावाहनं विभवात् ॥ ४ - ४ - १६ ॥

" राजन्यो[रजनो ?] वै कौणेयः क्रतुजितं जानकिं चक्षुर्वन्यमयात तस्मा एतामिष्टिं निरवपत् अग्नये भ्राजस्वते पुरोडाशमष्टाकपालं सौर्यं चरुं अग्नये भ्राजस्वते पुरोडाशमष्टाकपालं तयैवास्मिन् चक्षुरदधात् यश्चक्षुष्कामः स्यात् तस्मा एतामिष्टिं निर्वपेत " (तै. सं २-३ ४) इत्यत्र किं भ्राजस्वतीययोः समवेतयोः तन्त्रमावाहनं उत नेति सन्देहः । किं प्राप्तम् ? तन्त्रमिति । कुतः ? विभवात् । सकृदेव एवमाश्रुतं समानदेवतेष्वगृह्यमाणविशेषत्वात् तन्त्रेणोपकरोति । तन्त्रभावे क्रमविपर्यासोऽयौगपद्यादित्युक्तत्वात् । तस्मात् भ्राजस्वतीययोः तन्त्रेण देवतावाहनमिति प्राप्ते ब्रूमः—

॥ कालपृथक्त्वादभ्यावर्तेत ॥ ४-४-१७ ॥ (सि)

यागे पृथगेव मन्त्रः प्रयोक्तव्यः कालपृथक्त्वात् गृह्यमाणविशेषत्वात् । भ्राजस्वतीययोः भेदेनैव देवतावाहनं यथा प्रधानमन्त्रस्य हविर्भेदात् भेदेनैव प्रयोगः तद्वदत्रापि । यत्पुनरुक्तं--तन्त्रभावे क्रमविपर्यास इति । स्यादेतद्यदि सिद्धस्तन्त्रभावः स्यात् । स त्वसिद्धः तस्मात्तेनैव क्रमेण यागः । तेनैवावाहनम् । देवतावाहननियमांशस्यादृष्टार्थत्वात् । द्रव्ये व्रीह्यादिषु भिन्नयागसंबन्धिषु अवघातादीनां न तन्त्रताविरोधः तुषविमोकस्य दृष्टार्थतया प्रेक्षितत्वात् । अगृह्यमाणकालभेदेषु चतुष्कपालेषु तन्त्रमेव देवतावाहनमिति ।

॥ ११ ॥ पशावुत्तमे प्रयाजे स्रुगादापनो न विद्यते संप्रेषितत्वात् ॥ ४-४-१८ ॥

पशावुत्तमे प्रयाजे स्रुगादापनो निगदो न प्रयोक्तव्यः आहोस्वित् प्रयोक्तव्य इति सन्दिह्यते । किं प्राप्तम् ? न प्रयोक्तव्यो निगद इति । कथं ? प्रैषस्य प्रैषार्थसंप्रतिपत्त्यर्थत्वात् । प्रैषार्थप्रतिपत्तिश्च पूर्वमध्वर्योः प्रेषितत्वात् । जाते न पुनर्निगदेन प्रयोजनम् । संस्कारार्थत्वं च प्रतिपादितं—" संप्रैषेषु कर्मगर्हानुपालम्भसंस्कारत्वात् "—इति । तस्मान्न स स्रुगादापनो निगदो विद्यत इति प्राप्ते ब्रूमः—

॥ विद्यते वाऽन्यकालत्वाद्यथा याज्यासम्प्रैषो यथा याज्यासम्प्रैषः ॥ ४-४-१९ ॥

वाशब्दात्पक्षो विपरिवर्तते । वर्तते पश्चादुत्तमप्रयाजे स्रुगादापनम् । तस्यान्यत्वमध्यवसीयते । तत्कालप्रैषजनितसंस्कारः कर्मकालत्वाद्भिद्यते । तस्मात् भेदात्तदङ्गत्वात् प्रैषोऽप्यावर्तते । यथा आजस्वतीययोः याज्याप्रैषो भिद्यते—अग्निं आजस्वन्तं यजेति ।

इदं चोत्तमसूत्रे मङ्गलभिधायिपदं प्रयुक्तमाचार्येण । शास्त्रस्यादिमध्यावसानेषु मङ्गलार्थपदन्यासस्य अध्येतृषु श्रेयोनिमित्तत्वात् । तत्रादौ अथशब्दधर्मशब्दौ मङ्गळार्थौ । मध्येऽपि शतशो मङ्गलवादीनि पदानि विद्यन्त इति । विद्यत इति पदं मङ्गलार्थं(त्वात्) अथवा विद्यमानस्य प्रमाणोपपन्नस्य परिग्रहार्थम् । यजतिसम्बन्धं चोत्तमं पदं कथं नामाध्येतारो बहुयागसंबन्धिनो भवेयुरिति । पशुसम्बन्धं चाधिकरणमन्ते न्यस्तं अध्येतारः पशुमन्तो भवेयुः इति । संप्रैषश्चान्त्यपदं सकलशास्त्रार्थव्यवसायानुष्ठानाविर्भूते प्रतिष्ठिते श्रेयसि रमेरन्निति ।

॥ इति श्रीदेवस्वामिकृतौ सङ्कर्षकाण्डभाष्ये ॥

चतुर्थस्याध्यायस्य चतुर्थःपादः

**॥ समाप्तं चेदं सङ्कर्षकाण्डभाष्यम् ॥**

---

# APPENDIX A.

## INDEX OF SUTRAS

— :*: —

—:o:—

## Appendix B.

INDEX OF CITATIONS

32

—: o :—

## APPENDIX C

### ।। इतरग्रन्थेषु उदाहृतानां सङ्कर्षकाण्डीयसूत्राणां तद्भाष्यवाक्यानां च सूची ।।

| 1. शाबरभाष्यं | सङ्कर्षकाण्डः |
|---|---|
| (a) स्विष्टकृद्विकारश्च वनस्पतिरिति सङ्कर्षे | (a) S. K. 2-4-39 स्विष्टकृद्विकारे याज्यायां |
| (b) अवहननार्था वा यथा पत्नी | अवहननार्था वा यथापत्नी S. K. 1-1-36 |
| 2. ब्रह्मसूत्रभाष्याणि (श्रीशङ्कररामानुज श्रीकण्ठोपज्ञानि) तदुक्तं सङ्कर्षे-नाना वा देवता पृथग्ज्ञानात् (3-3-33) | नाना ना देवता पृथक्त्वात् S.K. 2-2-36 |
| 3. आपस्तम्बश्रौतसूत्राणां- | दीक्षणीयम्निर्धार्येत S. K. 3-2-26 |
| (a) धूर्तस्वामिभाष्यम् - दीक्षणीयाग्नेस्तु धारणं हिरण्यकेशिसङ्कर्षवचनात् (प्र. 10) | |
| (b) हिरण्यकेशिनः सङ्कर्षकारस्य च प्राजहितं (प्र. 11) | प्राजहितस्य वाऽपदेशात् S. K. 3-2-24 |
| (c) तन्त्रेणाग्निष्ठं परिधीयते (प्र. 14) | तन्त्रं यूपमन्त्रः S. K. 1-4-32 |
| (d) सङ्कर्षकारस्य तु पूर्वयोपधानं उत्तरयाऽभिमर्शनं (प्र. 16) | लोकं पृणयोपधाय सूददोहसेनाभि-मन्त्रणम् S. K. 2-1-80 |
| 4. भाट्टदीपिका | |
| सङ्कर्षे वक्ष्यमाणत्वात् 4-3-11 | दक्षिणाभेदाच्च S. K. 1-2-12 |

| | | |
|---|---|---|
| (b) क्रत्वङ्गत्वं चित्यङ्गत्वे (4-3-15) | क्रत्वङ्गत्वं वा | S. K. 1-1-15 |
| 5. भाट्टकौस्तुभः 3-2-28 यद्वा इत्यादि | तन्त्रं प्रदानं | 1-1-5 |
| 6. अध्वरमीमांसाकुतूहलवृत्तिः | | |
| (a) सङ्कर्षे द्वितीयचतुर्थे अदेवता-संयोगेनेत्यादि | अदेवता संयोगेन | S. K. 2-4-3 |
| (b) प्रकृतित इत्याश्मरथ्यः | प्रकृतित इत्याश्मरथ्यः | S. K. 4-2-2 |
| (c) ऋताषाडृतधामेति यथार्थविनिष्कर्षोऽर्थपृथक्त्वात् (P. 228) | ऋताषाडृतधामेति etc. | S. K. 2-4-42 |
| 7. कल्पतरुपरिमलः (P. 838) | | |
| (a) अनुयजतीत्यनुवषट्कारश्चोच्यते | S. K. 1-1-1 | |
| (b) पश्चादुत्तमप्रयाजे | S. K. 4-4-18 | |
| (c) विद्यते वाऽन्यकालत्वात् | S. K. 4-4-19 | |
| (d) देवताविधानरहितेषु | S. K. 2-4-2 | |
| (e) प्रयाजादिषु देवतावाचिनः समिदादिशब्दाः | S. K. 2-2-6 | |
| (f) अग्निं होत्रायावहेत्यादौ श्रुतोऽग्निः | S. K. 4-2-14 | |
| (g) यष्टव्या वनस्पतिदेवता यूपरूपाऽन्या वा | S. K. 2-2-4 | |
| (h) स्वाहा देवता आज्यपा इत्यत्र | S. K. 4-3-10 | |
| (i) ग्रहाणां वैराजस्य स्तोत्रायेत्यादि (P. 838) | S. K. 3-3-7 | |
| (j) यां देवतां वषट्करिष्यन् स्यात् | S. K. 4-3-11 | |
| (k) यजेति द्व्यक्षरं | S. K. 2-3-2 | |
| (l) आवह देवान् यजमानायेत्यादि | S. 4-2-16 | |
| (m) देवान् यजेति | S. K. 2-3-8 | |
| (n) याज्यानुवाक्याविनियोगपरं इत्यादि (P. 839) | S. K. Bhashya 2-2-37 | |

8. हेमाद्रिः

| | |
|---|---|
| सङ्कर्षकाण्डे देवस्वामिनाप्युक्तं यदि पूर्वाह्ने पर्वसन्धिः इत्यादि | यदि पूर्वाह्ने सम्भाव्येत [ समाप्येत ] Deva swamin's Bhashya P. 121 |

—: o :—

**Appendix D**

Authors referred to in the Sūtras

| | | | | |
|---|---|---|---|---|
| 1. | कार्ष्णाजिनिः | — | १-१-११ | |
| 2. | आलेखनः | — | २-२-४१ | ४-२-१ |
| 3. | आश्मरथ्यः | — | २-२-४२ | ४-२-२ |
| 4. | वादरायणः | — | 3-2-38 | |
| 5. | औडुलोमिः | — | 3-1-12 | |

—: o :—

